# मुद्रितग्रन्थानां सूचिपत्रम् ।

| | |
|---|---|
| ✲ १ श्रीवीतरागस्तोत्रम्–श्रीहेमचन्द्राचार्यकृतमूलम्, श्री प्रभानंदसूरिकृतविवरण–श्रीविशालराजशिष्यकृत-अवचूरिसमेतम् | ०—८—० |
| ✲ २ श्रीश्रमणप्रतिक्रमणसूत्रवृत्तिः–पूर्वाचार्यकृता | ०—१—३ |
| ✲ ३ श्रीस्याद्वादभाषा श्रीशुभविजयगणिकृता | ०—१—३ |
| ✲ ४ श्रीश्राद्धिकसूत्रम्–श्रीमतोदयसूरिकृतविवृत्युपेतम् | ०—६—० |
| ✲ ५ श्रीअध्यात्ममतपरीक्षा–न्यायाचार्यश्रीयशोविजयमोपाध्यायकृता स्वोपज्ञवृत्तियुता | ०—६—० |
| ✲ ६ पोडशकप्रकरणम्–श्रीहरिभद्रसूरिकृतमूलम् टीकाद्वयोपेतम् | ०—३—० |
| ✲ ७ श्रीकल्पसूत्रसुबोधिका वृत्तिः–श्रीविनयविजयोपाध्यायकृता | ०—१२—० |
| ✲ ८ श्रीवंदारुवृत्त्यपरनाम्नी श्राद्धप्रतिक्रमणसूत्रवृत्तिः–श्री महेन्द्रसूरिविरचिता | ०—८—० |
| ✲ ९ श्रीदानकल्पद्रुम अथवा धन्यचरित्र–श्रीसोमसुन्दर शिष्य श्रीजिनकीर्त्तिसूरिकृतः | ०—३—० |
| ✲ १० श्रीयोगफिलोसोफी–by श्री वीरचंद राघवजी | ०—५—० |
| ✲ ११ श्रीमत्स्यकथा–श्रीसुरत्नमण्डनकृता | ०—३—० |
| ✲ १२ श्रीयोगदृष्टिसमुच्चयः–श्रीमद्धरिभद्रसूरिकृत स्वोपज्ञवृत्तियुता | ०—३—० |
| १३ श्रीकर्मफीलोसोफी by श्रीरचंद राघवजी गांधी | ०—५—० |
| १४ श्रीआनंदकाव्यमहोदधि–मौक्तिक साधुकृता रासा | ०—१०—० |
| ✲ १५ श्रीधर्मपरीक्षा–श्रीधर्मसागरोपाध्यायशिष्यपद्मसागरगणिकृता | ०—१०—० |

✲ एवे ग्रन्था अधुना लभ्यन्ते न ।

○ ३५ सम्यक्त्वसप्ततिका–रुद्रपल्लीयश्रीसंघतिलकाचार्यकृता १—०—०
● ३६ श्रीउत्तराध्ययनानि (द्वितीय विभागः) शान्त्याचार्यविहितबृहद्वृत्तियुतानि १–१२–०
○ ३७ श्रीअनुयोगद्वारसूत्रम्–(द्वितीयो विभागः) मलधारगच्छीयाचार्यश्रीमद्धेमचन्द्राचार्यविरचितवृत्तियुतम् १—०—०
○ ३८ गुणस्थानक्रमारोहः–श्रीरत्नशेखरसूरिकृतः ०—९–०
○ ३९ श्रीधर्मसङ्ग्रहणी (पूर्वार्धं) श्रीमद्धरिभद्रसूरिविरचिता आचार्यमलयगिरिप्रणीतया टीकया युता १—८–०
○ ४० श्रीधर्मरत्नलघु–श्रीजयधर्मगणिविरचितः १—०—०

○ ४१ श्रीउत्तराध्ययनानि २९–३६ (तृतीयो विभागः) शान्त्याचार्यविहितबृहद्वृत्तियुतानि १–१४–०
४२ श्रीधर्मसङ्ग्रहणी–(उत्तरार्धं) श्रीमद्धरिभद्रसूरिविरचिता (मुद्रणमन्दिरे)
४३ काव्यमहोदधिमौक्तिकं पञ्चमम्–(मुद्रणमन्दिरे)
४४ श्रीपिण्डनिर्युक्तिः–श्रीमद्भद्रबाहुस्वामिप्रणीता समलङ्कृता श्रीमन्मलयगिर्याचार्यविवृत्या १—८–०

---

प्राप्तिस्थानम्—श्री नानचंद घेलचंद—
लायब्रेरीयन् शेठ देवचंद लालभाई जैनपुस्तकोद्धारफण्ड.
ठि. शेठ. देवचंद लालभाई धर्मशाला गोपीपुरा, बडेखां चकला सुरतसिटी.

● इमे ग्रन्थाः सम्प्रति विक्रीताः।

अर्हम्
श्रेष्ठि-देवचन्द्र लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्के—
श्रीमद्भद्रबाहुस्वामिप्रणीता—समाष्या—श्रीमन्मलयगिर्याचार्यविवृता,

# श्रीपिण्डनिर्युक्तिः ।

॥ ॐ नमो वीतरागाय ॥

जयति जिनवर्द्धमानः परहितनिरतो विधूतकर्म्मरजा[1] । मुक्तिपथचरणपोषकनिरवद्याहारविधिदेशी ॥ १ ॥
नत्वा गुरुपदकमलं गुरूपदेशेन पिण्डनिर्युक्तिम् । विवृणोमि समासेन स्पष्टं शिष्यावबोधाय ॥ २ ॥

आह—निर्युक्तयो न स्वतन्त्रशास्त्ररूपाः किन्तु तत्तत्सूत्रपरतन्त्राः, तथा तद्व्युत्पत्त्याश्रयणात्, तथाहि—सूत्रोपात्ता अर्थाः स्वरूपेण सम्बद्धा अपि शिष्यान् प्रति निर्युज्यन्ते—निश्चितं सम्बद्धा उपदिश्यन्ते व्याख्यायन्ते याभिस्ता निर्युक्तयः, भगवताऽपि च प्रत्यज्ञायि—'पिण्डनिर्युक्तिमहं विवृणोमि,' ततेषा पिण्डनिर्युक्तिः कस्य सूत्रस्य प्रतिबद्धेति ?, उच्यते, इह दशाध्ययनपरिमाणश्चूलिकायुगलभूषितो दशवै

१ सप्तर्म्य पू०

कालिको नाम श्रुतस्कन्धः, तत्र च पञ्चममध्ययनं पिण्डैषणानामकं, दशवैकालिकस्य च निर्युक्तिश्चतुर्दशपूर्वविदा भद्रबाहुस्वामिना कृता, तत्र पिण्डैषणाभिधपञ्चमाध्ययननिर्युक्तिरतिप्रभूतग्रन्थत्वात्पृथक् शास्त्रान्तरमिव व्यवस्थापिता, तस्याश्च पिण्डनिर्युक्तिरिति नाम कृतं, पिण्डैषणानिर्युक्तिः पिण्डनिर्युक्तिरिति मध्यमपदलोपिसमासाश्रयणात्, अत एव चादावत्र नमस्कारोऽपि न कृतो, दशवैकालिकनिर्युक्त्यन्तर्गतत्वेन तत्र नमस्कारेणैवात्र विघ्नोपशमसम्भवात्, शेषा तु निर्युक्तिर्दशवैकालिकनिर्युक्तिरिति स्थापिता ॥ अस्याश्च पिण्डनिर्युक्तेरादावियमर्थसङ्ग्रहगाथा—

पिंडे उग्गमउप्पायणेसणा [सं]जोयणा पमाणं च । इंगाल धूम कारण अट्ठविहा पिंडनिज्जुत्ती ॥ १ ॥

व्याख्या—'पिण्ड सङ्घाते' पिण्डनं पिण्डः—सङ्घातो बहूनामेकत्र समुदाय इत्यर्थः, समुदायश्च समुदायिभ्यः कथञ्चिदभिन्न इति त एव बहवः पदार्था एकत्र समुदिताः पिण्डशब्देनोच्यन्ते, स च पिण्डो यद्यपि नामादिभेदादनेकप्रकारो वक्ष्यते तथाऽपीह संयमादिरूपभावपिण्डोपकारको द्रव्यपिण्डो गृहीष्यते, सोऽपि च द्रव्यपिण्डो यद्यप्याहारशय्योपधिभेदात् त्रिप्रकारः, तथाऽप्यत्राहारशुद्धेः प्रक्रान्तत्वादाहाररूप एवाधिकरिष्यते, ततस्तस्मिन्नाहाररूपे पिण्डे विषयभूते प्रथमत उद्गमो वक्तव्यः, तत्र उद्गमः उत्पत्तिरित्यर्थः, उद्गमशब्देन च इह उद्गमगता दोषा अभिधीयन्ते, तथाविवक्षणात्, ततोऽयं वाक्यार्थः—प्रथमत उद्गमगता आधाकर्मिकादयो दोषा वक्तव्याः, ततः 'उप्पायण'त्ति उत्पादनमुत्पादना, धात्रीत्वादिभिः प्रकारैः पिण्डस्य सम्पादनमिति भावः, सा वक्तव्या, किमुक्तं भवति ?—उद्गमदोषाभिधानानन्तरमुत्पादनादोषा धात्रीत्वादयो वक्तव्याः, ततः 'एसण' त्ति एषणमेषणा सा वक्तव्या, एषणा त्रिधा—तद्यथा—गवेषणैषणा ग्रहणै-

षणा ग्रासैषणा च, तत्र गवेषणे—अन्वेषणे एषणा—अभिलाषो गवेषणैषणा, एवं ग्रहणैषणा ग्रासैषणाऽपि भावनीये, तत्र गवेषणैषणा उद्गमोत्पादनाविषयेति तद्ग्रहणेनैव गृहीता द्रष्टव्या, ग्रासैषणा त्वव्यवहारविषया, ततः संयोजनादिग्रहणेन सा गृहीष्यते, तस्मादिह पारिशेष्यादेषणाशब्देन ग्रहणैषणा गृहीता द्रष्टव्या, ग्रहणैषणाग्रहणेन च ग्रहणैषणागता दोषा वेदितव्याः, तथाविवक्षणात्, ततोऽयं भावार्थः—उत्पादनादोषाभिधानानन्तरं ग्रहणैषणागता दोषाः शङ्कितम्रक्षितादयोऽभिधातव्याः, ततः संयोजना वक्तव्या, तत्र संयोजनं संयोजना—द्रव्या रसोत्कर्षसम्पादनाय सुकुमारिकादीनां खण्डादिभिः सह मीलनं, सा द्रव्यभावभेदाद् द्विधा, वक्ष्यति च—'दव्वे भावे संयोजणा य' इत्यादि, ततः प्रमाणं कवलसङ्ख्यालक्षणं वक्तव्यं, चकारः समुच्चये, स च भिन्नक्रमत्वात्कारणशब्दानन्तरं द्रष्टव्यः, ततः, 'इंगाल धूम' त्ति अङ्गारदोषो धूमदोषश्च यथा भवति तथा वक्तव्यं, तदनन्तरं 'कारण' त्ति यैः कारणैराहारो यतिभिरादीयते यैस्तु न तानि कारणानि च वक्तव्यानि, सूत्रे च विभक्तिलोप आर्षत्वात्, तदेवम् 'अट्ठविहा' अष्टप्रकारा अष्टभिरर्थाधिकारैः सम्बद्धेति भावार्थः, पिण्डनिर्युक्तिः—पिण्डैषणानिर्युक्तिः ॥ स्यादेतत्, एतेऽष्टावप्यर्थाधिकाराः किं कुतश्चित्सम्बन्धविशेषादायाताः उत यथाकथंचिद्वक्तव्याः? उच्यते, सम्बन्धविशेषादायाताः, तथाहि—पिण्डैषणाऽध्ययननिर्युक्तिर्वक्तुमुपक्रान्ता, पिण्डैषणाऽध्ययनस्य चत्वार्यनुयोगद्वाराणि, तद्यथा—उपक्रमो निक्षेपोऽनुगमो नयश्च, तत्र नामनिष्पन्ने निक्षेपे पिण्डैषणाऽध्ययनमिति नाम, ततः पिण्ड इति अध्ययनमिति च व्याख्येयं, तत्राध्ययनमिति प्रागेव द्रुमपुष्पिकाऽध्ययने व्याख्यातम्, इह तु पिण्ड इति व्याख्येयं, तत एव एषणा, एषणा च गवेषणैषणा ग्रहणैषणा ग्रासैषणा च, गवेषणैषणादयश्च उद्गमादिनिपातास्ततस्ते वक्तव्या इत्यष्टौ पिण्डादयोऽर्थाधिकाराः ॥ तत्र प्रथमतः पिण्ड इति व्याख्यायते, व्याख्या च तत्त्वभेदपर्यायैः, अतः प्रथमतः पिण्डशब्दस्य पर्यायानभिधित्सुराह—

पिंड निकाय समूहे संपिंडण पिंडणा य समवाए । समुसरण निचय उवचय चए य जुम्मे य रासी य ॥ २ ॥

व्याख्या—एते सर्वेऽपि सामान्यतः पिण्डशब्दस्य पर्यायाः, विशेषापेक्षया तु कोऽपि क्वापि रूढः, तत्र पिण्डशब्दो गुडपिण्डादिरूपे सङ्घाते रूढो, निकायशब्दो भिक्षुकादिसङ्घाते, समूहशब्दो मनुष्यादिसमुदाये, संपिण्डनशब्दः खेत्रादीनां खण्डपाकादेश्च परस्परं सम्यक् संयोगे, पिण्डनाशब्दोऽपि तत्रैव, केवल मीलनमात्रे संयोगे, समवायशब्दो वणिगादीनां सङ्घाते, समवसरणशब्दः तीर्थकृतः सदेवमनुजासुराणां पर्षदि, निचयशब्द शूकरादिसङ्घाते, उपचयशब्दः पूर्वावस्थातः प्रचुरीभूते सङ्घातविशेषे, चयशब्द इष्टिकारचनाविशेषे, युग्मशब्दः पदार्थद्वयसङ्घाते, राशिशब्दः पूगफलादिसमुदाये, तदेवमिह यद्यपि पिण्डादयः शब्दाः लोके प्रतिनियत एव सङ्घातविशेषे रूढाः, तथाऽपि सामान्यतो यद् व्युत्पत्तिनिमित्तं सङ्घातत्वमात्रलक्षणं तत्सर्वेषामप्यविशिष्टमितिकृत्वा सामान्यतः सर्वे पिण्डादयः शब्दा एकार्थिका उक्ताः, ततो न कश्चिद्विरोधः ॥ तदेवं पिण्डशब्दस्य पर्यायानभिधाय सम्प्रति भेदानाचिख्यासुराह—

पिंडस्स उ निक्खेवो चउक्कओ छक्कओ व कायव्वो । निक्खेवं काऊणं परूवणा तस्स कायव्वा ॥ ३ ॥

व्याख्या—'पिण्डस्य' प्रागुक्तशब्दार्थस्य तुशब्दः पुनरर्थे, स च निक्षेपशब्दानन्तरं योज्यो, 'निक्षेपो' नामादिन्यासरूपः, पुनश्चतुष्कः षट्को वा कर्तव्यः, तत्र चत्वारः परिमाणमस्येति चतुष्कः, "सङ्ख्याडतेश्चाशत्तिष्टेः कः" इति कः प्रत्ययः, ततो भूयः स्वार्थिककप्रत्ययविधानाच्चतुष्ककः, एवं षट्ककोऽपि वाच्यः, इह यत्र वस्तुनि निक्षेपो न सम्यग् विस्तरतोऽवगम्यतेऽवगतो वा विस्मृतिपथमुपगतस्तत्राप्यवश्यं नामस्थापनाद्रव्यभावरूपश्चतुष्कको निक्षेपः कर्तव्य इति प्रदर्शनार्थं चतुष्कग्रहणं, यत्र तु तथाविधगुरुस-

म्नत्रायतः सविस्तरमधिगतो भवति नाप्यधिगतो विस्मृतिपथमुपगतस्तत्र सविस्तरं निक्षेपो वक्तव्य इति प्रायमदक्षेनायं षट्कक्रमग्रहणं, यथा चोक्तं—"जत्थ य जं जाणिज्जा निक्खेवं निक्खिवे निरवसेसं । जत्थ वि य न जाणिज्जा चउक्कयं निक्खिवे तत्थ"[1] ॥ १ ॥ तदमैतदप्युक्तं भवति—यदि षट्को निक्षेपः सम्यगधिगतो भवति अधिगतोऽपि च न विस्मृतस्तदा षट्करूपो निक्षेपः कर्तव्यः, अन्यथा तु नियमतश्चतुष्करूप इति । एवं च निक्षेपं कृत्वा तस्य पिण्डस्य प्ररूपणा कर्तव्या, येन पिण्डेनाधिकारः स पिण्डः प्ररूपणीय इति भावार्थः । इयमेव च नामादिभेदोपन्यासेन व्याख्यायाः फलं यदुत यावन्तो विवक्षितशब्दवाच्याः पदार्थाः घटन्ते तान् सर्वानपि यथास्वरूपं वैविक्त्येनोपदर्श्य येन केनचिदप्यन्यतमेन प्रयोजनं स युक्तिपूर्वकमधिक्रियते शेषास्त्वपाक्रियन्ते तथा चोक्तम्—' अप्रस्तुतार्थापाकरणात्प्रस्तुतार्थव्याकरणाच्च निक्षेपः फलवानि'ति, इह 'चतुष्कः षट्को वा निक्षेपः कर्तव्य' इत्युक्तं तत्र नानिर्दिष्टस्वरूपं चतुष्कं षट्कं वा निक्षेपं शिष्याः स्वयमेवावगन्तुमीशास्ततोऽवश्यं तत्स्वरूपं निर्देष्टव्यं, तत्र षट्के निर्दिष्टे तदन्तर्गतत्वाच्चतुष्कोऽर्थान्निर्दिष्टो भवति, तत स एव षट्कनिक्षेपो निर्दिश्यते इति, तदृष्टान्तपुरस्सरं प्रतिपिपादयिषुराह—

कुलए उ चउब्भागस्स संभवो छक्कए चउण्ह च । नियमेण संभवो अत्थि छक्कग निक्खिवे तम्हा ॥ ४ ॥

व्याख्या—यथा 'कुडके' षट्सेतिकाप्रमाणे चतुर्भागस्य—सेतिकाप्रमाणस्य सम्भवो—विद्यमानताऽवश्यं भाविनी, एवं षट्के निक्षेपे

---

१ यत्र च यं जानीयात् निक्षेपं निक्षिपेत् निरवशेषम् । यत्रापि च न जानीयात् चतुष्कं निक्षिपेत्तत्र ॥ १ ॥

चतुर्णां निक्षेपस्य—चतुष्करूपस्य निक्षेपस्य नियमेन—अवश्यंतया सम्भवोऽस्ति, ततस्तमेव पदकमिह निक्षिपामि—पदकरूपमेव निक्षेपं प्ररूपयामि, तस्मिन् प्ररूपिते तस्यापि चतुष्करूपस्य निक्षेपस्य प्ररूपितत्वभावादिति भावार्थः ॥ प्रतिज्ञातमेव निर्वाहयति—

नामं ठवणापिंडो दव्वे खेत्ते य काल भावे य। एसो खलु पिंडस्स उ निक्खेवो छव्विहो होइ ॥ ५ ॥

व्याख्या—'नामं' ति नामपिण्डः स्थापनापिण्डः 'द्रव्ये' द्रव्यविषयः पिण्डो द्रव्यपिण्ड', द्रव्यस्य पिण्ड इत्यर्थ', तथा 'क्षेत्रे' क्षेत्रस्य पिण्डः, एवं कालपिण्डो भावपिण्डश्च, 'एषः' अनन्तरोक्तः खलु 'पिण्डस्य' पिण्डशब्दस्य निक्षेपो भवति ॥ तत्र नामपिण्डस्य व्याख्यानाय स्थापनापिण्डस्य तु सम्बन्धनायाह—

गोण्णं समयकयं वा ज वावि हवेज्ज तदुभएण कय । त बिंति नामपिंडं ठवणापिंड अओ वोच्छ ॥ ६ ॥

व्याख्या—इह यत् पिण्ड इति वर्णावलीरूपं नाम स नामपिण्डः, नाम चासौ पिण्डश्च नामपिण्ड इति व्युत्पत्तेः, नाम च चतुर्द्धा, तद्यथा—गौण समयजं तदुभयजमनुभयजं च, तत्र गुणादागतं गौणम्, अथ कोऽसौ गुण ? कथं च तत आगतम् ?, उच्यते, इह शब्दस्य व्युत्पत्तिनिमित्तं योऽर्थो यथा ज्वलनस्य दीपनं 'ज्वल दीप्ता' विति वचनात् स गुणः, गुणश्चेह परतन्त्रो विवक्षितो न पारिभाषिको रूपादि', तेन यच्छब्दस्य वस्तुनि प्रवर्त्तमानस्य व्युत्पत्तिनिमित्तं द्रव्यं गुणः क्रिया वा स गुण इत्यभिधीयते, तत्र द्रव्यं व्युत्पत्तिनिमित्तं शृङ्गी दन्ती विषाणीत्यादौ, गुणो जातरूपं सुवर्णं स्वादुरसा श्वेत इत्यादौ, क्रिया तपनः श्रमणो दीप्तो हिंस्रो ज्वलन इत्यादौ, जातिस्तु नाम्ना व्युत्पत्तिनिमित्तं न भवति, किन्तु प्रवृत्तिनिमित्तं यथा गोशब्दस्य गोजातिः, तथाहि—गोशब्दस्य गमनक्रिया व्युत्पत्तिनिमित्तं, न गोत्वं, गच्छतीति गौरिति व्युत्पत्तेः, केवलमेकार्थसमवायवशाद्गमनक्रियया खुरककुदलाङ्गूलसास्नादिमत्त्व प्रवृत्तिनिमित्तमुपलक्ष्यते इति ग-

च्छत्यगच्छति वा गोपिण्डे गोशब्दस्य प्रवृत्तिः, एवं सर्वेष्वपि जातिशब्देषु नामसु व्युत्पत्तिनिमित्तवत्त्वं भावनीयं, ये तु जातिशब्दा व्यु-त्पत्तिरहिता यथाकथञ्चिज्जातिमत्सु रूढिमुपागतास्तेषु व्युत्पत्तिनिमित्तमेव नास्तीति कुतस्तत्र जातेर्व्युत्पत्तिनिमित्तत्वप्रसङ्गः ?, तस्माज्जातिः परतन्त्रापि न शब्दस्य व्युत्पत्तिनिमित्तमिति न सा गुणग्रहणेन गृह्यते, ये तु गोत्वविशिष्टा गोमानित्यादयो जातिव्युत्पत्तिनिमित्ता न ते नामरूपा इति न तैर्व्यभिचारः, ततो गुणादागतं गौणं, व्युत्पत्तिनिमित्तं द्रव्यादिरूपं गुणमधिकृत्य यद्वस्तुनि प्रवर्तते नाम तद्गौणनामेति भावार्थः, एतदेव च नाम लोके यथार्थमित्याख्यायते, तथा तदभयजं यदन्वर्थरहितं समय एव प्रसिद्धं यथोदनस्य प्राकृतिकेति नाम, उभयजं यद्गुणनिष्पन्नं समयप्रसिद्धं च, यथा धर्मध्वजस्य रजोहरणमिति नाम, इदं हि समयप्रसिद्धमन्वर्थयुक्तं च, तथाहि—बाह्यमाभ्यन्तरं च रजो ह्रियते अनेनेति रजोहरणं, तत्र बाह्यरजोऽपहारित्वमस्य सुप्रतीतम्, आन्तररजोऽपहरणसमर्थाश्च परमार्थतः संयमयोगाः, तेषां च कारणमिदं धर्मलिङ्गमिति कारणे कार्योपचाराद्रजोहरणमित्युच्यते, उक्तं च—"हरइ रयो जीवाणं बज्झं अब्भिंतरं च जं तेण । रयहरणंति पवुच्चइ कारण-कज्जोवयाराओ ॥ १ ॥ संयमजोगा इत्थं रओहरा तेसि कारणं जेणं । रयहरणं उवयारा भण्णइ तेणं रओ कम्मं ॥ २ ॥" अनुभयजं यदन्वर्थरहितं समयाप्रसिद्धं च, यथा कस्यापि पुंसः शौर्यक्रौर्यादिगुणासम्भवेनोपचाराभावे सिंह इति नाम, यद्वा देवा एनं देयासुरिति व्युत्पत्तिनिमित्तासम्भवे देवदत्त इति नाम । एवं पिण्ड इति वर्णावलीरूपमपि नाम गौणादिभेदाच्चतुर्धा, तत्र यदा बहूनां सजातीयानां विजातीयानां वा कठिनद्रव्याणामेकत्र पिण्डने पिण्ड इति नाम प्रवर्तते तद्गौणं, व्युत्पत्तिनिमित्तस्य वाच्ये विद्यमानत्वात्, यदा तु समयपरिभा

---

१ हरति रजो जीवानां बाह्यमाभ्यन्तरं च येन । रजोहरणमिति प्रोच्यते कारणे कार्योपचारात् ॥ १ ॥ संयमयोगा अत्र रजोहरकास्तेषां कारणं येन । रजोहरणमुपचारात् भण्यते तेन रजः कर्म ॥ २ ॥

यथा पानीयेऽपि पिण्ड इति नाम प्रयुज्यते तथा समयजं, लोके हि कठिनद्रव्याणामेकत्र संश्लेषे पिण्ड इति प्रतीतं, न तु द्रवद्रव्यसङ्घाते, ततः पिण्डनं पिण्ड इति व्युत्पत्त्यर्थाघटनाच्च गौणम्, अथ च समये प्रसिद्धं, तथा च आचाराङ्गे द्वितीये श्रुतस्कन्धे प्रथमे पिण्डैषणाभिधाने-ऽध्ययने सप्तमोद्देशकसूत्रे 'से भिक्खू वा भिक्खुणी वा गाहावइकुलं पिंडवायपडियाए अणुपविट्ठे समाणे से जं पुण पाणगं जाणेज्जा, तंजहा—तिलोदगं वा तुसोदगं वा' इत्यादि, अत्र पानीयमपि पिण्डशब्देनाभिहितं, ततः पानीये पिण्ड इति नाम समयप्रसिद्धं, न चान्वर्थयुक्त-मिति समयजमित्युच्यते, यदा पुनर्भिक्षुर्भिक्षुकी वा भिक्षार्थं प्रविष्टः सती गृहपतिकुले गुडपिण्डमोदनपिण्डं सक्तुपिण्डं वा लभते तदा पि-ण्डशब्दस्तत्र प्रवर्तमान उभयजः, समयप्रसिद्धत्वादन्वर्थयुक्तत्वाच्च, यदा पुनः कस्यापि मनुष्यस्य पिण्ड इति नाम क्रियते न च शरीरा-वयवसङ्घातविवक्षा तदा तदनुभयजं ॥ सम्प्रति गाथाक्षराणि विव्रियन्ते—यत्पिण्ड इति नाम गौणं, यच्च समयकृतं—समयप्रसिद्धं, यच्च भवे-त्तदुभयकृतम्, उभयं—गुणः समयश्च तच्चोभयं च तदुभयं तेन कृतं तदुभयकृतं, समयप्रसिद्धमन्वर्थयुक्तं चेत्यर्थः, अपिशब्दाद्यदनुभय-जमन्वर्थविकलं समयाप्रसिद्धं च तन्नामपिण्डं ब्रुवते तीर्थकरगणधराः, अत ऊर्ध्वं स्थापनापिण्डमहं वक्ष्ये ॥ एनामेव गाथां भाष्यकृत्समयज्ञं व्याचिख्यासुः प्रथमं गौणं नाम व्याख्यानयन्नाह—

गुणनिप्फन्नं गोण्णं तं चेव जहत्थमत्थवी बेंति । तं पुण खवणो जलणो तवणो पवणो पईवो य ॥ १ ॥ (भा०)

व्याख्या—गुणेन परतन्त्रेण व्युत्पत्तिनिमित्तेन द्रव्यादिना यन्निष्पन्नं नाम तद्गौणं, यत्र (स्य) गुणैर्निष्पन्नं तद्गुणात्तस्मिन् वस्तुन्यागतमिति " तत आगत " इत्यनेनाण्प्रत्ययः, तदेव च गौणं नाम 'अर्थविदः' शब्दार्थविदो यथार्थं ब्रुवते, गौणं च नाम त्रिधा, तद्यथा—द्रव्यनिमित्तं गुणनिमित्तं क्रियानिमित्तं च, एतच्च प्रागेव भावितं, तत्र पिण्ड इति नाम क्रियानिमित्तं, पिण्डनमिति व्युत्पत्तेः, तत

उदाहरणान्यपि क्रियानिमित्तान्येव दर्शयति—'सं पुण' इत्यादि, यत्पुनर्गौणं नाम क्षपण इत्यादि, तत्र क्षपयति कर्माणीति क्षपणः—क्षपकर्षिः, इह क्षपकर्षेः क्षपणलक्षणां क्रियामधिकृत्य क्षपण इति नाम प्रवृत्तमतो गौणम्, एवं शेषेष्वप्युदाहरणेषु भावना कार्या, तथा ज्वलतीति ज्वलनो—वैश्वानरः, तपतीति तपनो—रविः, पवते पुनातीति वा पवनो—वायुः, प्रदीप्यते इति प्रदीपः दीपकलिका, चकारोऽन्येषामप्येवंजातीयानामुदाहरणानां समुच्चयार्थः ॥ तदेवं सामान्यतो गौणं नाम व्याख्यातं, सम्प्रति पिण्ड इति नाम गौणं क्षपकवं च व्याचिख्यासुराह—

पिंडण बहुदव्वाणं पडिवक्खेणावि जत्थ पिंडक्खा । सो समयकओ पिंडो जह सुत्तं पिंडपडियाई ॥ २ ॥ (भा०)

व्याख्या—बहूनां सजातीयानां विजातीयानां वा कठिनद्रव्याणां यत् पिण्डनम्—एकत्र संश्लेषस्तत्र पिण्ड इति नाम प्रवर्तमानं गौणमिति क्षेपो, व्युत्पत्तिनिमित्तस्य तत्र विद्यमानत्वात्, तथा प्रतिपक्षेणाप्यत्र प्रकरणात्प्रतिपक्षशब्दः कठिनद्रव्यसंश्लेषाभाववाची, ततोऽयमर्थः—यत्र प्रतिपक्षेणापि—बहूनां द्रव्याणां मीलनमन्तरेण तावत्पिण्ड इति नाम प्रवर्तत एव, न काचित्तत्र व्युत्पत्तिरित्यपिशब्दार्थो, समयसिद्धया 'पिण्डाख्या' पिण्ड इति नाम, स पिण्डाख्यावानामपिण्ड' समयकृत इत्युच्यते, तत्र नामनाम्नोरभेदोपचारादेवं निर्देशः, उपचाराभावे त्वयमर्थः—यत्र वस्तुनि तत्पिण्ड इति नाम समयकृतमिति, एतदेव दर्शयति—'जह सुत्तं पिंडपडियाई' यथेत्युपदर्शने पिण्डेति पिण्डपातग्रहणं, तत एवं गाथायां निर्देशो द्रष्टव्यः—'पिंडवायपडियाए' इत्यादि, आदिशब्दात् 'पविट्ठे समाणे' इत्यादिसूत्रपरिग्रहः, तच प्रागेव दर्शितम्, इयमत्र भावना—अत्र सूत्रे प्रभूतकठिनद्रव्यपरस्परसंश्लेषाभावेऽपि पानीये पिण्ड इति नामान्वर्थरहितं समयप्रसिद्ध्या प्रयुज्यते, अत इदं समयकृतमभिधीयते इति ॥ सम्प्रत्युभयजं पिण्ड इति नाम दर्शयति—

जस्स पुण पिंडवायट्ठया पविट्ठस्स होइ संपत्ती । गुडओयणपिंडेहिं त तदुभयपिंडमाहंसु ॥ ३ ॥ (भा०)

व्याख्या—यस्य पुनः कस्यचित्पिण्डपातार्थतया—पिण्डपातः—आहारलाभस्तदर्थतया साधोर्गुडपिण्डं प्रविष्टस्य सतो भवति या स-म्भाषा, 'गुडमोयणपिंडो' त्ति 'व्यस्तयाऽप्यासा' मिति प्राकृतलक्षणवशात्पञ्चम्यर्थे तृतीया, ततोऽयमर्थो—गुडौदनपिण्डयोर्गुडपिण्डस्यौदन पिण्डस्य चेत्यर्थः, गुडौदनग्रहणमुपलक्षणं, तेन सक्तुपिण्डादेश्च वा सम्भाषितं गुडपिण्डादिकं तदुभयपिण्ड गुणनिष्पन्नसमयप्रसिद्धपिण्ड शब्दवाच्यमुभयत्वलक्षणत्वात्, इहापि नामनामवतोरभेदोपचारादेवं गाथायां निर्देशः, उपचाराभावे त्वयं भावार्थः—तद्विषयं पिण्ड इति नाम उभयजम्, अन्वर्थयुक्तत्वात्समयप्रसिद्धत्वाच्चेति ॥ सम्प्रत्युभयातिरिक्तं सामान्यतो नाम प्रतिपादयति—

उभयाइरित्तमहवा अन्नं पि हु अत्थि लोइय नाम । अत्ताभिप्पायकयं जह सीहगदेवदत्ताई ॥ ४ ॥ (भा०)

व्याख्या—'अथवे'ति नामप्रकारान्तरद्योतकः, 'उभयातिरिक्तं' गौणसमयजातिरिक्तम्, अन्यदप्यस्ति 'लौकिकं' लोके प्रसिद्धम् आत्माभिप्रायकृतं नाम, स्वाभिप्रायमिति भावार्थः, तदेवोदाहरणेन समर्थयमान आह—यथा सिंहकदेवदत्तादि, आदिशब्दाद्यज्ञदत्तादिपरिग्रहः, इदं हि सिंहदेवदत्तादिकं नाम शौर्यक्रौर्यादिगुणनिबन्धनोपचाराभावे देवा एनं देयासुरिति व्युत्पत्त्यर्थासम्भवे च यस्य कस्यचिदात्माऽभिप्रायवशाद्विधीयमानं न गौणमन्वर्थविकलत्वान्नापि समयप्रसिद्धमत उभयातिरिक्तमिति, एवं पिण्ड इत्यपि नाम उभयातिरिक्तं भावनीयं ॥ ननु पिण्ड इति नाम निर्युक्तिगाथायामुभयातिरिक्तं नोपन्यस्तं, तत्कथं भाष्यकृता व्याख्यायते ?, तदयुक्तं, नोपन्यस्तमित्यसिद्धेः, अपिशब्देन तत्र सूचितत्वात्, तथा चाह भाष्यकृत्—

गोण्णसमयाइरित्तं इणमन्नं पाऽभिहियं नाम । जह पिंडउत्ति कीरइ कस्सइ नाम मणूसस्स ॥ ५ ॥ (भा०)

व्याख्या—इदं पिण्ड इति नाम अन्यद्वा 'गौणसमयातिरिक्त' गौणसमयजाभिप्रायसम्बन्धशून्यत्वमस्य, तदेव दर्शयति—यथा कस्यापि मनुष्यस्य पिण्ड इति नाम क्रियते, तद्धि न गौणं मधूच्छिष्टसंश्लेषासम्भवाच्छरीरावयवसमुदायस्य चाविवक्षणात् नापि समयकृतम्, अत इदमुभयातिरिक्तमिति। ननु समयकृतोभयातिरिक्तयोर्न कश्चित्परस्परं विशेष उपलभ्यते, उभयमप्यन्वर्थविकलत्वादाभिप्रायिकत्वाविशेषात्, तत्कथं द्वयोरुपादानं?, साङ्केतिकमित्येकोऽस्त्वाम्, एवं हि द्वयोरपि ग्रहणं भवति, तदयुक्तम्, अभिप्रायापरिज्ञानात्, इह हि यल्लौकिकं नाम साङ्केतिकं तत्पृथग्जनाः सामयिकाश्च व्यवहरन्ति, यत्पुनः समय एव साङ्केतिकं तत्सामयिका एव न पृथग्जनाः॥ तथा चाह भाष्यकृत्—

तुल्लेऽवि अभिप्पाए समयपसिद्धं न गिण्हए लोओ। जं पुण लोयपसिद्धं तं सामइया उवचरन्ति॥ ६॥ (भा०)

व्याख्या—इहाभिप्रायशब्देन पदैकदेशे पदसमुदायोपचारादभिप्रायकृतत्वमुच्यते, ततोऽयमर्थः—अभिप्रायेण—इच्छामात्रेण कृतं, न तु वस्तुतत्त्ववृत्तमभिप्रायकृतं, तस्य भावोऽभिप्रायकृतत्वं साङ्केतिकत्वमित्यर्थः, तस्मिंस्तुल्येऽपि—समानेऽपि, आस्तामसमाने इत्यपिशब्दार्थः,' समयप्रसिद्धं 'लोकः' पृथग्जनरूपो न गृह्णाति—न समयप्रसिद्धेन साङ्केतिकेन नाम्ना व्यवहरति, न खलु पृथग्जनो भोजनादिकं समुद्देशादिना समयप्रसिद्धेन साङ्केतिकेन नाम्ना व्यवहरति, यत्पुनर्लोकप्रसिद्धं तत्पृथग्जनाः सामयिकाश्च व्यवहरन्ति, तत इत्थं समयकृतोभयातिरिक्तयोः स्वभावभेदाद् द्वयोरपि पृथगुपादानमर्थवत्, एतेन गौणोभयकृतयोरपि स्वभावभेदसूचनेन पृथगुपादानं सार्थकमुपपादितं द्रष्टव्य, तथाहि—यद्यपि गौणमुभयकृतं चान्वर्थयुक्तत्वेनाविशिष्टं, तथापि यद्गौणं तत्पृथग्जनाः सामयिकाश्च व्यवहरन्ति, यत्पुनः समयप्रसिद्धं गौणं तत्सामयिका एव न पृथग्जनाः, तेषां तेन प्रयोजनाभावात्, समयप्रसिद्धेन हि नाम्ना गौणेनापि यथोक्तसमयपरिपाटनिष्पन्नचेतसां पुरी

इक्को उ असब्भावे तिण्ह ठवणा उ होइ सब्भावे । चित्तेसु असब्भावे [illegible] सियरो ॥ ७ ॥ (भा०)

व्याख्या—एकोऽक्षो वराटकोऽङ्गुलीयकादिर्वा यदा पिण्डत्वेन स्थाप्यते तदा सा पिण्डस्थापना 'असद्भावे' असद्भावविषया, असद्भाविकीत्यर्थः, तत्र पिण्डाकृतेरनुपलभ्यमानत्वात्, अक्षादिगतपरमाणुसङ्घातस्य चाविवक्षणात् । यदा तु त्रयाणामक्षाणां वराटकानामङ्गुलीयकादीनां वा परस्परमेकत्र संश्लेषकरणेन पिण्डत्वेन स्थापना तदा सा पिण्डस्थापना 'सद्भावे' सद्भाविकी, तत्र पिण्डाकृतेरुपलभ्यमानत्वात्, त्रयाणांचेत्युपलक्षणं तेन द्वयोरपि बहूनां चेत्यपि द्रष्टव्यं । तथा 'चित्रेषु' चित्रकर्मसु यदेकबिन्द्वालिखनेन पिण्डस्थापना तदा साऽप्यसद्भावे, यदा तु चित्रकर्मस्वपि अनेकबिन्दुसंश्लेषालिखनेन समूहद्रव्यसद्भावात्मकपिण्डस्थापना तदा सा सद्भावस्थापना, पिण्डाकृतेस्तत्र दर्शनात् । तथा दारुकलेप्योपलेषु पिण्डाकृतिसम्पादनेन या पिण्डस्य स्थापना स 'इतर' सद्भावस्थापनापिण्डः, तत्र पिण्डाकारस्य दर्शनात् ॥ तदे तदुक्तः स्थापनापिण्डः, सम्प्रति द्रव्यपिण्डस्यावसरः, स च द्विधा—आगमतो नोआगमतश्च, तत्राऽऽगमतः पिण्डशब्दार्थस्य ज्ञाता तत्र चानुपयुक्तः 'अनुपयोगो द्रव्य' मिति वचनात्, नोआगमतस्त्रिधा, तद्यथा—ज्ञशरीरद्रव्यपिण्डः भव्यशरीरद्रव्यपिण्डः ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यपिण्डश्च, तत्र पिण्डशब्दार्थज्ञस्य यच्छरीरं सिद्धशिलातलादिगतमपगतजीवितं तद् भूतपिण्डशब्दार्थपरिज्ञानकारणत्वात् ज्ञशरीरद्रव्यपिण्डः, यस्तु बालको नेदानीमवबुध्यते पिण्डशब्दार्थम् अथ चावश्यमायत्यां तेनैव शरीरेण परिवर्द्धमानेन भोत्स्यते स भावपिण्डशब्दार्थपरिज्ञानकारणत्वाद् भव्यशरीरद्रव्यपिण्डः ॥ ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यपिण्डं निर्युक्तिकृदाह—

तिविहो उ दव्वपिंडो सचित्तो मीसओ अचित्तो य । एक्केक्कस्स य एत्तो नव नव भेआ उ पत्तेयं ॥ ८ ॥

व्याख्या—अशरीरभव्यशरीरव्यतिरिक्तो द्रव्यपिण्डस्त्रिधा, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, तत्र मिश्रः सचित्ताचित्तरूपः, इह पृथिवीकायादिकः पिण्डत्वेनाभिधास्यते, स च पूर्वं सचित्तो भवति, ततः स्वकायपरकायादिभिः प्रासुकीक्रियमाणः कियन्तं कालं मिश्रो भवति, तत ऊर्ध्वमचित्तः, तत एतदर्थस्थापनार्थं सचित्तमिश्राचित्ताः क्रमेणोक्ताः । 'इतो' भेदत्रयाभिधानादनन्तरम् 'एकैकस्य' सचित्तादेर्भेदस्य प्रत्येकं नव नव भेदा ज्ञातव्या भवन्ति ॥ तानेव नव नव भेदानाह—

पुढवी आउक्काओ तेऊ वाऊ वणस्सई चेव । बेइंदिय तेइंदिय चउरो पचेंदिया चेव ॥ ९ ॥

व्याख्या—इह पिण्डशब्दः पूर्वगाथातोऽनुवर्तमानः प्रत्येकं सम्बध्यते, तद्यथा—पृथिवीकायपिण्डोऽप्कायपिण्डस्तेजस्कायपिण्डो वायुकायपिण्डो वनस्पतिकायपिण्डो द्वीन्द्रियपिण्डस्त्रीन्द्रियपिण्डश्चतुरिन्द्रियपिण्डः पञ्चेन्द्रियपिण्डश्च ॥ सम्प्रत्यमीषामेव नवानां भेदानां सचित्तत्वादिक त्रिभावविषयः प्रथमतः पृथिवीकाये भावयति—

पुढवीकाओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥ १० ॥

व्याख्या—पृथिवीकायस्त्रिविधः, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, सचित्तः पुनर्द्विधा, तद्यथा—निश्चयतो व्यवहारतश्च ॥ एतदेव निश्चयव्यवहाराभ्यां सचित्तस्य द्वैविध्यं प्रतिपादयति—

निच्छयओ सच्चित्तो पुढविमहापव्वयाण बहुमज्झे । अच्चित्तमीसवज्जो सेसो ववहारसच्चित्तो ॥ ११ ॥

व्याख्या—निश्चयतः सचित्तः पृथिवीकायो घर्मादीनां पृथिवीनां मेर्वादीनां महापर्वतानाम [illegible]

। च, बहुम-

ध्यभागे वेदितव्या, तत्राचित्ततायां मिश्रतायाश्च हेतुना शीतादीनामसम्भवात्, शेषः पुनः अचित्तमिश्रवर्ज्जो मध्यमागस्थानसम्भवीमिश्राचि-त्तव्यतिरिक्तो निराबाधारण्यभूम्यादिषु व्यवस्थितो व्यवहारतः सचित्तो वेदितव्यः ॥ उक्तः सचित्तपृथिवीकायः, सम्प्रति तमेव मिश्रमाह—

खीरदुमहेट्ठ पये कट्ठोले इंधणे य मीसो उ । पोरिसि एग दुग तिग बहुइंधणमज्झथोवे य ॥ १२ ॥

व्याख्या—' खीरदुमहेट्ठ ' त्ति 'क्षीरद्रुमा' वटाश्वत्थादयस्तेषामधस्तात्—तले यः पृथिवीकायः स मिश्रः, तत्र हि क्षीरद्रुमाणां माधु-र्येण शस्त्रत्वाभावात् कियान्सचित्त' शीतादिशस्त्रसम्पर्कसम्भवाच्च कियानचित्त इति मिश्रता, तथा पथि ग्रामान्नगराद्वा बहिर्यः पृथिवीकायो वर्त्तते सोऽपि मिश्रो, यतस्तत्र गन्त्रीचक्रादिभिर्य त्वस्ततः पृथिवीकायः स कियान्सचित्तः कियांश्च शीतवातादिभिरचित्तीकृत इति मिश्रः, 'कट्ठोले' त्ति कृष्टो हलविदारित सोऽपि प्रथमतो हलेन विदार्यमाणः सचित्त' ततः शीतवातादिभिः कियानचित्तीक्रियते इतिमिश्रः, तथाऽऽर्द्रो जलमिश्रित , तथाहि—मेघस्यापि जल सचित्तपृथिवीकायस्योपरि निपतत् कियन्तं पृथिवीकायं विराधयति ततो जलार्द्रपृथिवीकायो मिश्र उ पपद्यते, सोऽप्यन्तर्मुहूर्त्तादनन्तरमचित्तीभवति, परस्परशस्त्रत्वेन द्वयोरपि पृथिव्यप्काययोरचित्तीभवनसम्भवात्, यदा त्वतिभूतं मेघजल निपततितदा तज्जलं यावन्नाद्यापि स्थितिं बध्नाति तावत् मिश्रः पृथिवीकायः, स्थितिबन्धे तु कृते सति सचित्तोऽपि सम्भाव्यते, तथा 'इं धने' गोमयादौ मिश्रः, तथाहि—गोमयादिकमिन्धनं सचित्तपृथिवीकायस्य शस्त्रं, शस्त्रेण च परिणीयमानो यावन्नाद्यापि सर्वथापरिणमति तावन्मिश्रः । अथेन्धनविषये कालमानमाह—'पोरिसी 'त्यादि, बहिरिन्धनमध्यगत एकां पौरुषीं यावन्मिश्रो मध्यमेन्धनसम्पृक्तस्तु पौ रुषीद्विकम् अल्पेन्धनसम्पृक्तस्तु पौरुषीत्रिकं तत ऊर्ध्वमचित्त इति ॥ तदेवमुक्तो मिश्रः पृथिवीकायः, साम्प्रतमचित्तमाह—

सीउण्हखारखत्ते अग्गीलोणूसअंबिलेनेहे । वुक्कतजोणिएणं पयोयण तेणिम होइ ॥ १२ ॥

व्याख्या—इह सर्वत्र सप्तमी तृतीयार्थे प्राकृतलक्षणवशात्, तथा चाह पाणिनिः प्राकृतलक्षणे—'व्यत्ययोऽप्यासा' मित्यत्र सूत्रे सप्तमी तृतीयार्थे, यथा 'तिसु तेसु अलंकिया पुहवी' इति, ततोऽयमर्थः—शीतोष्णक्षारक्षत्रेण, तत्र शीतं-प्रतीतम् उष्णः—सूर्यादिपरितापः क्षारः—पत्रक्षारादिः क्षत्रं—करीषविशेषः, एतैः, तथा 'अग्गिलोणूसअंबिलनेहे' इति, अग्नि—वैश्वानरः लवणं—प्रतीतम् ऊषः—ऊषरादिदेशोद्भवो लवणसमसन्निभो रजोविशेषः, आम्लं—काञ्जिकं स्नेहः—तैलादि एतैश्चाचित्तः पृथिवीकायो भवति, इह शीताम्ललवणक्षारक्षत्राग्न्यादयः परकायशस्त्राणि, रूपं स्वकायशस्त्रम्, उष्णश्चेह सूर्यपरितापरूपः स्वभावोष्णः तथाविधपृथिवीकायपरितापरूपो वा गृह्यते, नाग्निपरितापरूपस्तस्याग्निग्रहणेनैव गृहीतत्वात्, तत्र साऽपि, स्वकायशस्त्रोपादानेन परकायशस्त्रोपादानेन वा यान्यपि स्वकायपरकायशस्त्राण्युपलक्ष्यन्ते, यथा कटुकरसो मधुररसस्य स्वकायशस्त्रमित्यादि, एतेन पृथिवीकायस्याचित्ततया भवनं चतुर्धा भवतीत्यादिर्वं द्रष्टव्य, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र स्वकायेन परकायेन वा यदचित्तीकरणं तद्द्रव्यतः यदा तु क्षारादिक्षेत्रोत्पन्नस्य मधुरादिक्षेत्रोत्पन्नस्य च तुल्यवर्णस्य भूम्यादेः पृथिवीकायस्य परस्परं सम्पर्केणाचित्ततामवनं तदा तत् क्षेत्रतः, क्षेत्रस्य प्राधान्येन विवक्षणात्, यद्वा स भूस्तरक्षेत्रोद्भवेन पृथिवीकायान्तरेण सह मीलने, किन्त्वन्यत्र क्षेत्रे योजनशतात्परतो यदा नीयते तदा सर्वोऽपि पृथिवीकायः सर्वस्मादपि क्षेत्रात्योजनशतादूर्ध्वमानीता भिक्षाहारत्वेन शीतादिसम्पर्काभावेऽप्यचित्तीभवति, एवं च क्षेत्रादिक्रमणादचित्तीभवनमप्कायादीनामपि भावनीयं, या

---

त्रिभिस्तैरलङ्कृता पृथ्वी ।

सद्नस्पतिक्मायिकानां, तथा च हरीतक्यादयो योजनशतोद्भूर्तमानीताऽचित्तीभूतत्वाद्यौषधार्थं साधुभिः प्रतिगृह्यन्ते इति । कालतस्त्वचि-
सवा स्वभावत स्वायुःक्षयेण, सा च परमार्थतोऽतिशयज्ञानेनैव सम्यक्परिज्ञायते न छाद्मस्थिकज्ञानेनेति न व्यवहारपथमवतरति, अत एव च
तृषाऽतिपीडितानामपि साधूनां स्वभावतः स्वायुःक्षयेणाचित्तीभूतमपि तडागोदकं पानाय वर्द्धमानस्वामी भगवान् नानुज्ञातवान्, इत्थंभूतस्या-
चित्तीभवनस्य छद्मस्थानां दुर्लक्षत्वेन मा भूत् सर्वत्रापि तडागोदके सचित्तेऽपि पाश्चात्यसाधूनां प्रवृत्तिप्रसङ्ग इतिकृत्वा, भावतोऽचित्तीभवनं
पूर्ववर्णादिपरित्यागतोऽपरवर्णादितया भवनं । तदेवमुक्तोऽचित्तोऽपि पृथिवीकायः । एतेन चाचित्तेन साधूनां प्रयोजनं, तथा चाह–'वुक्कंत'
इत्यादि, व्युत्क्रान्ता–अपगता योनिः–उत्पत्तिस्थानं यस्य तेन विध्वस्तयोनिना प्रासुकेन 'इदं' वक्ष्यमाणस्वरूपं प्रयोजनं साधूनां भवति ॥
तदेवोपदर्शयति–

अवरद्धिगविसबंधे लवणेन व सुरभिउवलएणं वा । अच्चित्तस्स उ गहणं पओयणं तेणिमं वऽन्नं ॥ १४ ॥

व्याख्या–अपराधनम् अपराद्धं–पीडाजननं तदस्यास्तीति अपराद्धिको–लूतास्फोटः सर्पादिदंशो वा विषं–प्रतीतं तत्र दद्रु
प्रभृतिषु धारितं सम्भवति तयोरुपशमनाय वन्ध इव बन्धः–प्रक्षेपस्तस्मिन् कर्त्तव्येऽचित्तपृथिवीकायस्य गोरसचिक्कणकेदारतरिकादिरूपस्य
ग्रहणं प्रयोजनं, यद्वा लवणेन प्रतीतेन 'अचित्तस्स' त्ति विभक्तिपरिणामेनेह तृतीयान्तं सम्बध्यते, अचित्तेनाल्पवणप्रभक्तभोजनादौ प्रयो-
जनम्, अथवा सुरभ्युपलेन–गन्धपाषाणेन गन्धरोहकाख्येन प्रयोजनं, तेन हि पामाप्रसूतपाद्यादि क्रियते, वाशब्दो विकल्पार्थः, अथवा
तेन पृथिवीकायेनेदमन्यत्प्रयोजनम् ॥ तदेवाह–

ठाणनिसियणतुयट्टण उच्चाराईण चेव उस्सग्गो । घुट्टगडगलगलेवो एमाइ पओयणं बहुहा ॥ १५ ॥

व्याख्या—इह साधुभिः सचित्तमिश्रपरिहारद्वारेणाचित्ते भूतलप्रदेशे यत् स्थान—कायोत्सर्गो विधीयते, यत्र निषीदनम्—उपवेशन यत्र त्वग्वर्तनं—स्वापः, यत्र उच्चारादीनां पुरीषप्रस्रवणश्लेष्मनिष्ठ्यूतानामुत्सर्गः, तथा यो घुट्टकः—लेपितपात्रमसृणताकारकः पाषाणो ये च डगलकाः—पुरीषोत्सर्गानन्तरमपानप्रोञ्छनकपाषाणादिखण्डरूपा यश्च लेपो—भोगपुरपाषाणादिनिष्पन्नस्तौम्बकपात्राभ्यन्तरे दीयते, एवमादि 'बहुधा' बहुप्रकारम् अचित्तेन पृथिवीकायेन प्रयोजनम् ॥ उक्तः सचित्तादिभेदभिन्नः पृथिवीकायपिण्डः, सम्प्रत्यप्कायपिण्डं सचित्ता दिभेदभिन्नमाह—

आउक्काओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥ १६ ॥

व्याख्या—अप्कायस्त्रिविधः, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, तत्र सचित्तो द्विधा—निश्चयतो व्यवहारतश्च ॥ एतदेव सचित्तस्य निश्चयव्यवहाराभ्यां द्वैविध्यमुपदर्शयति—

घणउदही घणवलया करगसमुद्दद्दहाण बहुमज्झे । अह निच्छयसच्चित्तो ववहारनयस्स अगडाई ॥ १७ ॥

व्याख्या—'घनोदधयः' नरकपृथ्वीनामाधारभूताः कठिनतोयाः समुद्राः, 'घनवलयाः' तासामेव नरकपृथिवीनां पार्श्ववर्तिवलयाकार तोयाः ये च 'करकाः' घनोपलाः तथा 'समुद्रह्रदानां' लवणादिसमुद्रपद्मादिह्रदानां च बहुमध्यभागे योऽप्कायः 'अह' त्ति एष सर्वो ऽप्यप्कायो 'निश्चयसचित्तः' एकान्तसचित्तः, शेषस्तु 'अगडादि' अवटवापीतडागादिस्थः, इहावटादिस्थोऽप्यप्कायः शब्देनोक्तः, तात्स्थ्येन तद्व्यपदेशप्रवृत्तेः, यथा मञ्चाः क्रोशन्तीत्यादौ, तथाऽवटः कूपस्तदादिगतोऽप्कायो 'व्यवहारनयस्य' व्यवहारनयमतेन सचित्तः ॥ उक्तः सचित्तोऽप्कायः, सम्प्रति मिश्रकः—

उसिणोदगमणुवत्ते दंडे वासे य पडियमित्तमि । मोत्तूणादेसतिगं चाउलउदगं बहुपसन्नं ॥ १८ ॥

व्याख्या—अनुवृत्ते दण्डे, अत्र जातावेकवचनं, ततोऽयमर्थः—अनुवृत्तेषु त्रिषु दण्डेषु—उत्कालेषु उष्णोदकं तन्मिश्रमिति प्रस्तावा द्गम्यते, तथाहि—प्रथमे दण्डे जायमाने कश्चित्परिणमति कश्चिन्नेति मिश्रः, द्वितीये प्रभूतः परिणमति स्तोकोऽवतिष्ठते, तृतीये तु सर्वोऽप्यचित्तो भवति, ततोऽनुवृत्तेषु त्रिषु दण्डेषूष्णोदकं (मिश्रं) सम्भवति, तथा वर्षे—वृष्टौ पतितमात्रे यज्जलं ग्रामनगरादिषु प्रभूततिर्यग्मनुष्यप्रचारसम्भवेषु भूमौ वर्तते तथावमाद्याप्यचित्तीभवति तावन्मिश्रमवगन्तव्यं, ग्रामनगरादिभ्योऽपि बहिस्तावद्यदि स्तोके मेघजलं निपतति तदानीं तदपि पतितमात्रं मिश्रमवसेयं, पृथिवीकायसम्पर्केतस्तस्य परिणममानत्वात्, यदाऽप्यतिप्रभूतं जलं मेघो वर्षति तदाऽपि प्रथमतो निपतत् पृथिवीकायसम्पर्कत परिणममानं मिश्रं, शेषं तु पश्चान्निपतत् सचित्तमिति, तथा 'मुक्त्वा' परित्यज्य 'आदेशत्रिकं' मतत्रिकं, तदुक्ता मिश्रता न प्राप्नोति भावार्थः, 'चाउलोदकं' तण्डुलोदकम् 'अबहुप्रसन्नं' नातिस्वच्छीभूत, मिश्रमिति गाथार्थः । अबहुप्रसन्नमित्यत्राकारलोप आर्षत्वात् ॥ आदेशत्रिकमेव दर्शयति—

भंडगपासवलग्गा उच्चेडा बुब्बुया न संमति । जा ताव मीसगं तंदुला य रज्झंति जावऽन्ने ॥ १९ ॥

व्याख्या—तण्डुलोदके तण्डुलप्रक्षालनभाण्डादन्यस्मिन् भाण्डे प्रक्षिप्यमाणे ये त्रुटिता भाण्डकस्य पार्श्वेषु 'उच्चेडा' बिन्दवो लग्नाः ते यावत् 'शाम्यन्ति' विध्वंसमुपगच्छन्ति तावत्तण्डुलोदकं मिश्रमित्येके १, अपरे पुनराहुः—तण्डुलोदके तण्डुलप्रक्षालनभाण्डकादपरस्मिन् भाण्डके प्रक्षिप्यमाणे ये तण्डुलोदकस्योपरि समुद्भूता बुद्बुदास्ते यावदद्यापि 'न शाम्यन्ति' न विनाशमियूति तावत्तण्डुलोदकं

मिश्रमिति २, अन्ये पुनरेवमाहुः—तण्डुलप्रक्षालनानन्तरं तण्डुला राध्यमानास्ततस्ते यावन्न राध्यन्ति, यावन्माद्यापि सिध्यन्तीति भावः, तावत्तण्डुलोदकं मिश्रमिति ३ ॥ एषां त्रयाणामप्यादेशानां दूषणमाह—

एए उ अणाएसा तिन्निवि कालनियमस्सऽसंभवओ । लुक्खेयरभंडगपवणसंभवासंभवाईहिं ॥ २० ॥

व्याख्या—एते त्रयोऽप्यादेशा अनादेशा एव, तुशब्द एवकारार्थो भिन्नक्रमश्च, कुतोऽनादेशाः? इत्याह—कालनियमस्यासम्भवात्, न खलु बिन्दुपतने बुद्बुदापगमे तण्डुलपाकनिष्पत्तौ वा सदा सर्वत्र प्रतिनियत एव कालः, येन प्रतिनियतकालसम्भविनो मिश्रत्वादूर्ध्वम् चित्तत्वस्याभिधीयमानस्य न व्यभिचारसम्भवः, कस्मात् प्रतिनियतः कालो न घटते? इति कालनियमासम्भवमाह—'लुक्खेयरे' त्यादि, रूक्षेतरभाण्डपवनसम्भवासम्भवादिभिः, आदिशब्दादिन्धनादिरूपकारणसामग्रीभिन्नत्वाभिन्नत्वादिपरिग्रहः, इयमत्र भावना—इह यदा पाकतः प्रथममानीतं चिरानीतं वा स्नेहजलादिना न भिन्नं भाण्डं तद्रूक्षमुच्यते, स्नेहादिना तु भिन्नं स्निग्धं, तत्र रूक्षे भाण्डे तण्डुलोदके प्रक्षिप्यमाणे ये बिन्दवः पार्श्वेषु लगास्ते भाण्डस्य रूक्षतया झटित्येव शोषमुपयान्ति, स्निग्धे तु भाण्डे भाण्डस्य स्निग्धतया चिरकालं, ततः प्रथमादेशवादिनां मते रूक्षे भाण्डे बिन्दूनामपगमे परमार्थतो मिश्रस्याप्यचित्तत्वसम्भावनया ग्रहणप्रसङ्गः, स्निग्धे तु भाण्डे परमार्थतोऽचित्तस्यापि बिन्दूनामनपगमे मिश्रत्वेन सम्भावनया न ग्रहणमिति । तथा बुद्बुदा अपि प्रचुरखरपवनसम्पर्कतो झटिति विनाशमुपगच्छन्ति, प्रचुरखरपवनसम्पर्काभावे चिरमप्यवतिष्ठन्ते, ततो द्वितीयादेशवादिनामपि मते यदा खरप्रचुरपवनसम्पर्कतो झटिति विनाशमेयुर्बुद्बुदास्तदा परमार्थतो मिश्रस्यापि तण्डुलोदकस्याचित्तत्वेन सम्भावनया ग्रहणप्रसङ्गः, यदा तु खरप्रचुरपवनसम्पर्काभावे चिरकालमप्यवतिष्ठन्ते बुद्बुदाः तदा परमार्थतोऽचित्तस्यापि तण्डुलोदकस्य बुद्बुददर्शनतो मिश्रत्वाशङ्कया न ग्रहणमिति । येऽपि तृतीयादेशवादिनस्तेऽपि न परमार्थं पर्यालोचितवन्तः,

तण्डुलानां चिरकालपानीयभिन्नाभिन्नत्वेन पाकस्यानियतकालत्वात्, तथाहि—ये चिरकालसलिलभिन्नास्तण्डुला न च नवीना इन्धनादि सामग्री च परिपूर्णा ते सत्वरमेव निष्पद्यन्ते, शेषास्तु मन्दं, ततस्तेषामपि मतेन कस्यांचिन्मिश्रस्याप्यचित्तत्वसम्भावनया ग्रहणप्रसङ्ग, कदा चित्पुनरचित्तीभूतस्यापि मिश्रत्वशङ्कासम्भवादग्रहणमिति त्रयोऽप्यनादेशाः ॥ सम्प्रति च प्रवचनाविरोधी आदेशः प्रागुपदिष्टस्त्व विभावयिषुराह—

जाव न बहुप्पसन्नं ता मीसं एस इत्थ आएसो । होइ पमाणमचित्तं बहुप्पसन्नं तु नायव्वं ॥ २१ ॥

व्याख्या—यावत्तण्डुलोदकं 'न बहुप्रसन्नं' नातिस्वच्छीभूतं तावन्मिश्रमवगन्तव्यम्, एषः 'अत्र' मिश्रविचारप्रक्रमे भवत्यादेशः प्रमाणं, न शेषाः, यत्तु 'बहुप्रसन्नम्' अतिस्वच्छीभूतं तदचित्तं ज्ञातव्यं, ततोऽचित्तत्वेन तस्य ग्रहणे न कश्चिद्दोषः ॥ उक्तो मिश्रोऽप्कायः, अधुना तमेवाचित्तमाह—

सीउण्हखारखत्ते अग्गीलोणूसअंबिलेनेहे । वुक्कंतजोणिएणं पओयणं तेणिमं होइ ॥ २२ ॥

व्याख्या—इयं गाथा प्रागिव व्याख्येया, नवरं पृथिवीकायस्थानेऽप्कायाभिलापः कर्त्तव्यः । इह या स्वकायपरकायशस्त्रयोजना द्रव्यक्षेत्रकालभावापेक्षया याऽचित्तत्वभावना साऽपि प्रागिव यथायोगमप्कायेऽपि भावनीया । तथा यदा दधितैलादिसरकेषु घटेषु सिक्तस्य शुद्धजलस्योपरि दृश्यावयवयवसस्का तरी जायते तदा सा यदि परिस्थूरा तर्ह्येकया पौरुष्या तत्परिणमति, मध्यमभावा चेत्तर्हि द्वाभ्यां पौरुषीभ्यां, स्तोका चेत्तर्हि तिसृभिः पौरुषीभिरिति ॥ इह तेन व्युत्क्रान्तयोनिकेनाप्कायेनेदं प्रयोजनमित्युक्तम्, अतस्तदेव दर्शयति—

परिसेयपियणहत्थाइधोवणं चीरधोवणं चेव । आयमण भाणधुवण एमाइ पओयण बहुहा ॥ २३ ॥

व्याख्या—परिषेको-दुग्धकणादेरुत्थितस्योपरि पानीयेन परिषेचनं, पानं तृषापनोदाय जलस्याभ्यवहरणं, 'हस्तादिधावनं' करचरणप्रभृतिशरीरावयवानां कारणमुद्दिश्य प्रक्षालनं, 'चीवरधावनं' वस्त्रप्रक्षालनम्, अस्य भिन्नविभक्तिनिर्देशो न सर्वेषु साधुनोपधिप्रक्षालनं कर्तव्यमिति प्रदर्शनार्थः, 'आचमनं' पुरीषोत्सर्गानन्तरं शौचकरणं 'भाणधुवणं'ति पात्रकादिभाजनप्रक्षालनम्, एवमादिकम्, आदिशब्दात् स्नानकार्यादिपरिग्रहः, अधिकेनाप्कायेन प्रयोजनं, 'बहुधा' बहुप्रकारं प्रत्येयम् ॥ इह चीवरधावनमित्युक्तं, तच्च संयतानां वर्षाकालादर्वाक् कल्पते न शेषकाले, शेषकाले त्वनेकदोषसम्भवात्, तानेव दोषान् दर्शयति—

उउबद्ध धुवण बाउस बंभविणासो अठाणठवणं च । संपाइमवाउवहो पावण भूओवघाओ य ॥ २४ ॥

व्याख्या—वर्षाकालस्य प्रत्यासन्नं कालमपहाय शेषे ऋतुबद्धे काले चीवरस्य धावने चरणं बकुशं भवति, उपकरणबकुशत्वात्, तथा 'ब्रह्मविनाशः' मैथुनप्रत्याख्यानभङ्गः, प्रक्षालितवासःपरिधानभूषितशरीरो हि विरूपोऽपि रमणीयत्वेन प्रतिभासमानो रमणीनां रमणयोग्योऽयमिति प्रार्थनीयो भवति, किं पुनः शरीरावयवरामणीयकोपशोभितः?, ततः समस्तकामिनीनां प्रार्थ्यमानानां सलज्जितवर्धितत्तिर्यग्वलितास निरीक्षणाद्भोगनयानापदर्शितकक्षामूलसमुन्नतरमणीयपीनकठिनपयोधरविस्तारगम्भीरनाभीप्रदेशपरिभावनतोऽवश्यं ब्रह्मचर्यादपभ्रंशम धिगच्छेत्, तथा अस्थानस्थापनम्, इयमत्र भावना—यदि नाम कथञ्चित्सम्यग्वेदितया संयममपि परिनिष्पकम्पमुत्पन्नप्रत्ययो न ब्रह्मचर्यादपभ्रश्यति, तथाऽपि लोकेन सोऽस्थाने स्थाप्यते, यथा नूनमयं कामी, कथमन्यथाऽऽत्मानमित्थं भूषयति?, न खल्वकामी मण्डनप्रियो भवतीति, तथा

संपातिमानां मक्षिकादीनां मक्षालनजलादिषु निपततां प्राणिनां ' वधः ' विनाशो भवति, तथा ' प्लावनेन ' मक्षालनजलपरिष्ठापने पृथिव्या रेल्लनेन ' भूतोपघातः ' पृथिव्याश्रितकीटिकादिसत्त्वोपमर्दो भवति, तस्माच्च ऋतुबद्धे काले वस्त्रं मक्षालनीयम् ॥ नन्वेते दोषा वर्षाकालादर्वागपि पात्रे सम्भवन्ति ततस्तदानीमपि न चीवराणि प्रक्षालनीयानि, तत्र, यतोऽनीं चीवराप्रक्षालनेऽनेकदोषसम्भवात् तानेवाह—

अइभार चुडण पणए सीयलपाउरणऽजीरगेलण्णे । ओहावणकायवहो वासासु अ धोवणे दोसा ॥ २५ ॥

व्याख्या—इह वर्षाकालादर्वागपि यदि वासांसि न प्रक्षाल्यन्ते तदानीम् ' अतिभारः ' गुरुत्वं वस्त्राणां भवति, तथाहि—वासांसि मलविद्धानि यदा जलकणानुपक्तसमीरणमात्रेणापि स्पृष्टानि भवन्ति तदाऽपि स मलः क्लिन्नीभूय-दृढतरं वस्त्रेषु सम्बन्धमापद्यते, किं पुनर्वर्षासु सर्वत्र सलिलमयीषु ?, ततो वर्षासु क्लिन्नमलसम्पर्कतो वासांसि गुरुतरभाराणि भवन्ति, तथा 'चुडण'त्ति वाससां वर्षा कालादर्वागप्यधावने वर्षासु जीर्णता भवति शाट्ये भवतीत्यर्थः, किमुक्तं भवति ?—यदि नाम वर्षाकालादर्वागपि वस्त्राणि न प्रक्षाल्यन्ते ततो वर्षासु तेषां मलक्लिन्नतया जीर्णताभवनेन शाट्ये भवति, न च वर्षास्वभिनववस्त्रग्रहणं, न चाधिकः परिग्रहः, ततो ये वस्त्राभावे दोषाः समये प्रसिद्धास्ते सर्वेऽपि यथायोगमुपढौकन्ते इति, तथा मलक्लिन्नेषु वस्त्रेषु शीतलजलकणसंस्पर्शतो मलस्यार्द्रीभावतः ' पनकः ' घनसाति विशेषः प्राचुर्येणोपजायते, तथा च सति प्राणिव्यापादनप्रसक्तिः, तथा निरन्तरं सर्वतः प्रसरेण निपतति वर्षे शीतले च मारुते वाति मलस्यार्द्रीभावतः शीतलीभूतानां वाससां प्रावरणे भुक्ताऽऽहारस्याजीर्णतायाम्—अपरिणतौ ' ग्लानता ' शरीरमान्द्यमुज्जृम्भते, तथा च सति प्रवचनस्यापभ्राजना, यथा—अहो यतराशिरोमणयोऽमी तपस्विनो न परमार्थतत्त्ववेदिनो ये नाम वर्षास्वप्रक्षालितानां वाससां परिभोगे मान्द्यमुपजायते इत्येतदपि नावबुध्यन्ते ते पृथग्जनापरिच्छेद्यं स्वर्गापवर्गमार्गमवगच्छन्तीति दुःश्रद्धेय, तथा वर्षास्वप्रक्षालितानि वस्त्राणि

मारत्य भिक्षार्थं विनिर्गतस्य साधोर्मेघवृष्टौ मलिनवस्त्रस्नेहसम्पर्कतोऽप्कायविराधना भवति, एते 'वर्षास्वि'ति वर्षाकालप्रत्यासन्नोऽपि कालो वर्षा इत्युच्यते, तत्सामीप्यात्, भवति च तत्सामीप्यात्तच्छब्दव्यपदेशो, यथा गङ्गायां घोष इत्यत्र, ततो 'वर्षासु' वर्षाप्रत्यासन्ने काले वस्त्रादीनामप्रक्षालने दोषाः तस्मादवश्यं वर्षाकालादर्वाग् वासांसि प्रक्षालनीयानि। ये च सम्पातिमसत्त्वोपघातादयो दोषाः पूर्वं प्रक्षालने प्रागुक्तास्तेऽपि सूत्रोक्तनीत्या यतनया प्रवर्तमानस्य न सम्भवन्तीति वेदितव्यम्। यो हि सूत्राज्ञामनुसृत्य यतनया सम्यक् प्रवर्तेत स यद्यपि कथञ्चित्प्राण्युपमर्दकारी तथापि नासौ पापभाग् भवति, नापि तीव्रप्रायश्चित्तभागी, सूत्रबहुमानतो यतनया प्रवर्त्तमानत्वात्, यस्यापि च सूत्रम्—'अप्पत्ते च्चिय वासे सव्वं उवहिं धुवंति जयणाए' इति, ततो न कश्चिद्दोषः, नापि तदा वस्त्रप्रक्षालने बकुशत्वम्, सूत्राज्ञया प्रवर्त्तमानत्वात्, नाप्यप्रस्थानस्थापनदोषो, लोकानामपि वर्षासु वाससामप्रक्षालने दोषपरिज्ञानभावात्, न चैतेऽनन्तरोक्ता अतिभारादयो दोषा ऋतुबद्धे काले वाससामप्रक्षालने सम्भवन्ति, तस्माच्च तदा प्रक्षालनं युक्तमिति स्थितम्॥ सम्प्रति वर्षाकालादर्वागपि पात्रानुपधिरुत्कर्षतो जघन्यतश्च प्रक्षालनीयो भवति तावदभिधित्सुराह—

अप्पत्तेच्चिय वासे सव्वं उवहिं धुवंति जयणाए। असइए उ दव्वस्स य जहन्नओ पाय निज्जोगो ॥ २६ ॥

'अप्राप्ते एव' अनागते एव 'वर्षे' वर्षाकाले, वर्षाकालात् मनागर्वाक्तने काले इत्यर्थः, जलादिसामग्र्यां सत्यां 'उपधिम्' उपकरणं यतनया सर्वं प्रक्षालयन्ति, 'द्रवस्य' जलस्य पुनः 'असति' अभावे, जघन्यतोऽपि पात्रनिर्योगोऽवश्यं प्रक्षालनीयः, इह निस्सूर्यो गुणिरुपकारे वर्त्तते, तथा चोक्तं—'पाओ दुवसे मिज्जोगो सपयारो' इति, ततो निर्युज्यते—उपक्रियतेऽनेनेति निर्योग—उपकरणम्,

१ अप्राप्तायामेव वर्षायां सर्वमपधि प्रक्षालयन्ति यतनया।

भकरर्धरीत्यनन घञ् प्रत्ययः, पात्रस्य निर्योगः पात्रनिर्योग—पात्रोपकरणं पात्रबन्धादिः, यदुक्तं च—"पत्तं पत्ताबन्धो पायट्ठवणं च पायकेसरिया । पडलाइं रयत्ताणं च गोच्छओ पायनिज्जोगो ॥" इति । आह—किं सर्वेषामेव वस्त्राणि वर्षाकालादर्वागेव प्रक्षाल्यन्ते ? किं वाऽस्ति केषाञ्चिद्विशेषः ?, अस्तीति ब्रूम ॥ केषामिति चेदत्र आह—

आयरिय गिलाणाण य मइला मइला पुणोऽवि धावंति । मा हु गुरूण अवण्णो लोगंमि अजीरणं इयरे ॥ २७ ॥

व्याख्या—इह ये कृतपूर्वेणो भगवत्प्रणीतप्रवचनानुगताचारादिशास्त्रोपधानानि अधीतिन स्वसमयपरसमयशास्त्रेषु ज्ञातिनः सकलस्वपरसमयशास्त्रार्थेषु कृतिन कारितिनश्च पञ्चविधेष्वाचारेषु प्रवचनार्थव्याख्याधिकारिणः सद्धर्मदेशनाऽभियुक्ताः सूरयस्ते आचार्याः, आचार्यग्रहणमुपलक्षणं तेनोपाध्यायादीनां प्रभूणां परिग्रहः, तेषां, तथा 'ग्लाना' मन्दा तेषां च, पुनः पुनः मलिनानि वस्त्राणि 'धाव्यन्ते' प्रक्षाल्यन्ते, मलिनानीत्यत्र नपुंसकत्वे प्राप्तेऽपि सूत्रे पुंस्त्वनिर्देशः प्राकृतलक्षणवशात्, यथा चाह—पाणिनिः स्वप्राकृतलक्षणे—"लिङ्गं व्यभिचार्यपी"ति, प्रस्तुतेऽर्थे कारणमाह—'मा हु' इत्यादि, मा भवतु, 'हुः' निमित्तं, गुरूणां मलिनवस्त्रपरिधाने लोके 'अवर्णः' श्लाघा, यथा—निराकृतयोऽमी मलदुरभिगन्धोपदिग्धदेहास्ततः किमेतेषामुपकण्ठं गतैरस्माभिरिति, तथा 'इतरस्मिन्' ग्लाने मा भवत्वजीर्णमिति भूयो भूयो मलिनानि तेषां प्रक्षाल्यन्ते ॥ सम्प्रति ये उपधिविशेषा न विप्रक्ष्यन्ते तन्नामग्राहं गृहीत्वा तेषां धावने विधिमाह—

पायस्स पडोयारो दुनिसिज्ज तिपट्ट पोत्ति रयहरणं । एए उ न वीसामे जयणा सकामणा धुव्वणं ॥ २८ ॥

१ पात्रं पात्रबन्धः पात्रस्थापनं च पात्रकेसरिका । पटला रजस्त्राणं च गोच्छकः पात्रनिर्योगः ॥ १ ॥

व्याख्या—मत्स्यवार्यते पात्रमस्मिभिति मत्यनवार'—उपकरणं पात्रस्य मत्यनतार—पात्रबन्धः पात्रनिर्योगः पद्विध, तथा रजोहरणस्य सत्के द्वे निषद्ये, तद्यथा—बाह्या अभ्यन्तरा च, इह सम्प्रति दशिकाभिः सह या दण्डिका क्रियते सा मूलनीत्या केवलैव भवति न सदशिका, तस्या निषद्यात्रयं, तत्र या दशिकया उपरि एकहस्तप्रमाणायामा तिर्यग्वेष्टकत्रयपृथुत्वा कम्बलीखण्डरूपा सा बाह्या निषद्या, तस्याश्चाग्रे दशिका' सम्बध्यन्ते, तां च सदशिकामग्रे रजोहरणशब्देनाचार्यो वक्ष्यति, ततो नासाविह ग्राह्या, द्वितीया तु एतामेव निषद्यां तिर्यग् बहुभिर्वेष्टकैर्वेष्टयन्ती किञ्चिदधिकहस्तप्रमाणायामा हस्तप्रमाणपार्श्वपृथुत्वा पत्तमयी निषद्या सा अभ्यन्तरा निषद्योच्यते, तृतीया तु तस्या एवाभ्यन्तरनिषद्यायास्तिर्यग्वेष्टकान् कुर्वती चतुरङ्गुलाधिकैकहस्तमाना चतुरस्रा कम्बलमयी भवति, सा चोपवेशनोपकारित्वादधुना पादप्रोञ्छनकमिति रूढा, सा बाह्या निषद्येत्यभिधीयते, मिलितं च निषद्यात्रयं दण्डिकासहितं रजोहरणमुच्यते, ततो रजोहरणस्य सत्के द्वे निषद्ये इति न विरुध्यते, तथा त्रयः पट्टा, तद्यथा—संस्तारकपट्ट उत्तरपट्टश्चोलपट्टश्च, एते च सुगमाः, तथा 'पोत्ति'त्ति मुखपोतिका, मुखपिधानाय पोत—वस्त्रं मुखपोतं मुखपोतमेव ह्रस्वं चतुरङ्गुलाधिकवितस्तिप्रमाणमानत्वात् मुखपोतिका, मुखवस्त्रिकेत्यर्थः, 'अतिवर्त्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानी'ति वचनाच्च प्रथमतो नपुंसकत्वेऽपि प्रत्यये समानीते स्त्रीत्वं, तथा 'रजोहरण'त्ति दण्डिका वेष्टकत्रयप्रमाणपृथुत्वा एकहस्तायामा हस्तत्रिभागायामदशापरिकलिता प्रथमा या निषद्या प्रागुक्ता सा रजोहरणं, तथा च प्राप्यकृद्वक्ष्यति—'एग निसेज्जं च रयहरणं,' बाह्याभ्यन्तरनिषद्याद्वितीयमेकनिषद्यं सदशं रजोहरणमिति। एतानुपधिविशेषान् 'न विश्रमयेत्' नापरिभोग्यान् स्थापयेत्, कस्मादिति चेत्?, उच्यते, प्रतिवासरमवश्यमेतेषां विनियोगभावात्, ततो यतनया—प्रत्यन्तरितेन हस्तेन प्रग्रहणरूपया सङ्क्रमणा—पद्पदिकानामप्रत्यासन्नीयेषु वस्त्रेषु सङ्क्रमणं, ततो 'पामन' प्रत्यासन्नमिति॥ एतावेव गाथां ...

पायस्स पडोयारो पत्तगवज्जो य पायनिज्जोगो । दोन्नि निसिज्जाओ पुण ओब्मतर बाहरा चव ॥ ८ ॥
सथारुत्तरचोलग पट्टा तिन्नि उ हवति नायव्वा । मुहपोत्तियावि पोची एगनिसेज्जं च रयहरण ॥ ९ ॥
एए उ न वीसामे पइदिणमुवओगओ य जयणाए । सकामिऊण धोवति छप्पइया तत्थ विहिणा उ ॥१०॥ (भाष्यम्)

व्याख्या—एतास्तिस्रोऽपि व्याख्यातार्था , नवरं ' संकामिऊण ' इत्यादि, तत्र विश्रामाभावे सति यतनया षट्पदिका अन्यत्र सङ्क्रमय्य विधिना ' धावयति ' प्रक्षालयन्ति ॥ तदेवमविश्रमणीय उपधिरुक्तः, तद्भणनाच्च शेषो विश्रमणीयोपधिर्गम्यते, ततस्तस्य विश्रमणविधिं बिभणिषुरिदमाह—

जो पुण वीसामिज्जइ त एव वीयरायआणाए । पत्ते धोवणकाले उवहिं वीसामए साहू ॥ २९ ॥

व्याख्या—यः पुनरुपधिः प्राप्ते धापनकाले—प्रक्षालनकाले, अनेन अकालप्रक्षालने भगवदाज्ञाभङ्गलक्षणं दोषमुपदर्शयति, ' विश्रम्यते ' निक्षेपषट्पदिकाविशोधनार्थमपरिभुक्तो ध्रियते, तमुपधिं ' वीतरागाऽऽज्ञया ' सर्वज्ञोपदेशेन, सर्वज्ञोक्तमर्यादयेति भावः, ' एव ' वक्ष्यमाणेन प्रकारेण, साधुर्विश्रमयेत् ॥ विश्रमणाप्रकारमेवाह—

अब्भिंतरपरिभोग उवरिं पाउणइ नाइदूरे य । तिन्नि य तिन्नि य एगं निसिं तु काउ परिच्छिज्जा ॥ ३० ॥

व्याख्या—इह साधूनां त्रयो कल्पो क्षौमो एकः कम्बलमयः, तत्र यदा ते भाविश्यन्ते तदा एकः क्षौमोऽभ्यन्तरं प्राव्रियते, शरीर

प्रथमः प्राव्रियते इत्यर्थः, द्वितीय सौत्रिकस्योपरि, तृतीयः कम्बलमयस्तस्याप्युपरि, ततः प्रक्षालनकाले विश्रमणाविधिमारम्भे रात्रौ स्वपन् अभ्यन्तरपरिभोग सदैव शरीरेण सह संलग्नं परिभुज्यमान सौत्र कल्पमुपरि शेषकल्पद्वयान्तरितं त्रीणि दिनानि यावत्स्थापयति येन तस्याः षट्पदिकाः क्षुधा पीड्यमाना आहारार्थम् अथवा शीताग्निना पीड्यमानास्तं बहिः प्राव्रियमाण कल्पमपहायान्तरे कल्पद्वये शरीरे वा लगन्ति, एष प्रथमो विश्रमणाविधिः, एवं त्रीणि दिनानि आवृत्य ततस्त्रीण्येव दिनानि यावत्स्वापो स्वापकाले नातिदूरे स्थापयति, किमुक्तं भवति ?—स्वापकाले संस्तारकस्य एव स्थापयति, येन प्रथम विश्रमणविधिना या न निस्सृताः षट्पदिकास्ता अपि क्षुधा पीड्यमाना आहारार्थं ततो विनिर्गत्य संस्तारकतो लगन्ति, एष द्वितीयो विश्रमणाविधिः, तत एकां ' निशां ' रात्रिं, तुः समुच्चये, स्वपन् स्वापस्थानस्योपरि लम्बमानमधोमुखं शरीरकप्रमाणपर्यन्तं प्रसारितं कृत्वा संस्थापयेत्, संस्थाप्य च पश्चात्परीक्षेत, दृष्ट्या प्रावरणेन च षट्पदिका निभालयेत्, तद्यथा—प्रथमं तावद्दृष्ट्या निभालयेत्, दृष्ट्या निभालिता अपि यदि न दृष्टास्तत सूक्ष्मषट्पदिकारक्षणार्थं भूयः शरीरे प्रावृणोति, येन ता आहारार्थं शरीरे लगन्ति, एवं परीक्षणे कृते यदि ता न स्युस्तदा प्रक्षालयेत्, अथ स्युस्तर्हि पुनः पुनर्निर्भाल्य यदा न सन्तीति निश्चितं भवति तदा प्रक्षालयेत्, एष सप्तभिर्दिनैः कल्पशोधना, एतदनुसारेण शेषस्याप्युपधेः शोधना भावनीया । इह विश्रमणा प्रक्षालनीयस्यापरिभोगरूपा उक्ता, ततो यत्तस्य बहिः प्रावरणादिरूपः परिभोगः स परमार्थतोऽपरिभोग इति न तदा विश्रमणा विरुध्यते ॥ एनामेव गाथां भाष्यकृद् व्याख्यानयति—

घोवत्थ तिन्नि दिणे उवरिं पाउणइ तह य आसन्ने । धारेइ तिन्नि वियहे एगदिणं उवरि लंबंतं ॥ ११ ॥ (भा०)

इयं व्याख्यातार्था । अत्रैव विश्रमणाविधौ मतान्तरमाह—

केई एक्केक्कनिसं सवासेउ तिहा परिच्छंति । पाउणइ जइ न लग्गंति छप्पइया ताहि घोवंति ॥ ३१ ॥

व्याख्या—केचिद् एके सूरय एवमाहुरेकैकां 'निशां' रात्रिं 'त्रिधा' त्रिभिः प्रकारैः पूर्वोक्तां सत्रास्य तद्यथा–एकां निशां शोषं नीयं कल्पं परिः प्रावृणोति, द्वितीयां निशां संस्तारकतले स्थापयति, तृतीयां तु निशां स्वपन् स्वापस्थानस्योपरि लम्बमानमधोमुखं प्रसारितं शरीरलग्नमात्रपर्यन्तं स्थापयति, एवं त्रिधा सत्रास्य 'परीक्षन्ते' एतया निभाल्यन्ति, निभालिताश्चेत्र दृष्टास्ततः सूक्ष्मषट्पदिकाविशोधनार्थं शरीरे प्रावृण्वन्ति, प्रावृते च यदि 'न लगति' न लग्ना प्रतिभासन्ते षट्पदिकास्ततः प्रक्षालयन्ति, लगन्ति चेत्तर्हि भूयो भूयस्ता यतनया शरीरमावरणेन च परीक्षन्ते यावत्र सन्तीति निश्चितं भवति, तत प्रक्षालयन्तीति, एषोऽपि विधिरदूषणात्समीचीन इवाऽऽचार्यस्य प्रतिभासत इति मन्यामहे ॥ वस्त्रप्रक्षालनं च जलेन भवति, अतो जलग्रहणे विधिविशेषमाह—

निव्वोदगस्स गहणं केई भाणेसु असुइ पडिसेहो । गिहिभायणेसु गहणं ठिय वासे मीसगं छारो ॥ ३२ ॥

व्याख्या—वर्षासु गृहच्छादनप्रान्तगलितं जलं नीव्रोदकं तस्य, इह यदि वर्षाकालादर्वाक् सर्वोऽप्युपधिः कथञ्चित्सामर्थ्यभावतो न प्रक्षालितस्तर्हि प्राप्ते वर्षे सति साधुभिर्नीव्रोदकस्य–गृहच्छादनोत्तीर्णस्य जलस्य वस्त्रप्रक्षालनार्थं 'ग्रहणम्' आदानं कर्तव्यं, तद्धि रजोगुण्ठितधूमधूम्रीकृतदिनकरातपसम्पर्कसोष्मवीव्रसंस्पर्शतः परिणतत्वादचित्तम्, अतस्तद्ग्रहणे न काचिद्विराधना, नीव्रोदकस्य ग्रहणे केचिदाहु–'भाजनेषु' स्वपात्रेषु नीव्रोदकस्य ग्रहणं कर्तव्यमिति, अत्राऽऽचार्य आह—'असुइ पडिसेहो' 'असुइ' त्ति भावप्रधानोऽयं निर्देशः,ततोऽयमर्थः—'अशुचित्वाद्' अपवित्रत्वात्परोक्तविधिना नीव्रोदकग्रहणस्य प्रतिषेध, नीव्रोदकं हि मलिनं मलिनत्वाच्चाशुचि तत कथं येषु पात्रेषु भोजनं विधीयते तेषु तस्य ग्रहणमुचितं भवति ?, मा भूत् लोके प्रवचनगर्हा यथाऽमी अशुचय इति, ततः 'गृहिभाजनेषु' गृहिसत्केषु कु-

णिकादिषु भवेषु तस्य नीव्रोदकस्य ग्रहणं, तच्च नीव्रोदकग्रहणं 'स्थिते' निश्चले 'वर्षे' वृष्टौ, अन्तर्मुहूर्तादूर्ध्वमिति गम्यते, अन्तर्मुहूर्तेन सर्वात्मना परिणमनसम्भवात्, नास्थिते, किमित्याह—'मीसग'त्ति मिश्रं, निपतति वर्षे नीव्रोदकं मिश्रं भवति, तथाहि—पूर्वं निपतित मचित्तीभूतं तत्काले तु निपतत्सचित्तमिति मिश्रं, ततः स्थिते वर्षे तत्सम्भारं, तस्मिंश्च प्रविशदीवे तन्मध्ये 'छारो' त्ति क्षारः प्रक्षेपणीयो येन भूयः सचित्तं न भवति, यतो हि कदाचन प्रासुकीभूतमपि भूयः प्रहरत्रयादूर्ध्वं सचित्तीभवति, ततस्तन्मध्ये क्षारं प्रक्षिप्यते, अपि च—क्षारप्रक्षेपे समलमपि जलं प्रसन्नतामाभजति, प्रसन्नेन च जलेन प्रक्षाल्यमानान्याचार्यादिवासांसि सुतेजांसि जायन्ते, तत एतदर्थमपि क्षार प्रक्षेपो न्याय्यः ॥ सम्प्रति धावनगतमेव क्रमविशेषमाह—

गुरुपच्चक्खाणिगिलाणसेहमाईण धोवण पुव्वं । तो अप्पणो पुव्वमहाकडे य इयरे दुवे पच्छा ॥ ३३ ॥

व्याख्या—गुरुप्रत्याख्यानिग्लानशैक्षादीनां 'पूर्वं' प्रथमं धावनं कुर्यात् 'ततः' पश्चादात्मनः, इयमत्र भावना—इह साधुभिः परमहितमात्मनः समीहमानैरवश्यं गुर्वादिषु विनयः प्रयोक्तव्यः, विनयवशादेव सम्यग्दर्शनज्ञानचारित्रवृद्धिसम्भवात्, अन्यथा दुर्विनीतस्य सतो गच्छवासस्यैवासम्भवतः सकलमूलहानिप्रसक्तेः, ततो धावनप्रवृत्तेन साधुना प्रथमतो गुरूणाम्—आचार्याणां वासांसि प्रक्षालनीयानि, ततः प्रत्याख्यानिनां—क्षपकप्रभृतीनां तदनन्तरं ग्लानानां ततोऽप्यनन्तरं शैक्षकादीनां, तत्र शैक्षः—अभिनवप्रव्रजितः आदिशब्दात् सादिपरिग्रहः, सूत्रे च 'सेहमाईण' इत्यत्र मकारोऽलाक्षणिकः, 'ततः' तदनन्तरमात्मनः, इह सर्वेषामपि गुर्वादीनां यथायोगं त्रिविधान्यपि प्रक्षालनीयवस्त्राणि सम्भवन्ति, तद्यथा—यथाकृतान्यल्पपरिकर्म्माणि बहुपरिकर्म्माणि च, तत्र यानि परिकर्मरहितान्येव तथारूपाणि लब्धानि तानि यथाकृतानि, यानि चैकं वारं खण्डितैः सीवितानि तान्यल्पपरिकर्म्माणि, यानि च बहुधा खण्डशः सीवितानि तानि बहुपरि

कर्म्माणि, ततस्तथापि धावनक्रममाह—'पुव्वमहागडे'त्ति, 'पूर्वं' प्रथमं सर्वेषामपि यथाकृतानि वासांसि धावयेत्, पश्चात्क्रमेण इतरे द्वे, किमर्थमिति चेत्? उच्यते—विशुद्धाध्यवसायस्फातिनिमित्तं, तथाहि—यान्यल्पपरिकर्म्माणि तानि बहुकर्म्मापेक्षया स्तोकसंयमव्याघातकारीणि भवन्तीति तदपेक्षया शुद्धानि, तेभ्योऽपि यथाकृतान्यतिशुद्धानि, मनागपि पश्चिमन्यदोषकारित्वाभावात्, ततो यथा यथा पूर्वं पूर्वं शुद्धानि प्रक्षाल्यन्ते तथा तथा संयमबहुमानवृद्धिभावतो विशुद्धाध्यवसायस्फातिरिति पूर्वं यथाकृतानीत्यादिक्रमः॥ सम्प्रति प्रक्षालनक्रियाविधिमुपदर्शयति—

अच्छोडपिट्टणासु य न धुवे धोए पयावण न करे। परिभोग अपरिभोगे छायायव पेह कल्लाण ॥ २४ ॥

व्याख्या—इह वस्त्राणि धावन् आच्छोटनपिट्टनाभ्यां न धावेत्, तत्र आच्छोटनं—रजकैरिव शिलायामास्फालनं पिट्टनं—धनीनरम्भारमणीभिरिव पुनः पुनः पानीयप्रक्षेपपुरस्सरमुद्धर्षोत्तिप्पनेन कुट्टनं, सूत्रे च सप्तमी तृतीयार्थे, यथा 'तिसु तेसु अलंकिया पुहवी'[1] इत्यादौ, तुशब्दोऽनुक्तसमुच्चयार्थः, स च पाणिपादेन प्रमृज्य प्रमृज्य यतनया प्रक्षालयेदिति समुच्चिनोति, ततो 'धौते' प्रक्षालिते, धावनजलस्पर्शजनितशीतापनोदायात्मनो वस्त्रस्य वा शोषणायाग्नेः प्रतापनं न कुर्यात्, मा भूत् धावनप्रत्यार्द्रीभूतत्वादितो वस्त्रतो वा कस्यचिद्विन्दुनिपातेनाग्निकायविराधना, यद्येवं तर्हि कथं वस्त्रस्य शोषणं कर्त्तव्यमिति शोषणविधिमाह—परिभोग्यानि अपरिभोग्यानि च यथाक्रमं छायाऽऽतपयोः शोषयेत्, सूत्रे च विभक्तिलोप आर्षत्वात्, परिभोग्येषु हि वस्त्रेषु तथा पूर्वं शोषितेष्वपि कथञ्चित् षट्पदिका सम्भवन्ति, सा च प्रक्षालनकाले तथोपमर्दिताऽपि कथञ्चिज्जीविता सती दिनकराऽऽतपसम्पर्के म्रियते, ततस्तद्रक्षणार्थं तानि छायायां शोषयेत्,

---

१ त्रिभिस्तैरलङ्कृता पृथ्वी।

इवराणि त्वावपे, दोपाऽभावात्, तानि च छायायामातपे च शोषार्थं विसारितानि निरन्तरं 'पेरि'।ति मेसेव, येन परास्कन्दिनो नाप-
हरन्ति, इह पूर्वोक्तविधिना यत्नापुरस्सरमपि धाव्यमानेषु वस्त्रेषु कथञ्चिद्वायुविराधनारूपः षट्पदिकोपमर्दादिरूपो वाऽसंयमोऽपि सम्भा
व्यत, ततस्तच्छुद्ध्यर्थं तस्य साधोर्गुरुणा कल्याणसंज्ञं प्रायश्चित्त देयम् ॥तदेवमुक्त' समपञ्चमप्कायपिण्ड', सम्प्रति तेजस्कायपिण्डमाह—

तिविहो तेउक्काओ सच्चित्तो मीसओ य अचित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥ ३५ ॥

व्याख्या—त्रिविधस्तेजस्काय', तद्यथा–सचित्तो मिश्रोऽचित्तश्च, सचित्तः पुनर्द्विविध'–निश्चयतो व्यवहारतश्च ॥ निश्चयव्यवहा
राभ्यामेव सचित्तस्य द्वैविध्यमाह—

इट्टगपागाईण बहुमज्झे विज्जुमाइ निच्छयओ । इंगालाई इयरोत्ति

व्याख्या—इष्टकापाक भवीत', आदिशब्दात् कुम्भकारपाकेक्षुरसक्वथनतुल्या(चुल्ल्या)दिपरिग्रहः, तेषां च बहुमध्यभाग विद्युदादिश्च,
विद्युदुल्कामुखस्तेजस्कायो निश्चयतः सचित्तः, शेषस्त्वङ्गारादिकः, 'अङ्गार'श्चाङ्गारितोऽग्निः, आदिशब्दाद् ज्वालादिपरिग्रह , व्यव
हारत सचित्तः ॥ सम्प्रति मिश्र तेजस्कायमाह—

मुम्मुरमाईउ मिस्सो उ ॥ ३६ ॥

व्याख्या—'मुर्मुरः' कारीषोऽग्निः, आदिशब्दादर्द्धविध्यातादिपरिग्रहः, इत्थंभूतो मिश्र इति ॥ साम्प्रतमचित्तं तेज-
स्कायपिण्डमाह—

ओयणवंजणपाणगआयामुसिणोदगं च कुम्मासा । डगलगसरक्खसूई पिप्पलमाई उ उवभोगो ॥ ३७ ॥

व्याख्या—ओदनः—शाल्यादि भक्तं व्यञ्जनं—तक्रशाकतीमनादि पानकं—काञ्जिकं, तत्र यथावर्णं प्रक्षिप्यते, ततस्तदपेक्षया काञ्जिकस्याप्यचित्ताप्कायता आयामम्—अवस्रावणम् उष्णोदकम्—त्रिदण्डोद्वृत्तम्, एतेषां च पदानां समाहारद्वन्द्वः, चकारो मण्डकादिसमुच्चयार्थः, 'कुल्माषाः' पक्वा माषाः, एते चौदनादयोऽग्निनिष्पन्नत्वेनाग्निकार्यत्वादग्नयो व्यपदिश्यन्ते, भवति च तत्कार्यत्वात्तच्छब्देन व्यपदेशो यथा द्रम्मो भक्षितोऽनेनेत्यादौ, ओदनादयश्चाचित्तास्तत एतेषामचित्ताग्निकायत्वेनाभिधानं न विरुध्यते, तथा 'डगलकाः' पक्वेष्टकानां खण्डानि 'सरजस्कं' भस्म 'सूची' लोहमयी वस्त्रसीवनिका, अथवा सरक्खसूइत्ति रक्षा—भस्म सह रक्षया वर्त्तते इति सरक्षा सूची, किमुक्तं भवति ?—रक्षा सूची चेति, 'पिप्पलकः' छिद्रकः क्षुरविशेषः, आदिशब्दात्तस्त्वनिकादिपरिग्रहः, एतानि च डगलकादीनि पूर्वमग्निरूपतया परिणतान्यासीरन्, ततो भूतपूर्वगत्या सम्प्रत्यप्यग्निकायत्वेन व्यपदिश्यन्तेऽचित्तानि च, न तेषामचित्ताग्निकायत्वाभिधाने विरोधः ॥ सम्प्रत्यचित्ताग्निकायस्य प्रयोजनमाह—'उवभोगो' एतेषामोदनादीनां य उपभोगो—भोजनादावुपयुज्यमानता तदचित्ताग्निकायेन साध्यं प्रयोजनं, द्रव्यादिभेदाच्च चतुर्विधत्वमचित्ताग्निकायस्य प्रागिव यथायोगं भावनीयम् ॥ उक्तस्तेजस्कायपिण्डः, सम्प्रति वायुकायपिण्डमाह—

वाउक्काओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥ ३८ ॥

व्याख्या—वायुकायस्त्रिविधः, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, सचित्त पुनर्द्विधा—निश्चयतो व्यवहारतश्च ॥ एतदेव निश्चयव्यवहाराभ्यां सचित्तस्य द्वैविध्यमभिधित्सुराह—

सव्वत्थ घणतणुवाया अइहिम अइदुद्दिणे य निच्छयओ। ववहार पाइणाई अक्कताई य अच्चित्तो ॥३९॥

व्याख्या—सह सर्वैर्वर्तन्ते इति सवस्था ये 'घणतणुवाय'त्ति वातशब्द' मत्येकमभिसम्बध्यते, घनवातास्तनुवाताश्च, किमुक्तं भवति?—ये नरकपृथिवीनां पार्श्वेषु घनवातास्तनुवाता वा वलयाकारेण व्यवस्थिता वलयशब्दवाच्या, ये च नरकपृथिवीनामेवाधस्तात् घनवातास्तनुवाताश्च, तथा 'अइहिम अइदुद्दिणे य'त्ति अतिशयेन हिमे निपतति अतिशयेन च 'दुर्दिने'मेघतिमिरे मेघैर्गगनमण्डलस्याऽऽच्छादने ये वायव, एष सर्वोऽपि वायुकायो निश्चयतः सचित्त', अतिहिमातिदुर्दिनाभावे तु य' 'प्राचीनादिवातः' पूर्वादिदिग्भाव स व्यवहारतः सचित्तः, यस्तु 'आक्रान्तादिका' आक्रान्तपङ्कादिसमुत्थप्रभृतिक पञ्चप्रकारो वक्ष्यमाणस्वरूप सोऽचित्त इति॥ आक्रान्तादिस्वरूपमेवाह—

अक्कंतधंतघाणे देहाणुगए य पीलियाइसु य। अच्चित्त वाउकाओ भणिओ कम्मट्ठमहणेहिं ॥ ४० ॥

व्याख्या—आक्रान्ते-पादेनाक्रान्ते कर्दमादौ यो वातश्चिदिति शब्दं कुर्वन् समुच्छलति, धमाध्माते मुखवातभृते दृत्यादौ वर्तते यो वा 'घाणे' तिलपीडनयन्त्रे तिलपीडनवशात्सम्बन्धं विनिर्गच्छन्नुपलभ्यते, यश्च 'देहानुगत' शरीराश्रितः, उच्छ्वासनिःश्वासवातनिर्गमरूपः, 'पीलिते' समर्दं निष्पीड्यमान वस्त्रादि, आदिशब्दाच्चाव्यन्ताशिपरिग्रहः, तेषु च यः सम्भवति वातः एष पञ्चप्रकारोऽपि वातः कर्माष्टकमथनैरचित्त' प्रतिपादितः ॥ साम्प्रतं मिश्रं वायुकायं प्रतिपिपादयिषुर्दृत्यादिस्थस्याचित्तवातकायस्य जले स्थितस्य क्षेत्रमाश्रित्य स्थलस्थितस्य (च) कालमाश्रित्याचित्तादिविभागमाह—

हत्थसयमेग गंता दइओ अचित्तु बीयए मीसो । तइयंमि उ सच्चित्तो वत्थी पुण पोरिसादिणसु ॥११ ॥

व्याख्या—हरेर्युग्मपाटितेनापनीतमस्तकेन निष्कर्षितचर्मान्तर्वर्तिसर्वास्थ्यादिकचवरेणापरचर्ममयास्थिमगलकस्थगितापानच्छिद्रेण सद्गुणीकृतमुखीकृतग्रीवान्तर्विवरेणासाम्भोरन्यतरस्य शरीरेण निष्पन्नश्चर्ममयः मसेनकः कोत्यलकापरपर्यायो दृतिः, स चाचित्तमुखवातभृत सन् दवरकेण गाढबद्धमुखो नद्यादिजले प्लाव्यमानः क्षेत्रतो हस्तशतमेकं यावद्गत्वा तावत्तः 'दृतिः' इतिस्थो वातकायोऽचित्तः, प्रथमे च हस्तशतेऽतिक्रान्ते सति द्वितीये प्रविशन् मिश्रो भवति, स च मिश्रत्वानुभवति यावद् द्वितीयहस्तशतपर्यन्तं, ततो द्वितीये हस्तशतेऽतिक्रान्ते तृतीये प्रविशन् सचित्तो भवति, तत ऊर्ध्वं सचित्त एव, अथवैकस्मिन्नेव हस्तशते गमनेन आगमनेन पुनर्गमनेन च क्रमेणाचित्तत्वादि क्रमवगन्तव्यं, यद्वा—हस्तशतगमनकाले परिभाव्यैकस्मिन्नपि स्थाने जलमध्यस्थितस्योक्तक्रमेणाचित्तत्वादिकं परिभावनीयं, इतिप्रदर्शनं चो पलक्षणं तेन वस्तावप्येवं द्रष्टव्यं, वस्तिश्च दृतिवत्स्वरूपतो भावनीयः, नवरमपरचर्ममयास्थिगलकस्थगितग्रीवान्तर्विकरोऽतिविस्तृतमुखीकृत यामात्मप्रदेशः स विशेषः, तथा 'वत्थी पुण पोरसिदिणेसु'त्ति स्थले स्निग्धं रूक्षं च कालमाश्रित्य 'वस्तिः' वस्तिस्थो वातः, उपलक्ष णमेतत् , तेन दृतिस्थोऽपि वात स्थलस्थः स्निग्धं रूक्षं च कालमाधिकृत्य यथाक्रम पौरुषीषु दिनेषु चाचित्तादिरूपो वेदितव्यः ॥ एनमेव गाथाऽर्थवं भाष्यकृद् गाथाचतुष्टयेन व्याख्यानयति—

निद्धेयरो य कालो एगंतसिणिद्धमज्झिमजहन्नो । लुक्खोत्ति होइ तिविहो जहन्न मज्झो य उक्कोसो ॥१२॥

एगंतसिणिद्धंमी पोरिसिमेग अचेअणो होइ । बिइयाए समीसो तइयाइ सचेयणो वत्थी ॥ १३ ॥

मज्झिमनिद्धे दो पोरिसीउ अच्चित्तु मीसओ तइए । चउत्थीए सच्चित्तो पवणो दइयाइ मज्झगओ ॥ १४ ॥
पोरिसितिगमच्चित्तो निद्धजहन्नंमि मीसग चउत्थी । सच्चित्त पचमीए एव लुक्खेऽवि दिण वुड्ढी ॥१५॥ (भा०)

व्याख्या—इह कालः सामान्यतो द्विविध, तद्यथा—स्निग्धो रूक्षश्च, तत्र यः सजलः सशीतश्च स स्निग्धः, उष्णो रूक्षः, स्निग्धो अपि त्रिधा, तद्यथा—एकान्तस्निग्धो मध्यमो जघन्यश्च, तत्र एकान्तस्निग्धः अतिस्निग्ध, रूक्षोऽपि त्रिधा, तद्यथा—जघन्यो मध्यम उत्कृष्ट, उत्कृष्टो नाम अतिशयेन रूक्ष, तत्रैकान्तस्निग्धकाले बस्तिगतो वायुकायः उपलक्षणमेतत् तेन दृतिस्थोऽपि एकां पौरुषीं यावदचेतनो भवति, द्वितीयस्यास्तु पौरुष्या आरम्भेऽपि मिश्रः, स च तावद्यावत्परिपूर्णा द्वितीया पौरुषी, तृतीयस्यां तु पौरुष्यामादित एव सचित्तः, तत ऊर्ध्वं सचित्त एव, मध्यमे तु स्निग्धकाले द्वे पौरुष्यौ यावदचित्तस्तृतीयस्यां तु पौरुष्यां मिश्रः,चतुर्थ्यां सचेतनः, जघन्ये च स्निग्धकाले दृत्यादिमध्यगतो वायु पौरुषीत्रिकं यावदचित्तः, चतुर्थपौरुष्यां मिश्र, पञ्चम्यां तु सचेतन, एवं रूक्षेऽपि द्रष्टव्यं, केवलं तत्र दिनवृद्धि कर्त्तव्या, सा चैवं—जघन्यरूक्षकाले बस्त्यादिगत पवनो दिनमेकमचित्तो द्वितीये दिने मिश्रस्तृतीये सचित्तः, मध्यमरूक्षकाले दिनद्वयमचित्तस्तृतीयदिने मिश्रश्चतुर्थदिने सचेतनः, उत्कृष्टरूक्षकाले दिनत्रयमचित्तश्चतुर्थदिने मिश्रः पञ्चमदिने सचित्तः ॥ सम्प्रत्यचित्तवायुकायप्रयोजनमाह—

दइएण वत्थिणा वा पओयणं होज्ज वाउणा मुणिणो । गेलन्नंमि व होज्जा सचित्तमीसे परिहरेज्जा ॥४२॥

व्याख्या—'दृतिना' दृतिस्थेन 'बस्तिना' बस्तिस्थेन चेति समुच्चये नद्याद्युत्तारे प्रयोजनं भवेद्वायुना मुनेः, अनेन जलस्थो वायु

र्द्धते, अथवा 'म्रनत्वे' मन्दत्वे सति वायुना प्रयोजनं भवति, तथापि हि रोगे इत्यादिना संयम वातोऽपानाद्यो भक्षिष्यते, अनेन स्पर्शो गृहीत', सचित्तमिमौ तु यत्नत' परिहरेत्, जघन्यमध्ये स्वल्पये परिहारे प्रायश्चित्त प्रमाणमित्यध्याहार्यात ।। उक्तेष्वमुक्तो वायुकायाभिप्रायो गृहीत-
सम्प्रति वनस्पतिकायपिण्डमाह—

वणस्सइकाओ तिविहो सच्चित्तो मीसओ य अच्चित्तो । सच्चित्तो पुण दुविहो निच्छयववहारओ चेव ॥४३॥

व्याख्या—वनस्पतिकायपिण्डस्त्रिधा, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, सचित्तः पुनर्द्विधा, तद्यथा—निश्चयतो व्यवहारतश्च ।। इदमेव निश्चयव्यवहाराभ्यां सचित्तस्य द्वैविध्यं मिश्रं च प्रतिपादयति—

सव्वोऽवऽणतकाओ सच्चित्तो होइ निच्छयनयस्स । ववहारस्स य सेसो मीसो पव्वायरोट्टाई ॥ ४४ ॥

व्याख्या—निश्चयनयस्य मतेन सर्वोऽपि 'अनन्तकायः' वनस्पतिकायः सचित्तो भवति, शेष' पुनः 'प्रत्येकः' निम्बाम्रादिकः 'व्यवहारस्य' व्यवहारनयस्य मतेन सचित्तः, मिश्रो म्लानलोहादिः, तत्र प्रम्लानाः सर्वोऽपि वनस्पतिकायोऽर्द्धशुष्को ज्ञेयः, तत्र द्वि–योऽर्द्धः शुष्कः सोऽचित्तः शेषस्तु सचित्त इति मिश्रः, 'लोट्टः' घरट्टादिचूर्णः, [redacted] कायिमसिलकाः सम्भवन्ति ताश्च सचित्ताः शेषस्त्वचित्त इति मिश्रः, मासिकम्प्रावत्कालस्पृष्टकणिकादिपरिग्रहः, तथापि कियन्तोऽप्यत्ता अपाप्यपरिणता इति सचित्ताः कियन्तस्त्वचित्ता इति मिश्रता ॥
साम्प्रतमचित्त वनस्पतिकायमाह—

पुप्फाण पत्ताण सरडुफलाणं तहेव हरियाण । वंटमि मिलाणमी नायव्व जीवविप्पजढं ॥ ४५ ॥

व्याख्या—पुष्पाणां पत्राणां 'शलाटुफलानां' कोमलफलानां, तथा 'हरितानां' व्रीहिकादीनां 'वृन्ते' प्रसवबन्धने 'म्लाने' शुष्कप्राये ज्ञातव्यं स्वरूपं जीवविप्रमुक्तम् ॥ सम्प्रत्यचित्तवनस्पतिकायस्य प्रयोजनमाह—

संथारपायदंडगखोमिय कप्पा य पीढफलगाई । ओसहभेसज्जाणि य एमाइ पओयण बहुहा ॥ ४६ ॥

व्याख्या—येऽमी 'संस्तारकादयः' शय्यापट्टादयः यतिभिरभिसंस्त्रियन्ते, यानि च पात्राणि ये च 'दण्डकाः' दण्डविदण्डादय, यौ च क्षौमौ कल्पौ यच्च पीठफलकादिकम्, अत्रादिशब्दात्कपलिकादिपरिग्रहः, यानि औषधानि भेषजानि चेत्येवमादिकं 'बहुधा' बहु प्रकारं प्रयोजनमचित्तवनस्पतिकायस्य, इह 'औषधानि' केवलहरीतक्यादीनि 'भेषजानि' तु तेषामेव द्रव्यादीनामेकत्र मीलित्वा चूर्णानि, यद्वाऽन्तरुपयोगीन्यौषधानि बहिरुपयोगीनि प्रलेपादीनि भेषजानि ॥ उक्तो वनस्पतिकायपिण्डः, सम्प्रति द्वीन्द्रियादिपिण्डचतुष्टयं प्रतिविधि-पादयिषुस्तत्प्रयोजनं चोपचिक्षिप्सुरिदमाह—

बियतियचउरो पंचिंदिया य तिप्पभिइ जत्थ उ समेंति । सट्ठाणे सट्ठाणे सो पिंडो तेण कज्जमिण ॥ ४७ ॥

व्याख्या—यत्र मेलके स्वस्थाने स्वस्थाने स्वेषाम्—आत्मीयानां स्थानम्—अवस्थानं यत्र तत्र, समानजातीयवर्गरूपे इत्यर्थः, द्वित्रिचतु-ष्पञ्चेन्द्रियास्त्रिप्रभृतयः संयन्ति—एकत्र संश्लिष्टा भवन्ति, तद्यथा—त्रयः त्रयः चत्वारः चत्वार इत्यादि, त्रिप्रभृतिग्रहणं चोपलक्षणं, तेन द्वौ द्वावपि यत्र संश्लिष्यतः स पिण्डः, स्वस्थाने स्वस्थाने इति भूयोऽपि सम्बध्यते, ततोऽयमर्थः—तेषां द्वीन्द्रियादीनां स्वजातौ स्वजातौ स पिण्डो वेदि

१ दण्डो बाहुप्रमाणो विदण्डो कक्षप्रमितो च ( दण्डो बाहुप्रमाणो विदण्डकः कक्षामात्रस्तु )

ग्न्यः, सोऽपि च त्रिधा, तद्यथा—सचित्तो मिश्रोऽचित्तश्च, तत्र सचित्तस्तिमप्रभृतीनां अक्षादीनां जीवतामेकत्र संश्लेषेण मिलने, मिश्रस्तेषामेव केषाञ्चिज्जीवतां केषाञ्चिन्मृतानामेकत्र संश्लेषः, अचित्तो जीवविप्रमुक्तानां तेषामेवाक्षादीनामेकत्र मिलनं, तेन च पिण्डेन अत्र भावावेकवचनं 'तै' द्वीन्द्रियादिपिण्डैः 'कार्य' प्रयोजनम् 'इदं' वक्ष्यमाणम् ॥ तत्र द्विविधचतुष्पिण्डप्रयोजन सार्द्धगाथयाऽभिधित्सुराह—

बेइंदियपरिभोगो अक्खाण ससिप्पसंखमाईण । तेइंदियाण उद्देहिगादि ज वा वए वेज्जो ॥ ४८ ॥

चउरिंदियाण मच्छियपरिहारो आसमच्छिया चेव ॥

व्याख्या—इह साधोर्द्वीन्द्रियादीनां यथासम्भवं प्रयोजनं द्विधा, तद्यथा—शब्देन शरीरेण च, तत्र शब्देन प्रयोजनं शकुनादिपरिभावने, तथाहि—शङ्खशब्दमाकर्ण्यमानं प्रशस्तं महाशकुनमामनन्ति शाकुनिकाः, शरीरेण प्रयोजनं त्रिधा, तद्यथा—सम्पूर्णेन शरीरेण तदेकदेशेन शरीरसम्पर्कसमुद्भूतेन चान्येन वस्तुना, तत्रामीषां चतुर्णामपि प्रयोजनानां मध्ये किमपि केषाञ्चित्साधूनामुपयोगमुपयाति, केषाञ्चित्तु चत्वार्यपि, तत्र द्वीन्द्रियाणां सम्पूर्णशरीरेण प्रयोजनं साक्षादभिधत्ते—द्वीन्द्रियाणां 'परिभोगः' उपयोगोऽक्षाणां 'सशुक्तिशङ्खादीनां' शुक्तिशङ्खादिसहितानां, तत्र 'अक्षाः' चन्दनकाः 'शुक्तयः' प्रतीताः यत्र स्वातिनक्षत्रसम्भवविमलसम्पर्कतो मौक्तिकानि जायन्ते, 'शङ्खाः' शम्बूकाः, आदिशब्दात्कपर्दादिपरिग्रहः, तत्राक्षाणां कपर्दकादीनां चोपयोगः समवसरणस्थापनादौ शङ्खशुक्तिकानां चक्षुःपुष्पकाद्यपनोदादौ, त्रीन्द्रियाणां परिभोगमाह—त्रीन्द्रियाणां परिभोग उद्देहिकादि, उद्देहिकाशब्देन उद्देहिकाकृतवल्मीकमृत्तिका परिगृह्यते, आदिशब्दादन्यस्याप्येवंविधस्य त्रीन्द्रियमृत्तिकादेः परिग्रहः, स परिभोगः परिभोगविषयत्वात्, यद्वाऽत्र कर्म्मसाधनः परि

भोजनस्थो विवक्षणीयः, परिभुज्यते इति परिभोग'—परिभुज्यमानता (स) च जलौकाकृमिप्रभृतेः सर्पदंशादो वाताद्युपशमनाय वेदितव्या, चतुरिन्द्रियाणामपि वैषम्यीन्द्रियविक्षेपशरीरादिकं वातमक्षेपादिनिमित्तं भवेत् तदा परिभोगस्त्रीन्द्रियाणां तथा चतुरिन्द्रियाणां मध्ये मक्षिकाणां परिहार'–पुरीषं परिभोग्यं, तद्धि वमननिषेधार्थो मत्स्यण्डमुपनयते, भ्रमर—मध्यमक्षिका उपभुज्यते अक्षिभ्योऽक्षरसमुद्धरणाय चेवेति पर्वमाय चतुरिन्द्रियपरिभोगस्समुच्चयार्थं ॥ पञ्चेन्द्रियपिण्डविषये सामान्यत उपयोगमाह—

पचेंदियपिंडमि उ अब्ववहारी उ नेरइया ॥ ४९ ॥

व्याख्या—पञ्चेन्द्रियपिण्डे उपयोगविषयतया परिभाव्यमाने सर्वोऽपि तिर्यगादिपिण्डो यथायोगमुपयोगं समायाति, नैरयिकाः पुनः 'अव्यवहारिण.' अनुपयोगिन ॥ तत्र पञ्चेन्द्रियतिर्यगुपयोगमाह—

चम्मट्ठिदंतनहरोमसिंगअविलाइछगणगोमुत्ते । खीरदधिमाइयाण य पंचिंदियतिरियपरिभोगो ॥ ५० ॥

व्याख्या—पञ्चेन्द्रियतिरश्चां परिभोगश्चर्मास्थिदन्तनखरोमशृङ्गाविलादिच्छगणगोमूत्रे क्षीरदध्यादीनां च, तत्र चर्मणः परिभोगः क्षुरादिधारणार्थं कोशकादिकरणे, अस्थ्नो गृध्रनखिकादेः, तद्धि शरीरस्फोटापनोदनार्थं बाहादौ बध्यते, दन्तस्य शूकरदंष्ट्रायाः, सा हि चक्षुषि पुष्पिकापनोदाय घर्षित्वा क्षिप्यते, नखानां जीवविशेषसत्कानां, ते हि क्वापि धूपे पतन्ति गन्धश्च तेषां कस्यापि रोगस्यापनोदाय प्रभवति, रोम्णामविमेषी(षी)लासत्कानां, तन्निष्पन्नो हि कम्बलः साधूनामुपयोगवान्, शृङ्गस्य महिष्यादिसत्कस्य, तद्धि मार्गे गच्छतास्मि

भ्रष्ठानां साधूनां मीलनाय धार्यते, तथाऽविलादिछगणस्य गड्डरिकाया गड्डरकस्य वा, आदिशब्दादन्यथा च पुरापस्य, गामूत्रस्य पामा-घुपमर्दने, क्षीरादीनां भोजने ॥ सम्प्रति मनुष्यस्य सचित्तादिभेदात् त्रिविधस्याप्युपयोगमाह—

सच्चित्ते पव्वावण पथुवएसे य भिक्खदाणाई । सीसट्ठिग अच्चित्ते मीसट्ठिसरक्खपहपुच्छा ॥ ५१ ॥

व्याख्या—सचित्ते इति षष्ठीसप्तम्योरर्थं प्रत्यभेदात् सचित्तस्य मनुष्यस्य प्रयोजनं पथि पृष्टे 'उपदेशः' कथनं, तथा भिक्षादानम्, आदिशब्दादसत्यादिदान चोपयोगः, शिरसोऽस्थि, तद्धि लिप्तं व्याधिविशेषापनोदाय घर्षित्वा दीयते, यद्वा कदाचित्कश्चित्परिष्टो राजादिः साधूनां विनाशाय कृतोद्यमो भवेत् ततस्ते साधवः शिरोऽस्थिकमादाय कापालिकवेषेण नंष्ट्वा देशान्तरं व्रजितुमिच्छन्तीति तेन प्रयोजनं, तथा मिश्रस्य मनुष्यस्योपयोगः, 'अट्ठिसरक्खि'त्ति 'अस्थिभिः' आभरणकल्पैः भूषितस्य सरजस्कस्य सरक्षाकस्य वा भस्मावगुण्ठितपुस्कस्येत्यर्थः, कापालिकस्य पार्श्वे यत्पथि विषये प्रच्छनम् ॥ सम्प्रति देवताविषयमुपयोगमाह—

खमगाइ कालकज्जाइएसु पुच्छिज्ज देवयं कंचि । पंथे सुभासुभे वा पुच्छेज्जह दिव्व उवओगो ॥ ५२ ॥

व्याख्या—क्षपकादि', आदिशब्दादत्राऽऽचार्यादिपरिग्रहः, क्षपकस्य हि तपोविशेषाकृष्टत्वेन प्रायः समासन्ना एव देवता भवन्ति तत इह साक्षात्क्षपकग्रहणं कृतं, 'कालकार्यम्' मरणरूपं प्रयोजनं, तदादिकेषु प्रयोजनेषूपस्थितेषु काञ्चिद्देवतां पृच्छेत्, तथा पथिविषयेषु 'शुभाशुभे' सापायत्वे निरपायत्वे वा देवतां काञ्चन पृच्छेत्, एष 'दिव्य उपयोगः' देवताविषय उपयोगः ॥ तदेवं सचित्तादिभेदभिन्नत्रिप्रकारोऽपि द्रव्यपिण्डः प्रत्येकं पृथिवीकायादिभेदान्नवविध उक्तः, सम्प्रत्येतेषामेव नवानां पृथिवीकायादीनां द्व्यादिमिश्रणतो मिश्रं

अह मीसओ य पिंडो एएसिं चिय नवण्ह पिंडाणं । दुगसंजोगाईओ नायव्वो जाव चरमोत्ति ॥ ५३ ॥

व्याख्या—अथेत्यानन्तर्ये, केवलपृथिवीकायादिपिण्डाभिधानानन्तरं मिश्रकपिण्डो व्याख्यायते इति योगः, 'मिश्रकः' सजातीयविजातीयद्रव्यमिश्रणात्मकः पिण्डः एतेषामेव नवानां पिण्डानां द्व्यादिसंयोगात्मको ज्ञातव्यः, तद्यथा—पृथिवीकायोऽप्कायश्चेति द्विकसंयोगे प्रथमो भङ्गः, पृथिवीकायस्तेजस्काय इति द्वितीयः, एवं द्विकसंयोगे षट्त्रिंशद्भङ्गा भावनीयाः, तथा त्रिकसंयोगे पृथिवीकायो ऽप्कायस्तेजस्काय इति प्रथमो भङ्गः पृथिवीकायोऽप्कायो वायुकाय इति द्वितीयः एवं त्रिकसंयोगे चतुरशीतिर्भङ्गाः, तथा चतुष्कसंयोगे पृथिवीकायोऽप्कायस्तेजस्कायो वायुकाय इति प्रथमो भङ्गः, पृथिवीकायोऽप्कायस्तेजस्कायो वनस्पतिकाय इति द्वितीयः, एवं चतुष्कसंयोगे षड्विंशं शतं भङ्गानां भावनीयं, पञ्चकसंयोगेऽपि षड्विंशं शतं, षट्कसंयोगे चतुरशीतिः, सप्तकसंयोगे षट्त्रिंशत्, अष्टकसंयोगे नव, नवकसंयोगे एकः, सर्वसंख्यया भङ्गानां पञ्च शतानि द्व्यधिकानि, एतेषां च भङ्गानामानयनार्थमियं करणगाथा, "उभयमुहं रासिदुगं हिट्ठिल्लाणंतरेण भय पढमं । लद्धहरासिविभत्ते तस्सुवरि गुणित्तु संजोगा ॥ १ ॥" अस्याक्षरगमनिका—इह नवानां पदानां द्व्यादि संयोगभङ्गानानेतुमभिप्रेतास्ततस्तावन्मात्रौ द्वौ राशी उभयमुखौ स्थाप्येते, स्थापना चेयं १२३४५६७८९ ९८७६५४३२१ अत्रैकस्योपरि नवकः, तत्र एककसंयोगे नव भङ्गा द्रष्टव्याः, न च तत्र करणगाथाया व्यापारः, द्व्यादिसंयोगभङ्गानयनार्थत्वात् तस्याः प्रवृत्तत्वात्, ततोऽधस्तने राशौ पर्यन्तवर्तिन एककस्यानन्तरेण द्विकलक्षणेनोपरितनराशौ प्रथमाङ्कं नवकरूपं भजेत्—तस्य भागहारं कुर्यात्, ततो लब्धाः सार्द्धाश्चत्वारः, तेन च सार्द्धचतुष्केणाधोराशिनोपरितने प्रथमेऽङ्के विभक्ते लब्धेन तस्य द्विकलक्षणस्याङ्कस्योपरितनमङ्कमष्टकलक्षणं गुणयेत्—ताडयेत्, जाता षट्त्रिंशत्, इयं च गणयित्वा 'संयोगाः' संयोगभङ्गा ज्ञातव्याः, यथा द्विकसंयोगे भङ्गाः षट्त्रिंशदिति, ततो भूयोऽपि त्रिकसंयोगभङ्गानयनाय प्रथमया

दर्शिता करणगाथा व्यापार्यते, अधस्तने राशौ स्थितेन द्विकादनन्तरेण त्रिकेणापारतनराशिव्यवस्थित त्रिकापारतनसप्तकरूपाङ्कोपरिस्थया आय षड्विंशद्रूपमङ्कं भजेत्, ततो लब्धा द्वादश तैरघोराशिनोपरितनेऽङ्के त्रिकके लब्धैरेकलक्षणस्याङ्कस्योपरितनं सप्तकलक्षणमङ्कं गुणयेत्, गुणिते च सति जाताश्चतुरशीतिः, एतावन्तस्त्रिकसंयोगेऽपि भङ्गा आनेतव्याः, यावत्सप्तकसंयोगे एको भङ्ग, तथा चाह—'जाव चरिमो'त्ति यावद्द्विकसंयोगादिको मिश्रपिण्डो ज्ञातव्यो यावच्चरमो नवकनिष्पन्न एकसङ्ख्यो मिश्रपिण्डः, स च लेपमात्रिकस्योपदर्श्यते, इहासस्य क्षुरिकाक्षिप्तायां रजोरूपं पृथिवीकायो लगति, नदीमुखरसोऽप्कायः लोहमयावपनघर्षणे तेजस्कायः, यत्र तेजस्तत्र वायुरिति वायुकायोऽपि, वनस्पतिकायो पूर्ववत्, द्वित्रिचतुरिन्द्रियाः सम्पातिमाः सम्भवन्ति, महिष्यादिचर्ममयनालिकादेः घृष्यमाणस्यावयवरूपः पञ्चेन्द्रियपिण्डः, इत्थंभूतेन चासस्य खञ्जनेन लेपः क्रियते इत्यसावुपयोगी, इतिशब्दो मिश्रपिण्डसमाप्त्यर्थः, एतावानेव द्रव्यपिण्डो मिश्रः सम्भवतीति ॥ सम्भवत्स्वेव मिश्रपिण्डस्य कानिचिदुदाहरणान्युपदर्शयति—

सोवीरा गोरसासव वेसण भेसज्ज नेह साग फले । पोग्गल लोण गुलोयण णेगा पिण्डा उ सजोगे ॥ ५४ ॥

व्याख्या—'सौवीरं' काञ्जिकं, तच्चाप्कायतेजस्कायवनस्पतिकायादिपिण्डरूपं, तथाहि—तत्राप्कायस्तण्डुलधावनं तेजस्कायोऽवश्यावण वनस्पतिकायस्तण्डुलावयवा यत्सम्पर्कतस्तण्डुलोदकं गडुलमुपजायते, लवणावयवाश्च केचन तत्र लवणसम्मिश्रतण्डुलोदकादिभिः सह पतन्ति ततस्तत्र पृथिवीकायोऽपि सम्भवतीति, एवमन्यत्रापि भावना स्वधिया कर्तव्या, तथा 'गोरसं' तक्रादि, तच्चाप्कायत्रसकायसम्मिश्रं भवति, तथा 'आसवः' मद्यं, तच्चाप्कायतेजस्कायवनस्पतिकायादिपिण्डरूपं, 'वेसन' जीरकलवणादि, तच्च वनस्पतिपृथिवीकायादिपिण्डरूपं, 'भेषजं' पत्रागूप्रभृति, तच्चाप्कायतेजस्कायवनस्पतिकायपिण्डरूपं, 'स्नेहः' घृततैलादि, तच्च तेजस्कायत्रसकायादिपिण्डरूपं, 'शा

कः ' वल्गुलमार्जारादिरूपः, स च वनस्पतिकायपृथिवीकायत्रसकायादिपिण्डरूपः, ' फलम् ' आम्रफलादि, तदेव पक्वं प्रायः, ततस्तदपी त्यमेव भावनीयं, ' पोग्गल ' मांसं, तदपीह पक्वं गृह्यते, ततस्तदपि प्राक्तनवद्भावनीयं, ' लवणं ' प्रतीतं, तच्चाप्कायपृथिवीकायरूपं, ' गुल्लो दनौ' प्रतीतौ, तावपि फलवद्भावनीयौ, एवमन्येऽप्यनेके यथासम्भवं संयोगे पिण्डा भावनीयाः, केवलं तं तं संयोगं परिभाव्य यो यत्र द्विकसंयोगादावन्तर्भवति स तत्र स्वयमेवान्तर्भावनीयः ॥ तदेवमुक्तः सप्रपञ्चं द्रव्यपिण्डः, सम्प्रति क्षेत्रकालपिण्डावभिधित्सुराह—

तिन्नि उ पएससमया ठाणट्ठिइउ दविए तयाएसा । चउपंचमपिंडाणं जत्थ जया तप्परूवणया ॥ ५५ ॥

व्याख्या—इह क्षेत्रकालपिण्डौ ' नाम ठवणापिंडे दव्वे खेत्ते य काल भावे य ' इति गाथानिर्देशक्रमापेक्षया चतुर्थपञ्चमपिण्डौ, क्षेत्रम्—आकाशं कालः—समयविवर्त्तरूपः, तत्र त्रयः प्रदेशाः क्षेत्रमस्याधाराकाशप्रदेशाः तथा त्रयः समयाः कालस्य निर्विभागा भागाः, तुशब्दो विशेषणार्थः, स च परस्परमनुगता इति विशेषयति, 'चतुर्थपञ्चमपिण्डयोः' क्षेत्रकालपिण्डयोः स्वरूपम्, इयमत्र भावना—त्रयः परस्परमनुगता आकाशप्रदेशास्त्रयः परस्परमनुगताः समया यथाक्रमं क्षेत्रपिण्डः कालपिण्ड इति वेदितव्याः, त्रिग्रहणं चोपलक्षणं, तेन द्विचतुरादयोऽपि द्रष्टव्याः, तदेवं क्षेत्रकालपिण्डौ निरुपचरितौ प्रतिपाद्य सम्प्रति तावेव सोपचारावभिधत्ते—'ठाणट्ठिइउ दविए तयाएसा' 'दविए' द्रव्ये—पुद्गलस्कन्धरूपे स्थानम्—अवगाहः स्थितिः—कालतोऽवस्थानं स्थानं च स्थितिश्च स्थानस्थिती ताभ्यां स्थानस्थितितः अत्र पञ्चमी ' यप् कर्म्माधारे' इत्यनेन सूत्रेण, ततोऽयमर्थः—स्थानं स्थितिं चाश्रित्य यस्तदाऽऽदेशः—क्षेत्रकालादेशः क्षेत्रकालाभ्यामा न्यविवक्षया क्षेत्रेण कालेन च व्यपदेशस्ततस्तयोश्चतुर्थपञ्चमपिण्डयोः प्ररूपणा कार्या, किमुक्तं भवति ?—स्कन्धस्य पुद्गलद्रव्येऽवगाहचिन्ताया भिस्य क्षेत्रभावान्यविवक्षया यदा क्षेत्रेण व्यपदेशो यथा एकप्रादेशिकोऽयं द्विप्रादेशिकोऽयं त्रिप्रादेशिक इत्यादि स इत्थं क्षेत्रतो व्यपदिश्यमानः

क्षेत्रपिण्ड इत्युच्यते, क्षेत्रतो व्यपदिष्टः पिण्डः क्षेत्रपिण्ड इति व्युत्पत्तेः, यदा तु कालतोऽवस्थानमधिकृत्य कालसामान्यविवक्षया कालेन व्यपदेशो यथा—एकसामयिको द्विसामयिक इत्यादि तदा स कालपिण्डोऽपि भण्यते, कालतो व्यपदिष्टः पिण्डः कालपिण्ड इति समासाऽऽश्रयणात्, अथवा भिन्नदेशाधारात्मकक्षेत्रपिण्डे यदिदा भिन्नसमयाधारात्मके कालपिण्डे यदवस्थितं पुद्गलद्रव्यं तत्तदादेशात् क्षेत्रकालव्यपदेशात्–क्षेत्रकालोपचारादित्यर्थः, यथाक्रमं क्षेत्रपिण्डः कालपिण्डः । प्रकारान्तरेण सोपचारौ क्षेत्रकालपिण्डावाह–'जस्स जया तप्परूवणया' 'यत्र' वसत्यादौ यदा प्रथमपौरुष्यादौ 'तत्प्ररूपणा' पिण्डप्ररूपणा क्रियते स पिण्डः प्ररूप्यमाणो नामादिपिण्डो वसत्यादिक्षेत्रमधिकृत्य क्षेत्रपिण्ड उच्यते, यथाऽमुकवसतिरूपक्षेत्रपिण्ड इति, प्रथमपौरुष्यादिकं तु कालमधिकृत्य कालपिण्डो यथाऽमुकप्रथमप्रहरादिरूपः कालपिण्ड इति ॥ 'इह विभि उ पएससमया' इत्यत्र पर आक्षेपमाह–ननु मूर्त्तेषु द्रव्येषु परस्परमनुवेधत सङ्ख्याबाहुल्यतश्च पिण्ड इति व्यपदेशो घटते, क्षेत्रकालयोस्तु न परस्परमनुवेधो नापि काले सङ्ख्याबाहुल्यं, तथाहि–क्षेत्रमाकाशमुच्यते 'खेत्त खलु आगास' मिति वचनात्, तच्च नित्यमक्रियत्वात्, ततः सदैव विविक्तप्रदेशात्मकतया व्यवस्थितमिति कथमाकाशप्रदेशानामनुवेधः ?, एकत्र मिश्रणाभावात्, कालेऽपि पूर्वापरसमयविविक्तो वार्त्तमानिकसमयरूप एव पारमार्थिकः, पूर्वापरसमययोर्विनष्टानुत्पन्नत्वेन परमार्थतोऽसत्त्वात्, सतां च परस्परमनुवेधः सङ्ख्याबाहुल्यं वा नासतां सदसतां वा, ततः कालद्वयमपि नोपपद्यते इति कथं तत्र पिण्ड इति व्यपदेशः ?, अत्र प्रतिविधानमभिधित्सुराह—

मुत्तदविएसु जुज्जइ जइ अन्नोऽन्नाणुवेहओ पिंडो । मुत्तिविमुत्तेसुवि सो जुज्जइ नणु सत्तबाहुल्ला ॥ ५६ ॥

व्याख्या—ननु यदि मूर्त्तेषु द्रव्येषु 'अन्योऽन्यानुवेधतः' परस्परानुवेधतः, 'सत्तबाहुल्ला' इत्यप्यत्र सम्बध्यते, 'सङ्ख्याबाहुल्यतश्च' द्व्यादिसङ्ख्यासम्भवतश्च पिण्ड इति व्यपदेशो 'युज्यते' योगमुपैति घटते इत्यर्थः, तर्हि स पिण्ड इति व्यपदेशः 'मूर्त्तिविमु

क्ष्वपि ' मूर्तिरहितेष्वपि अमूर्तेष्वित्यर्थः, क्षेत्रप्रदेशकालसमयेषु युज्यते, तथापि पिण्डशब्दप्रवृत्तिनिमित्तस्य परस्परानुवेधस्य सङ्ख्या बाहुल्यस्य च सम्भवात्, तथाहि–सर्वेऽपि क्षेत्रप्रदेशाः परस्परं नैरन्तर्यलक्षणेन सम्बन्धेन सम्बद्धा अवतिष्ठन्ते, ततो यथा बादरनिष्पादिते चतुरस्रादिघने परस्परनैरन्तर्यरूपानुवेधतः सङ्ख्याबाहुल्यतश्च पिण्ड इति व्यपदेश प्रवर्तते तथा क्षेत्रप्रदेशेष्वपि पिण्डशब्दः प्रवर्तमानो न विरुध्यते, तथापि परस्परनैरन्तर्यरूपस्यानुवेधस्य सङ्ख्याबाहुल्यस्य च सम्भवात्, तथा कालोऽपि परमार्थतः सन् द्रव्यं च, ततः सोऽपि परिणामी, सतः सर्वस्य परिणामित्वाभ्युपगमात्, अन्यथा सत्त्वायोगात्, एतच्चान्यत्र धर्मसङ्ग्रहणिटीकादौ विभावितमिति नेह भूयो विभाव्यते, ग्रन्थगौरवभयात्, परिणामी चान्वयी तेन तेन रूपेण परिणममान उच्यते, ततोऽस्ति वार्तमानिकस्यापि समयस्य पूर्वापरसमयाभ्यामनुवेधः, केवलं तौ पूर्वापरसमयावसन्तावपि बुद्ध्या सन्ताविव विवक्षितौ, ततः सङ्ख्याबाहुल्यमपि तत्रास्तीति पिण्डशब्दप्रवृत्तिरोध ॥ सम्प्रति क्षेत्रे पिण्डशब्दप्रवृत्त्यविरोधं दृष्टान्तद्वारेण समर्थयते—

जह तिपएसो खंधो तिसुवि पएसेसु जो समोगाढो । अविभागेण सबद्धो कह तु नेव तदाधारो ? ॥ ५७ ॥

व्याख्या—यथा कश्चिदनिर्दिष्टव्यक्तिकः 'त्रिप्रदेशिकः' त्रिपरमाण्वात्मकः स्कन्धस्त्रिष्वप्याकाशप्रदेशेष्ववगाढो न त्वेकस्मिन् द्वयोर्वेत्यपिशब्दार्थः, 'अविभागेन सम्बद्धो' विभागो–नैरन्तर्याभावस्तदभावोऽविभागो नैरन्तर्यमित्यर्थः तेन सम्बद्धो नैरन्तर्यसम्बन्धसम्बद्ध इति भावः, पिण्ड इति व्यपदिश्यते, नैरन्तर्येणावस्थानभावात् सङ्ख्याबाहुल्यतश्च, एवं–त्रिप्रदेशावगाढत्रिपरमाणुस्कन्ध इव तदाधारः–त्रिपरमाणुस्कन्धाधारः प्रदेशत्रयसमुदायः कथं तु न पिण्ड इति व्यपदिश्यते ?, सोऽपि पिण्ड इति व्यपदिश्यताम्, उभयत्राप्युक्तनीत्या विशेषाभा

सात् ॥ सम्प्रति 'जत्थ जया तप्परूवणया' इत्येतद्व्याचिख्यासुर्नामस्थापनाद्रव्यभावपिण्डानां योगविभागसम्भवात् पारमार्थिकं पिण्डत्वं क्षेत्रकालयोस्तु योगविभागासम्भवत औपचारिकं प्रतिपादयन्नाह—

अहवा चउण्ह नियमा जोगविभागेण जुज्जए पिण्डो । दोसु जहिय तु पिण्डो वण्णिज्जइ कीरए वावि ॥ ५८ ॥

व्याख्या—अथवेति प्रकारान्तरद्योतने, पूर्वं हि क्षेत्रकालयोर्यथासङ्ख्यं प्रदेशसमयानां परस्परानुवेधत सङ्घाताकुल्यतश्च पारमार्थिकं पिण्डत्वमुक्तं, यद्वा तन्न युज्यत एव, योगविभागासम्भवात्, तथाहि—लोके यत्र योगे सति विभागः कर्तुं शक्यते विभागे वा सति योग तत्र पिण्ड इति व्यपदेशः, न च क्षेत्रप्रदेशेषु योगे सत्यपि विभागः कर्तुं शक्यः, नित्यत्वेन तेषां तथा व्यवस्थितानामन्यथा कर्तुमशक्यत्वात्, ततो न तत्र पारमार्थिकं पिण्डत्वं, तथा समयो वर्तमान एव सन् नातीतोऽनागतो वा, तयोर्विनष्टानुत्पन्नत्वेनाविद्यमानत्वात्, ततोऽत्र विभाग एव न तु कदाचनापि योग इति पारमार्थिकपिण्डत्वाभावः, ततोऽन्यथा क्षेत्रकालपिण्डप्ररूपणा कर्तव्येति प्रकारान्तरता, 'चतुर्णां' नामस्थापनाद्रव्यभावपिण्डानां 'योगविभागेन' योगविभागसम्भवेन नियमात्पिण्ड इति व्यपदेशो युज्यते, तथाहि—नाम्न-पिण्डो नामनामवतोरभेदोपचाराद् यद्वा नाम्ना पिण्डो नामपिण्ड इति व्युत्पत्तेः पुरुषादिकमेव भण्यते, तस्य च हस्तपादादिभिरवयवैर्युतस्यापि खड्गादिभिर्विभागः कर्तुं शक्यते इत्यस्ति योगे सति विभागः, यद्वा पूर्वं गर्भे मांसपेशीरूपस्य सतो हस्तादिभिरवयवैर्वियोगः पश्चात्क्रमेण तैः सह संयोग इति विभागे सति योगः ततः पिण्डरूपता, तथा स्थापनापिण्डेऽप्यक्षत्रिकादिरूपे पूर्वं विभागे सति संयोगः संयोगे वा सति विभाग इति पिण्डरूपता, द्रव्यपिण्डेऽपि गुडौदनादिके विभागपूर्वकः संयोगः संयोगपूर्वको वा विभागः सम्भवतीति पारमार्थिकपिण्डरूपता, भावपिण्डेऽपि भावभाववतोः कथञ्चिदभेदात्साध्व्यादिरेव मूर्तो पिण्डवान् गृह्यते, तत्र संयोगविभागो नामपिण्ड इव वाच्यौ

विति पारमार्थिकी पिण्डरूपता, लेप्यकाष्ठयोस्तूपनीतत्वा न संयोगविभागाविति न तत्र पिण्डशब्दप्रवृत्तिः, तस्मान्नामादिपिण्ड एव तद्वद् क्षेम निवासादिकं पर्यायमुख्यरूपं विवक्षितया क्षेत्रपिण्डकालपिण्डशब्दाभ्यां व्यपदिश्यते, यथा घाय—'दोसु जरिय उ' इत्यादि 'दघो' क्षेम काल्यो: 'यत्र' प्रशस्तादौ यदा वा प्रथमपौरुष्यादौ यः पिण्डो नामादिरूपो व्यावर्ण्यते यत्र यत्र गृहे महानसादौ वा पिण्डो गुडपिण्डा दिर्मोदकादिपिण्डो वा क्रियते यदा वा प्रथमप्रहरादौ निष्पाद्यते स व्यावर्ण्यमानो नामादिपिण्डः क्रियमाणो वा गुडौदनादिपिण्डस्तत्से- व्यवतापेक्षया क्षेत्रपिण्डः कालपिण्डश्च व्यपदिश्यते, यथाऽमुकप्रशस्यादिक्षेत्रपिण्डः प्रथमपौरुषीपिण्ड इत्यादि ॥ उक्तौ क्षेत्रकालपिण्डौ, स म्प्रति भावपिण्डमभिधित्सुराह—

दुविहो उ भावपिण्डो पसत्थओ चेव अप्पसत्थो य । एएसिं दोण्हपि य पत्तेय परूवणं वोच्छं ॥ ५९ ॥

व्याख्या—'द्विविधः' द्विप्रकारः भावपिण्डः, तद्यथा—प्रशस्तोऽप्रशस्तश्च, तत्र एतयोर्द्वयोरपि प्रत्येक प्ररूपणां—प्ररूप्येते द्वावपि भावपिण्डौ यया अपायादया सा प्ररूपणा तां वक्ष्ये ॥ प्रतिज्ञातमेव गाथाचतुष्टयेन निर्वाहयति—

एगविहाइ दसविहो पसत्थओ चेव अप्पसत्थो य । संजमे विज्जाचरणे नाणादितिगं च तिविहो उ ॥ ६० ॥

नाणं दंसण तव संजमो य वय पंच छच्च जाणेज्जा । पिंडेसण पाणेसण उग्गहपडिमा य पिंडम्मि ॥ ६१ ॥

पवयणमाया नव बंभगुत्तिओ तह य समणधम्मो य । एस पसत्थो पिंडो भणिओ कम्मट्ठमहणेहिं ॥ ६२ ॥

अप्पसत्थो य असंजमे अन्नाणे अविरई य मिच्छत्तं । कोहाई आसवे काया कम्मेगुत्ती अहम्मो य ॥ ६३ ॥

व्याख्या—प्रशस्तोऽप्रशस्तश्च भावपिण्डः प्रत्येकं 'दशविधः' दशप्रकारः, एकरूपः । इत्यादि—'एकविधादिः' एकविधो द्विविधस्त्रिविधश्चतुर्विधो यावद्दशविध इति, तत्र प्रथमत उद्देशक्रमप्रामाण्यानुसरणात्प्रशस्तं भावपिण्डं दशविधमप्यभिधित्सुराह—'संजमे'त्यादि, तत्रै कविधः प्रशस्तो भावपिण्डः संयमः, इह संयमो ज्ञानदर्शने विना न भवति, 'पूर्वस्य लाभः पुनरुत्तरलाभे भजनीयः सिद्धः' इति वचनप्रामाण्यात्, ततो ज्ञानदर्शने संयम एवान्तर्भूते विवक्षिते इति संयम एवैकः प्रशस्तभावपिण्डत्वेन प्रतिपाद्यमानो न विरुध्यते, द्विविधः पिण्डो 'विद्याचरणे' विद्या—ज्ञानं चरणं—क्रिया, अत्र सम्यग्दर्शनं ज्ञान एवान्तर्भूतं विवक्षितमिति न पृथग्गणितं, विवक्षा हि वक्त्रधीना, वक्ता च न सदापि सङ्क्षेपेणाभिधित्सुस्तां प्रत्यासत्तिमधिकृत्य तदन्तर्भावनाभिधत्ते कदाचित्पुनर्विक्षेपपरिज्ञानोत्पादनाय विस्तरेणाभिधित्सुः सर्वं वैविक्त्येन पृथक् प्रतिपादयति, ततः कदाचित् ज्ञानादित्रिकं संयम इति प्रतिपाद्यते कदाचित् ज्ञानक्रिये इति कदाचित्पुनः परिपूर्णमपि सा स्वाधया ज्ञानादित्रिकमिति न कश्चिद्दोषः, त्रिविधः पिण्डः पुनः 'ज्ञानादित्रिकं' ज्ञानदर्शनचारित्राणि, चतुर्विधः पिण्डो ज्ञानदर्शनतपःसंयमाः, पञ्चविधः पञ्च व्रतानि—प्राणातिपातमृषावादादत्तादानमैथुनपरिग्रहनिवृत्तिलक्षणानि, अत्रापि ज्ञानदर्शने अन्तर्भूते विवक्षिते इति न पृथग्गणिते, रात्रिभोजनविरमणमप्येतेषु पञ्चसु यथायोगमन्तर्भूतं विवक्षितं ततो न पञ्चविधत्वव्याघातः, एवमुत्तरत्रापि यथायोगमन्तर्भावभावना भावनीया, षड्विधो भावपिण्डः—षड् व्रतानि, तत्र पञ्च व्रतानि पूर्वोक्तान्येव प्राणातिपातविरमणादीनि षष्ठं तु रात्रिभोजनविरमणलक्षणं, तथा सप्तविधे पिण्डे—सप्त पिण्डैषणाः सप्त पानैषणाः सप्त अवग्रहप्रतिमाः, तत्र पिण्डैषणाः पानैषणाश्च सप्त संसृष्टादयः, ताश्चेमाः—'संसृष्टम-

१ अवग्रहप्रतिमाः सप्त, अवगृह्यते इत्यवग्रहस्तस्य प्रतिमा अभिग्रहाः, तत्र पूर्वमेवैवंभूतं प्रतिश्रयो मया प्राप्तो नान्यथाभूत इति विचिन्त्य तमेव याचित्वा गृह्णतः प्रथमा १ । यथा यस्यैवंभूतोऽभिग्रहो भवति—अहं चान्येषां कृतेऽवग्रहं ग्रहीष्यामि, अन्यैश्च गृहीतेऽवग्रहे वत्स्यामीति द्विती

संसट्ठा उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥' अष्टप्रवचनमातरः, वसतिविषयनियमविशेषाः, यथाऽष्टविधाः पिण्डोऽष्टौ प्रवचनमातरः, ताश्च पञ्च समितयस्तिस्रो गुप्तयः, तथा नवविधाः पिण्डो नव ब्रह्मचर्यगुप्तयः, तासां चेदं स्वरूपं—' वसहि कह निसिज्जिंदिय कुड्डंतर पुव्वकीलिय पणीए । अइमायाहार विभूसणं च नव बंभगुत्तीओ ॥१॥' 'तथा चे'ति समुच्चये, दशविधः पिण्डो दशप्रकार' श्रमणधर्मः, स चायं—' खंती य मद्दवऽज्जव मुत्ती तव संजमे य बोद्धव्वे । सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥१॥'

---

या, तत्र प्रथमा सामान्येन, इयं तु गच्छान्तर्गतानां साम्भोगिकानां चोद्युक्तविहारिणां यतस्तेऽन्योऽन्यार्थं याचन्ते २ । अन्यार्थमवग्रहं याचिष्ये अन्यावगृहीते तु न स्थास्यामीत्येषाऽऽहालन्दिकानां, यतस्ते सूत्रावशेषमाचार्यादभिलषन्त आचार्यार्थं च याचन्ते ३ । अहमन्यार्थमवग्रहं न याचिष्ये, अन्यावगृहीते तु स्थास्यामीति, एषा गच्छ एवोद्युक्तविहारिणो जिनकल्पार्थं परिकर्म कुर्वतो ४ । आत्मकृतेऽवग्रहं याचिष्ये न परार्थम् , एषा जिनकल्पिकस्य ५ । यदीयमवग्रहं ग्रहीष्यामि तदीयमेव कटादि संस्तारकं ग्रहीष्यामि, अन्यथोत्कुटुक उपविष्टो वा रात्रिं गमयिष्यामीत्येषा जिनकल्पिकादेः ६ । सप्तमी त्वेषैव पूर्वोक्ता नवरं यथासंस्तृतमेव शिलादि ग्रहीष्यामि नान्यदिति ७ । २ व्याख्या—असंसृष्टा हस्तमात्राभ्यां चिन्त्या, " असंसट्ठे हत्थे असंसट्ठे मत्ते, अवरटिमत्तिगुर्व भत्ता, एष गृहतः प्रथमा, गाथाभङ्गभयाद्विपर्ययनिर्देश' १, संसृष्टापि ताभ्यां चिन्त्या, " संसट्ठे हत्थे संसट्ठे मत्ते, सावसेसदव्वे भवइ २, उद्धृता पाकस्थानात् स्वस्थाने स्वयोगेन भोजनजातमुद्धृतं तत एव गृह्णतः ३, अल्पलेपाऽल्पशब्दोऽभाववाचकस्ततो निर्लेपं पृथुकादि गृह्णतः ४, अवगृहीता भोजनकाले भोक्तुकामस्य शरावादिना यदुपहृतं तत एव गृह्णतः ५, प्रगृहीता भोजनवेलायां भोक्तुकामाय दातुमभ्युद्यतेन भोक्त्रा वा स्वहस्तादिना यत्प्रगृहीतं तद्गृह्णत ६, उज्झितधर्मा यत्परित्यागार्हं भोजनजातमन्ये च द्विपदादयो नावकाङ्क्षन्ति तदर्धत्यक्तं वा गृह्णतः ७ । पानैषणा अप्येवमेव, नवरं चतुर्थ्यामायामसौवीरादि निर्लेपं ज्ञेयम् ।

प्रशस्तभावपिण्डस्योपसंहारमाह—'एसो' इत्यादि, 'एष'दशप्रकारोऽपि भावपिण्डः कर्म्मोदयकारकः—वक्ष्यमाणतः, अनेन समनापक्ष्य न्युरासमाह ॥ सम्प्रति अप्रशस्तं भावपिण्डं द्व्यादिविधमपि क्रमेणाह—' अपसत्थो य ' इत्यादि, अप्रशस्तः पुनर्भावपिण्ड एकविधोऽसंयमो-विरत्यभावः, अत्राज्ञानमिथ्यात्वादीनि सर्व्वाण्यप्यन्तर्भूतानि विवक्ष्यन्ते ततो न कश्चिद्दोषः, द्विविधोऽज्ञानाविरती, चशब्दो मिथ्यात्वशब्दा-नन्तरं योजनीयः, अत्र मिथ्यात्वकषायादयः सर्वेऽप्यत्रैवान्तर्भूता विवक्षितास्ततो न द्विविधत्वव्याघातः, एवमुत्तरभाष्येष्वपि भावना भाव-नीया, त्रिविधो मिथ्यात्वं चशब्दादज्ञानाविरती च, चतुर्विध चत्वारः क्रोधादयः क्रोधमानमायालोभाः, पञ्चविध पञ्चाश्रवद्वाराणि प्राणा-तिपातमृषावादादत्तादानमैथुनपरिग्रहरूपाणि, षड्विध ' काय'त्ति कायवधाः—पृथिवीकायिकादिविनाशाः, सप्तविधः कर्मणि—कर्मविषयो द्रष्ट-व्य', इह कर्म्मशब्देन कर्मबन्धनिबन्धनभूता अध्यवसाया गृह्यन्ते, भावपिण्डाधिकारात्, तत आयुर्वर्जसप्तकर्मस्कन्धनिबन्धनभूता काषायिका अकाषायिका वा परिणामविशेषा जातिभेदापेक्षया सप्तभेदा' सप्तविधोऽप्रशस्तो भावपिण्डः, अष्टविधोऽपि भावपिण्ड कर्म्मविषयः, तत्रापीय भावना—कर्मोष्टकबन्धनिबन्धनभूताः कषायिकाः परिणामविशेषा जातिभेदापेक्षयाऽष्टभेदा अष्टविधोऽप्रशस्तो भावपिण्ड , ' अगुत्तीओ'त्ति नवब्रह्मचर्यगुप्तिविपक्षभूता नवाब्रह्मचर्यगुप्तयः, तथा अधर्म्मो—दशविधधर्मविपक्षभूतो दशविधोऽप्रशस्तो भावपिण्डः । सम्प्रति प्रशस्ता प्रशस्तयोर्भावपिण्डयोर्लक्षणमाह—

बज्झइ य जेण कम्मं सो सव्वो होइ अप्पसत्थो उ । मुच्चइ य जेण सो उण पसत्थओ नवरि विन्नेओ ॥६४॥

व्याख्या—इह येन भावपिण्डेनैकविधादिना प्रवर्त्तमानेन 'कर्म्म' ज्ञानावरणीयादि बध्यते, चशब्दोऽनुक्तसमुच्चयार्थ, स च दीर्घ-स्थितिकंदीर्घसंसारानुबन्धि विपाककटुकं च येन बध्यते इति समुच्चिनोति, स सर्वोऽप्यप्रशस्तो भावपिण्डो ज्ञातव्यः, येन पुनरेकविधादिना

प्रवर्धमानेन कर्मणः सकाशात् शनैः शनैः सर्वात्मना या मुच्यते स प्रशस्तो भावपिण्डो विज्ञेयः, आह–पिण्डो नाम बहूनामेकत्र मीलनमुच्यते, पिण्डनं पिण्ड इति व्युत्पत्तेः, भावाश्च संयमादयो यदा प्रवर्त्तन्ते तदैकसङ्ख्या एव, एकस्मिन् समये एकस्यैवाध्यवसायस्य भावात्, तत् कथं पिण्डत्वम् ? इति, अत्रोत्तरमाह—

दंसणनाणचरित्ताण पज्जवा जे उ जत्तिया वावि । सो सो होइ तयक्खो पज्जवपेयालणा पिंडो ॥ ९५ ॥

व्याख्या—इह चारित्रग्रहणेन तपःप्रभृत्यपि गृह्यते, तस्यापि विरतिपरिणामरूपतया चारित्रभेदत्वात्, ततो दर्शनज्ञानचारित्राणामस्य ये ये 'पर्यवाः' पर्याया अविभागपरिच्छेदरूपा यदा यदा 'यावन्तो' यत्परिमाणा वर्तन्ते स स तदा तदा तदाख्यो–दर्शनाख्यो ज्ञानाख्यश्चारित्राख्यः 'पर्यवपेयालना पिण्डः' पर्यायप्रमाणकरणेन पिण्डः पर्यायसंहतिविवक्षया पिण्डो भवतीत्यर्थः, इयमत्र भावना–इह यदा संयम एव केवलः प्राधान्येन विवक्ष्यते न तु सती अपि ज्ञानदर्शने संयमस्य तदविनाभावित्वेन तयोस्तत्रैवान्तर्भावविवक्षणात्, तदा ये तस्य संयमस्याविभागपरिच्छेदाख्याः पर्यायास्ते समुदायेनैकत्र पिण्डीभूय व्यवतिष्ठन्ते, परस्परं तादात्म्यसम्बन्धेन सम्बद्धत्वात्, ततः संयमपर्यायसंहत्यपेक्षया पिण्ड इति संयम एकविधभावपिण्डत्वेनोच्यमानो न विरुध्यते, यदा तु तस्मिन्नेव संयमरूपेऽध्यवसाये पृथग् ज्ञानविवक्षा क्रियाविवक्षा च भवति, यथा—वस्तुयाथात्म्यपरिच्छेदरूपोऽंशो ज्ञानं प्राणातिपातादिविरतिरूपः परिणामविशेषस्तु क्रियेति तदा ये ज्ञानस्याविभागपरिच्छेदरूपाः पर्यायास्ते परस्परं तादात्म्यसम्बन्धेनावस्थिता इति ज्ञानपिण्डः, ये तु क्रियाया अविभागपरिच्छेदरूपाः पर्यायास्ते क्रियापिण्डः, ततो द्विविधो भावपिण्डो ज्ञानक्रियाख्यः प्रतिपाद्यमानो न विरुध्यते, यदा तु तस्मिन्नेव संयमरूपेऽध्यवसाये पृथग् ज्ञानविवक्षा दर्शनविवक्षा चारित्रविवक्षा च, यथा वस्तुयाथात्म्यपरिच्छेदरूपोऽंशो ज्ञानं तस्मिन्नेव वस्तुनि परिच्छिद्यमाने जिनैरित्थ

मुक्तम् भव इदं यथतिमतिपथिनिष्पन रुचिरूपः परिणामविशेषो वर्धन, प्राणातिपातादिविरतिरूपस्तु परिणामविशेषमारभ्यमिति, तदा ये ज्ञानस्याविभागपरिच्छेदरूपाः पर्यायास्ते समुदिता ज्ञानपिण्डो ये तु दर्शनस्य ते दर्शनपिण्ड ये तु चारित्रस्य ते चारित्रपिण्ड इति त्रिविधो ज्ञानदर्शनचारित्ररूपो भावपिण्ड उपपद्यते, यदा तु तपोरूपोऽपि परिणामो भवति भिन्नश्च चारित्रादिविवक्ष्यते तदा तपः पिण्डः पूर्वोक्तास्त्रयस्तु तपःपिण्ड इति चतुर्विधो भावपिण्डः, यदा तु पञ्च महाव्रतान्येव केवलानि विवक्ष्यन्ते ज्ञानदर्शनतपांसि पुनस्तत्रैवान्तर्भूतानि तदा ये प्राणातिपातविरतिपरिणामस्याविभागपरिच्छेदरूपाः पर्यायास्ते परस्परं समुदितत्वात् प्राणातिपातविरतिपिण्डः ये तु मृषावादविरतिपरिणामस्य ते मृषावादविरतिपिण्डः एवं यावत् परिग्रहविरतिपरिणामस्य ते परिग्रहविरतिपिण्ड इति पञ्चविधो भावपिण्ड उपपद्यते, एवं शेषेष्वपि पिण्डेषु पिण्डत्वभावना भावनीया। एवमप्रशस्तेष्वपि भावपिण्डेषु ॥ सर्वेषं पिण्डनं पिण्ड इति भावविषयां व्युत्पत्तिमधिकृत्य संयमादेः पिण्डत्वमुक्तम्, अथवा भावपिण्डविचारे पिण्डशब्दः कर्तृसाधनो विवक्ष्यते, यथा पिण्डयति—कर्मणा सहात्मानं मिश्रयतीति पिण्डो भावश्चासौ पिण्डश्च भावपिण्डः, एतदेवाह—

कम्माण जेण भावेण अप्पगे चिणइ चिक्कण पिंड । सो होइ भावपिंडो पिंडयए पिंडणं जम्हा ॥ ६६ ॥

व्याख्या—येन 'भावेन' परिणामविशेषेण कर्मणां पिण्ड 'चिक्कणन्ति' अन्योऽन्यानुवेधेन गाढसंश्लेषरूपमात्मनि चिनोति स भावो भवति भावपिण्डः, अत्र हेतुमाह—यस्मात्पिण्डनमिति पिण्डयते आत्मा स्तेन सह येन तत्पिण्डन—कर्म ज्ञानावरणीयादि तत्पिण्डयति-आत्मना सह सम्बद्धं करोति स भावस्तस्मात्कारणात्स भावपिण्ड इत्युच्यते, अत्र चेयं प्रशस्ताप्रशस्तत्वभावना—येन भावेन शुभं

कर्म्म आत्मन्युपचीयते स प्रशस्तो भावपिण्ड[1] येन त्वशुभं सोऽप्रशस्त इति ॥ तदेवमुक्तो भावपिण्डः, तदुक्तौ च व्याख्याताः सर्वेऽपि नामादयः पिण्डा, सम्प्रत्येषां पिण्डानां मध्ये येनाधिकारस्तमभिधित्सुराह—

दव्वे अच्चित्तेण भावम्मि पसत्थएणिहं पगयं । उच्चारियत्थसरिसा सीसमइविकोवणट्ठाए ॥ ६७ ॥

व्याख्या—'इह' अस्यां पिण्डनिर्युक्तौ 'द्रव्ये' द्रव्यपिण्डविषये 'अचित्तेन' अचित्तद्रव्यपिण्डेन 'भावे' भावपिण्डविषये पुनः 'प्रशस्तेन' प्रशस्तभावपिण्डेन 'प्रकृतं' प्रयोजनं, यद्येवं तर्हि शेषाः किमर्थमभिहिताः ? अत आह—'उच्चारिय' इत्यादि, शेषा—नामादयः पिण्डाः पुनरुच्चारितार्थसदृशा उच्चरिताः—प्रतिपादितः योऽर्थः पिण्डशब्देनान्वर्थयुक्तेन तत्सदृशाः—तेन तुल्याः, तेषामपि पिण्डा इत्येवमुच्यमानत्वात्, ततः शिष्याणां मतेः विकोपनं—प्रकोपनं व्युत्पत्तिः तच्छब्दस्यापकतया प्रसरीभवनं तदर्थमुक्ताः, इयमत्र भावना—जगति नामादयोऽपि पिण्डा उच्यन्ते, तथापि पूर्वोक्तप्रकारेण पिण्डशब्दप्रवृत्तिदर्शनात्, केवलमिह तेषां मध्येऽचित्तद्रव्यपिण्डेन प्रशस्तेन च भावपिण्डेनाधिकार, न शेषैरप्रस्तुतत्वादिति, अस्यार्थस्य वैविक्त्येन प्रतिपादनार्थं शेषनामादिपिण्डोपन्यास इति । आह—मुमुक्षूणां सकलकर्म्मनिगडबन्धविमोक्षाय प्रशस्तेन भावपिण्डेन प्रयोजनं भवतु, अचित्तेन तु द्रव्यपिण्डेन किं प्रयोजनम् ?, उच्यते, भावपिण्डोपचयस्य तदुपष्टम्भकत्वात्, एतदेवाह—

आहारउवहिसेज्जा पसत्थपिंडस्सुवग्गहं कुणइ । आहारे अहिगारो अट्ठहिं ठाणेहिं सो सुद्धो ॥ ६८ ॥

---

१ स (द्रव्यपिण्ड) उपष्टम्भको यस्य तस्य

व्याख्या—इहाचित्तद्रव्यपिण्डस्त्रिधा, तद्यथा—आहाररूप उपधिरूपः शय्यारूपश्च, एष च त्रिविधोऽपि यस्तस्य–ज्ञानसंयमादिरूपस्य भावपिण्डस्य 'उपग्रहम्' उपष्टम्भं करोति, एतस्त्रिविधेनाप्यनेन यतीनां प्रयोजनं, केवलमिह ग्रन्थे 'अधिकार' प्रयोजनम्, 'आहारे' आहारपिण्डे, स चाष्टभि' स्थानैः—उद्गमादिभिः परिशुद्धो यथा यतीनां गवेषणीयो भवति तथाऽभिधास्यते ॥ किं कारणमत्र विशेषत आहारपिण्डेन प्रयोजनम्? अत आह—

निव्वाण खलु कज्जं नाणाइतिगं च कारणं तस्स। निव्वाणकारणाणं च कारणं होइ आहारो ॥ ६९ ॥

व्याख्या—इह मुमुक्षूणां 'कार्यं' कर्त्तव्यं निर्वाणमेव न शेषं, खलुशब्दोऽवधारणार्थः, शेषस्य सर्वस्यापि तुच्छत्वात्, 'तस्य' निर्वाणस्य कारणं 'ज्ञानादित्रिकं' ज्ञानदर्शनचारित्ररूपं 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति (तत्त्वा० अ० १ सू० १) वचनप्रामाण्यात्, ततस्तदवश्यमुपादेयम्, उपायसेवामन्तरेणोपेयप्राप्त्यसम्भवात्, तेषां ज्ञानादीनां निर्वाणकारणानां कारणमष्टभिः स्थानैः परिशुद्ध आहारः, आहारमन्तरेण धर्मकायस्थितेरसम्भवात्, उद्गमादिदोषदुष्टस्य च चारित्रभ्रंशकारित्वात् ॥ एतदेवाहारस्य निर्वाणकारणज्ञानादिकारणत्वं दृष्टान्तेन समर्थ्यते—

जह कारणं तु तंतू पडस्स तेसिं च होंति पम्हाइं। नाणाइतिगस्सेवं आहारो मोक्खनेमस्स ॥ ७० ॥

व्याख्या—यथा पटस्य तन्तवः कारणं तेषामपि तन्तूनां कारणानि पक्ष्माणि भवन्ति, 'एवम्' अनेन प्रकारेण ज्ञानादित्रिकस्य 'मोक्खनेमस्स' ति नेमशब्दो देश्यः कार्याभिधाने रूढः, ततो मोक्षो नेमः—कार्यं यस्य तस्य कारणं भवत्याहारः। इह कश्चिद् ज्ञानादीनां मोक्षकारणतामेव न प्रतिपद्यते, विविधभवात्सस्वाविसंवादः, ततस्तं प्रति ज्ञानादीनां मोक्षकारणतां दृष्टान्तेन भावयति—

जह कारणमणुवहय कज्ज साहेइ अविकल नियमा । मोक्खक्खमाणि एवं नाणाईणि उ अविगलाई ॥ ७१ ॥

व्याख्या—यथा बीजादिलक्षणं कारणमनुपहतम् अग्न्यादिभिरविध्वस्तम् 'अविकलं' परिपूर्णसामग्रीसम्पन्नं नियमादङ्कुरादिलक्षण कार्यं जनयति, 'एवम्' अनेनैव प्रकारेण ज्ञानादीन्यप्यविकलानि—परिपूर्णानि दुःखम्भावनुपहतानि च नियमत 'मोक्षक्षमाणि' मोक्षलक्षणकार्यसाधनानि भवन्ति, तथाहि—ससारापगमरूपो मोक्ष., संसारस्य च कारणं मिथ्यात्वाज्ञानाविरतयः, तत्प्रतिपक्षभूतानि च ज्ञानादीनि, ततो मिथ्यात्वादिजनित कर्म्म नियमतो ज्ञानाद्यासेवायामपगच्छति, यथा हिमपातजनितं शीतमनलासेवायामिति, कारणानि मोक्षस्य ज्ञानादीनि, तानि च परिपूर्णानि दुःखम्भावनुपहतानि च, अनुपहतत्वं च चारित्रस्योद्गमादिदोषपरिशुद्धाहारग्रहणे सति, नान्यथा, ततोऽष्टभिः स्थानैराहारो यतिभिर्ग्राह्य इत्येतदत्र वक्तव्यम्, अत आहारपिण्डेनाधिकारः ॥ तदेवमुक्तः पिण्ड, सम्प्रत्येषणा वक्तव्या, तत्र पिण्डस्योपसंहारमेषणायाश्चोपक्षेपं चिकीर्षुरिदमाह—

सखेवपिंडियत्थो एव पिंडो मए समक्खाओ । फुडवियडपायडत्थ वोच्छामी एसण एत्तो ॥ ७२ ॥

व्याख्या—'एवं' पूर्वोक्तेन प्रकारेण 'सङ्क्षेपपिण्डितार्थः' सङ्क्षेपेण—समासेन सामान्यरूपतयेत्यर्थः पिण्डितः—एकत्र मीलित तात्पर्यमाश्रित्यस्यापितोऽर्थः—अभिधेय यस्य स तथारूपः पिण्डो मया व्याख्यातः, 'इतः' ऊर्ध्वम् 'एषणाम्' एषणाभिधायिका गाथा प्रकर्वन्ति 'स्फुटविकटप्रकटार्था' स्फुटः—निर्मल' न तात्पर्यानवबोधेन कश्मलरूप' विकटः—सूक्ष्ममतिगम्यतया दुर्भेदः प्रकटः—तथा विधविशिष्टवचनरचनाविशेषतः सुखमतिपाद्यो योऽक्षरव्याख्यातेष्वपि प्रायः स्वयमेव परिस्फुरन्निव लक्ष्यते स प्रकट इति भावार्थः अर्थः—मभिधेयं यस्याः सा तथा तां वक्ष्ये ॥ तत्र 'तत्त्वभेदपर्यायैर्व्याख्ये'ति प्रथमतः सुखावबोधार्थमेषण या एकार्थिकान्यभिधित्सुराह—

एसण गवेसणा मग्गणा य उग्गोवणा य बोद्धव्वा । एए उ एसणाए नामा एगट्ठिया होंति ॥ ७३ ॥

व्याख्या—एषणा गवेषणा मार्गणोद्गोपना एतानि चशब्दादन्वेषणाप्रभृतीनि चैषणाया एकार्थिकानि नामानि भवन्ति, तत्र ' इषु इच्छायां ' एषणम् एषणा इच्छा, गवेषणा—अन्वेषणा गवेषणं गवेषणा, मार्गणं मार्गणा, उद्गोपनम् उद्गोपना ॥ एवं नामान्यभिधाय सम्प्रति भेदानभिधित्सुराह—

नाम ठवणा दविए भावंमि य एसणा मुणेयव्वा । दव्वे भावे एक्केक्कया उ तिविहा मुणेयव्वा ॥ ७४ ॥

व्याख्या—एषणा चतुर्विधा ज्ञातव्या, तद्यथा—नामैषणा स्थापनैषणा तथा ' द्रव्ये ' द्रव्यविषयैषणा ' भावे ' भावविषया च, तत्र नामैषणा एषणा इति नाम यद्वा—जीवस्याजीवस्य चैषणाशब्दान्वर्थरहितस्य एषणा इति नाम क्रियते स नामनामवतोरभेदोपचारात्, यद्वा—नाम्ना एषणा नामैषणा इति व्युत्पत्तेर्नामैषणेत्यभिधीयते, स्थापनैषणा एषणावत साध्वादेः स्थापना, इदैषणा साध्वादेरभिन्ना सत तद्वता रास्साध्वादिरेव एषणेत्यभिधीयते, तत स स्थाप्यमान स्थापनैषणा, स्थाप्यते इति स्थापना स्थापना चासौ एषणा च स्थापनैषणा, द्रव्यैषणा द्विधा—आगमतो नोआगमतश्च, तत्राऽऽगमत एषणाशब्दार्थस्य ज्ञाता तत्र चानुपयुक्त', ' अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्त्रिधा, तद्यथा—ज्ञशरीरद्रव्यैषणा भव्यशरीरद्रव्यैषणा ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यैषणा च, तत्रैषणाशब्दार्थज्ञस्य यच्छरीरमपगतजीवितं सिद्धशिलातलादिगतं तद्भूतभावतया ज्ञशरीरद्रव्यैषणा, यस्तु बालको नेदानीमेषणाशब्दार्थमवबुध्यते अथ चायत्यां तेनैव शरीरसमुच्छ्रयेण परिवर्द्धमानेन भोत्स्यते स भाविभावकारणत्वाद्भव्यशरीरद्रव्यैषणा, ज्ञशरीरभव्यशरीरव्यतिरिक्ता तु द्रव्यैषणा सचित्तादिद्रव्यविष

या, भावैषणाऽपि द्विधा—आगमतो नोआगमतश्च, तत्र आगमत एषणाशब्दार्थस्य परिज्ञाता तत्र चोपयुक्तः, 'उपयोगो भावनिक्षेप' इति वचनात्, नोआगमतो गवेषणाग्रहणैषणादिभेदात् त्रिधा, तत्र नामैषणां स्थापनैषणां द्रव्यैषणां आगमतो नोआगमतश्च ज्ञशरीरभव्यशरीररूपां भावैषणां चागमतः सुज्ञानत्वादनादृत्य शेषां द्रव्यैषणां भावैषणां च व्याचिख्यासुरिदमाह—'दव्वे' इत्यादि, द्रव्ये—द्रव्यविषया 'भावे च' भावविषया, एकैका 'त्रिविधा' त्रिप्रकारा ज्ञातव्या, तत्र द्रव्यविषया त्रिविधा सचित्तादिभेदात्, तद्यथा—सचित्तद्रव्यविषया अचित्तद्रव्यविषया मिश्रद्रव्यविषया च, भावविषयाऽपि त्रिधा गवेषणादिभेदात्, तद्यथा—गवेषणैषणा ग्रहणैषणा ग्रासैषणा च ॥ तत्र द्रव्यैषणापि सचित्तद्रव्यविषया त्रिधा, तद्यथा—द्विपदविषया चतुष्पदविषया अपदविषया च, तत्र प्रथमतो द्विपदद्रव्यविषयामेषणामाह—

जम्मं एसइ एगो सुयस्स अन्नो तमेसए नट्ठं । सत्तुं एसइ अन्नो पयए अन्नो य से मच्चुं ॥ ७५ ॥

व्याख्या—इह यद्यपि एषणादीनि चत्वारि नामानि प्राग् एकार्थिकान्युक्तानि, तथाऽपि तेषां कथञ्चिदर्थभेदोऽप्यस्ति, तथाहि—एषणा इच्छामात्रमभिधीयते, तच्च गवेषणादावपि विद्यते, अत एव गवेषणादय एषणाया पर्याया उक्ताः, गवेषणादीनां तु परस्परं नियतोऽप्यर्थभेदोऽस्ति, तथाहि—गवेषणमनुपलभ्यमानस्य पदार्थस्य सर्वतः परिभावनं, मार्गणं—निपुणबुद्ध्याऽन्वेषणम्, उद्गोपन—विवक्षितस्य पदार्थस्य जनप्रकाशनचिकीर्षा, तत एतेषां क्रमेणोदाहरणान्याह—एकः कोऽप्यनिर्दिष्टनामा देवदत्तादिकः सन्तत्यादिनिमित्तं सुतस्य 'जन्म' उत्पत्तिं 'एषते' इच्छति, इदमेषणाया उदाहरणम्, अन्यः पुनः कोऽपि यज्ञदत्तादिकः सुतं क्वापि नष्टम् 'एषते' गवेषयते, इदं गवेषणाया उदाहरणम्, अन्यः कोऽपि विष्णुमित्रादिकः 'पदेन' पदानुसारेण पृथ्वीतलसमुत्थचरणप्रतिबिम्बानुसारेणेत्यर्थः, शत्रुम् 'एषते' मार्गयते, इदं मार्गणाया उदाहरणम्, अन्यः पुन 'से' तस्य शत्रोः 'मृत्युं' मरणम् 'एषते' उद्गोपयति, सर्वजनप्रकाशं मृत्युमभिप्रायमभिल-

पतीत्यर्थे', इदमुपनाया उदाहरणम् ॥ एवमुक्ता सचित्तद्विपदद्रव्यविषया एषणा, सम्प्रति सचित्तचतुष्पदापदविषयां मिश्रविषयामचित्तविषयां च प्रतिपादयति—

एमेव सेसएसुवि चउप्पयापयअचित्तमीसेसु । जा जत्थ जुज्जए एसणा उ तं तत्थ जोएज्जा ॥ ७६ ॥

व्याख्या—'एवमेव' द्विपदेष्विव 'शेषेष्वपि' द्विपदेभ्यो व्यतिरिक्तेष्वपि चतुष्पदापदाचित्तमिश्रेषु गवादिवृक्षापूपकादिद्रम्मादिकटककेयूराद्याभरणविभूषितसुतादिरूपेषु द्रव्येषु विषयेषु या यत्रैषणा—इच्छागवेषणामार्गणादिरूपा 'युज्यते' घटते तां तत्र पूर्वोक्तगाथानुसारेण योजयेत्, यथा कोऽपि दुग्धाभ्यवहाराय गामिच्छति, कोऽपि पुनस्तामेव क्वापि नष्टां गवेषयते, अन्यः पुनस्तामेव गां परास्कन्दिभिरपह्रियमाणां गवादिपदप्रतिबिम्बानुसारेण मृगयते, कोऽपि पुनः स्वशौर्यप्रकटनाय जनप्रकाशं व्याघ्रमपगतासुं चिकीर्षति, एवमपदादिष्वपि भावना कार्या ॥ उक्ता द्रव्यैषणा, साम्प्रतं भावैषणां त्रिप्रकारामभिधित्सुराह—

भावेसणा उ तिविहा गवेसगहणेसणा उ बोद्धव्वा । गासेसणा उ कमसो पन्नत्ता वीयरागेहिं ॥ ७७ ॥

व्याख्या—'भावः' ज्ञानादिरूपः परिणामविशेषः तद्विषया एषणा भावैषणा, यथा ज्ञानदर्शनचारित्राणामेकदेशतः समूलघातं वा घातो न भवति तथा पिण्डादेरेषणमिति भावः, साऽपि 'त्रिधा' त्रिप्रकारा 'क्रमशः' क्रमेण प्रज्ञप्ता वीतरागैः, केन क्रमेण? इत्यत आह—'गवेसे'त्यादि, पूर्वं गवेषणैषणा ततो ग्रहणैषणा ततो ग्रासैषणा ॥ कस्मात्पुनरित्थं गवेषणादीनां क्रम? इत्याह—

अगविट्ठस्स उ गहणं न होइ न य अगहियस्स परिभोगो । एसणतिगस्स एसा नायव्वा आणुपुव्वी उ ॥ ७८ ॥

व्याख्या—इह न 'अगवेषितस्य' अपरिभावितस्य पिण्डादेर्ग्रहणं, नाप्यगवेषितस्य परिभोगः, तत एषणाधिकारस्य 'एषा' पूर्वोक्ता 'आनुपूर्वी' क्रमो ज्ञातव्यः ॥ सम्प्रति गवेषणाया नामादीन् भेदानाह—

नामं ठवणा दविए भावंमि गवेसणा मुणेयव्वा । दव्वंमि कुरंगगया उग्गमउप्पायणा भावे ॥ ७९ ॥

व्याख्या—'नामं'ति नामगवेषणा स्थापनागवेषणा एते च एषणे इव सम्यक् स्वयमेव भावनीये, 'द्रव्ये' द्रव्यविषया 'भावे' भावविषया, तत्र द्रव्यविषया आगमनोआगमभेदाद्विधा, तत्राऽऽगमतो गवेषणाशब्दार्थज्ञाता तत्र चानुपयुक्तः, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्त्रिधा ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्र ज्ञशरीरभव्यशरीररूपे द्रव्यगवेषणे एषणे इव भावनीये, ज्ञशरीरभव्य शरीरव्यतिरिक्तगवेषणा सचित्तादिद्रव्यविषया, तत्र कुरङ्गगजा उदाहरणं, तथा चाह—'दव्वंमि कुरंगगया' द्रव्ये—द्रव्यविषयायां गवेषणायां कुरङ्गा'—मृगाः गजा'—हस्तिनो दृष्टान्ताः, 'भावे' भावविषया गवेषणा 'उग्गमउप्पायण'त्ति सूचनात्सूत्रमिति न्यायादुद्गमोत्पाद नादोषविमुक्ताहारविषया ॥ यदुक्तं—'दव्वंमि कुरंगगया' इति, तत्र कुरङ्गदृष्टान्तं गाथाद्विकेनाभिधित्सुराह—

जियसत्तु देवि चित्तसभ पविसणं कणगपिट्ठपासणया । दोहल दुब्बल पुच्छा कहणं आणा य पुरिसाणं ॥ ८० ॥

सीवन्निसरिसमोयगकरणं सीवन्निरुक्खहेट्ठेसु । आगमण कुरंगाणं पसत्थ अपसत्थ उवमा उ ॥ ८१ ॥

व्याख्या—सुगमं, नवरं भावार्थः कथानकादवसेयः, तच्चेदं—क्षितिप्रतिष्ठितं नाम नगरं, तत्र राजा जितशत्रुस्तस्य भार्या पद्मावती देवी नाम्ना सदर्शना. तस्याः कदाचित्प्रसन्नाया राज्ञा सह चित्रसभायां प्रविष्टायाश्चित्रलिखितान् कनकपृष्ठान् मृगान् दृष्ट्वा तन्मांसभ

क्षणे दौहदमजायत, दौहदे चासम्पद्यमाने तस्याः सेर्व्वतः शरीरस्य दौर्बल्यमभवत्, तच दृष्ट्वा नृपतिः सम्वेगं तां पृष्टवान्, यथा–हे प्रिये! किमतीव शरीरे तव दौर्बल्यमभवत ?, ततः सा दौहदमचकथत, ततो राजा सत्वरं कनकपृष्ठकुरङ्गानयनाय पुरुषान् प्रेषितवान्, तेऽपि च पुरुषाः स्वचेतसि चिन्तयामासुः–इह यस्य यद्वल्लभं स तत्रासक्तः सन् प्रमादभाव भजमान सुखेनैव गृह्यते, कनकपृष्ठानां च कुरङ्गाणामिष्टानि श्रीपर्णीफलानि, तानि च सम्प्रति न विद्यन्ते, ततस्तस्सहशान्मोदकान् कृत्वा श्रीपर्णीवृक्षतलेषु सर्वतः पुञ्जकपुञ्जकाकारेण क्षिप्त्वा तेषां समीपे पाशान स्थापयाम इति तथैव कृत, ते च कनककृष्ठा करथो निजेन यूथाधिपतिना सह स्वेच्छया परिभ्रमन्त स्तत्रागताः, यूथाधिपतिश्च श्रीपर्णीफलाकारान् पुञ्जकपुञ्जकस्थितान्मोदकानवलोक्य मृगानुक्तवान्, यथा–भो करथो! युष्माकं च बन्धनार्थं मिदं केनापि धूर्तेन कृतं कूटं वर्त्तते, यतो न सम्प्रति श्रीपर्णीफलानि सम्भवन्ति, न च सम्भवन्त्यपि पुञ्जकपुञ्जकाकारेण घटन्ते, अथ मन्येथास्त्वयाविधपरिभ्रमद्वातसम्पर्कतः पुञ्जकपुञ्जकाकारेण घटन्ते, तदप्ययुक्तं, ननु पुरापि वाता वान्ति स्म, न तु कदाचनाप्येवं पुञ्जकपुञ्जकाकारेण भवन्ति स्म, तथा चैतदेव निर्युक्तिकारः पठति—

विइअमेय कुरंगाण, जया सीवन्नि सीयइ। पुरावि वाया वायंता, न उण पुंजकपुंजका ॥ ८२ ॥

व्याख्या—'विदितं' प्रतीतम्, एतत्कुरङ्गाणां यदा श्रीपर्णी 'सीदति' धातूनामनेकार्थत्वात्फलति, तस्मादिदानीं फलानि सम्भवन्ति, सम्भवन्तु वा तथाऽपि कथं पुञ्जकपुञ्जकाकारेण स्थितानि ?, यावताद्यावधिनु पुरापि वाता वान्ति स्म, न पुनरेवं पुञ्जकपुञ्जकाः फलानामभवन्, तस्मात्कूटमिदमस्माकं बन्धनाय कृतं वर्त्तते इति मा यूयमेतेषामुपकण्ठं गमत, एवमुक्ते येऽस्वद्वचः प्रतिपन्नं ते दीर्घमीपिनो वनेषु स्वेच्छाविहारसुखभागिनश्चाभवन्त, यैस्त्वाहारलम्पटतया तद्वचो न प्रतिपन्नं ते पाशबन्धनादिदुःखभागिनोऽभवन्। इह यथू

याधिस्ते: श्रीपर्णीफलसमामोदकमध्यसदोपत्वनिर्दोषत्वपर्यालोचनं सा ग्रहणगवेषणा । इह निशीथचूर्ण्यनुसारेण 'पसत्थमपसत्थ उवमा य' इति प्रतिपादयता सार्थोऽन्विष्टोऽपूर्वः सुविहितो ग्राह्यः, स चाय—यूथाधिपतिस्थानीया आचार्या मृगयूथस्थानीयाश्च साधवः, तत्र ये गुरुनियोगत आधाकर्मादिदोषदुष्टाहारपरिहारिणस्ते प्रशस्तकुरङ्गोपमा ग्राह्याः, ये त्वाहारलाम्पट्यतो गुर्वाज्ञामपाकृत्याधाकर्मादिपरिभोगिणो मृगास्ते अप्रशस्तकुरङ्गसदृशा वेदितव्याः, अत्रार्थे च कथानकमिदं—वसन्तो नाम सन्निवेशः, तत्र यथाऽऽगमं विहरन्त' समिता नाम सूरयः समायाताः, तत्र च जिनदत्तो नाम श्रावक आसीत्, स च जिनवचनसाधुभक्तिपरीतचेता दानश्राद्धः कदाचित्साधुनिमित्तं भक्त माधाकर्म कारितवान्, सूरयश्च सर्वमपि तद्वृत्तान्तं कथञ्चित्परिज्ञातवन्तः, ततस्तैः साधवस्तत्र प्रविशन्तो निवारिताः, यथा—भो साधवस्तत्र साधुनिमित्त आहारः कृतो वर्तते इति मा तत्र यूयं गमत, एवमुक्ते यैस्तद्वच प्रतिपन्नं ते आधाकर्मपरिभोगजनितपापकर्मणा न स्पृष्टा गुर्वाज्ञा च परिपालिता, ततः शुद्धशुद्धतरसंयमप्राप्तिभावतो मुक्तिसुखभागिनोऽभवन्, यैस्त्वाहारलाम्पट्यतो भाविनं दोषमगणय्याधाकर्माणि मृगा इव वशिकनिवेशिते मांसे प्रवृत्ताः ते कुगतिरेत्याधाकर्मपरिभोगतो गुर्वाज्ञाभङ्गतश्च दीर्घतरसंसारभागिनो जाताः ॥ साम्प्रतं गजदृष्टान्तमाह—

हत्थिग्गहण गिम्हे अरहट्टेहिं भरण च सरसीण । अब्भुदएण नलवण आरूढा गयकुलागमण ॥ ८३ ॥

व्याख्या—हस्तिग्रहणं यथा कर्त्तुमिष्टेष राजा मिन्त्वा, ततस्तद्ग्रहणाय ग्रीष्मकालेऽपि पुरुषमेषणा सैव सरसीनामरघट्टैर्भरणं कृतं, ततोऽभ्युदकेन नलवनान्यतिशयेन प्ररूढानि, ततो गजकुलस्यागमनमिति गाथाक्षरार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्—आनन्दं नाम पुरं, तत्र रिपुमर्दनो नाम राजा, तस्य भार्या धारिणी, तस्य च पुत्रस्य भस्यासन्ने गजकुलवलस कृतं

मिष्यमरण्यं, ततो राजा क्वचिद् गजयूथं महाबलमित्यवश्यं मया गजा ग्रहीतव्या इति परिभाव्य गजग्रहणाय सत्वरं पुरुषान् प्रेरयामास, ते च पुरुषाश्चिन्तितवन्तो यथा—गजानां नलचारिरभीष्टा, सा च सम्प्रति ग्रीष्मकाले न सम्भवति, किन्तु वर्षासु, तत इदानीमरण्ये सरसीर्निर्मिमो येन नलवनान्यतिप्ररूढानि भवन्तीति, तथैव कृतं, नलवनप्रत्यासन्नाश्च सर्वतः पाशा मण्डिताः, इतश्च परिभ्रमन्तो यूथाभिर्विसरिता हस्तिन' समाजग्मुः, यूथाधिपतिश्च तानि नलवनानि परिभाव्य गजान् प्रति उवाच—भो' स्वच्छेरमा ! नामूनि नलवनानि स्वाभाविकानि, किन्त्वस्माकं बन्धनाय केनापि धूर्तेन कृतानि कृत्यानि, यत एवं नलवना यतिप्ररूढानि सरस्यो वाऽतीव जलसम्भृता वर्षासु सम्भवन्ति नेदानीं ग्रीष्मकाले, अथ ब्रवीरन् प्रत्यासन्नविन्ध्यपर्वतनिर्झरणप्रवाहत एवं सरस्यो भृता नलवनानि चातिप्ररूढानि ततो नामूनि कृत्यानि, तदयुक्तम्, अन्यदाऽपि हि खलु निर्झरणान्यासीरन्, न चैवं कदाचनाप्यतिजलभृताः सरस्योऽभूवन्, तथा चैतदर्थसंप्राहिकामेव निर्युक्तिकारो गाथां पठति—

विड्यमेय गजकुलाण, जया रोहंति नलवणा । अन्नयावि झरंति हुवा, न य एवं बहुओदगा ॥ ८४ ॥

व्याख्या—विदितमेतद् गजकुलानां यदा 'रोहन्ति' अतिशयेन प्ररूढानि भवन्ति नलवनानि, तस्मादमूनि स्वाभाविकानि, अथ निर्झरणवशादेवं प्रस्थानि तत आह—अन्यदाऽपि हदा झरन्ति, न खेव कदाचनापि बहूदकाः सरस्योऽभवन्, तस्माद्धूर्तेन केनाप्यमूनि कृतानि कूटानीति माऽत्र पूर्यं यासिष्ट, एवमुक्ते येस्तद्वचः प्रतिपन्नं ते दीर्घकालं वनस्वेच्छाविहारसुखभागिनो जाताः, येस्तु न कृतं ते बन्धमृत्यादिदु:खभागिनः, इहापि गजयूथाधिपतेर्नवनसदोषनिर्दोषरूपतापरिभावनं द्रव्यगवेषणा, दार्ष्टान्तिकयोजना तु पूर्ववत्

तत् स्वयमेव भावनीया, तदेवमुक्ता द्रव्यगवेषणा, साम्प्रतं भावगवेषणा कर्त्तव्या, सा च उद्गमाशुद्धाहारविषया, तत्र प्रथमत उद्गमस्यै-कार्थिकानि नामानि नामादिकांश्च भेदान् प्रतिपादयति—

उग्गम उग्गोवण मग्गणा य एगट्ठियाणि एयाणि । नामं ठवणा दविए भावंमि य उग्गमो होई ॥८५॥

व्याख्या—उद्गम उद्गोपना मार्गणा च एकार्थिकान्येतानि नामानि, स चोद्गमश्चतुर्धा भवति, तद्यथा—'नामं'ति नामोद्गम—यदु-द्गम इति नाम, अथवा जीवस्याजीवस्य वा यद् उद्गम इति नाम स नामनामवतोरभेदोपचारात्, यद्वा नाम्ना उद्गमो नामोद्गम इति व्युत्पत्तेर्नामोद्गमः, स्थापनोद्गमः उद्गमः स्थाप्यमानः, 'द्रव्ये' द्रव्यविषयः, 'भावे' भावविषयः ॥ तत्र द्रव्योद्गमो द्विधा—आगमतो नोआगमतश्च, नोआगमतोऽपि त्रिधा—ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्, तत्राऽऽगमतो नोआगमतश्च ज्ञशरीरभव्यशरीररूपौ द्रव्यगवेषणा वद् भावनीयौ, ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्योद्गमं तथा नोआगमतो भावोद्गमं च प्रतिपादयति—

दव्वंमि लड्डुगाई भावे तिविहोग्गमो मुणेयव्वो । दंसणनाणचरित्ते चरित्तुग्गमेणेत्थ अहिगारो ॥ ८६ ॥

व्याख्या—'द्रव्ये' द्रव्यविषये उद्गमः 'लड्डुकादौ' लड्डुकादिविषयो लड्डुकादेः सम्बन्धी वेदितव्यः, अत्राऽऽदिशब्दाद् ज्योतिरादिपरिग्रहः, तथा 'भावे' भावविषयः 'त्रिविधः' त्रिप्रकारः ज्ञातव्यः, तद्यथा—'दर्शने' दर्शनविषयः 'ज्ञाने' ज्ञानविषय, 'चारित्रे' चारित्रविषयः, अत्र तु चारित्रोद्गमेनाधिकारः—प्रयोजनं, चारित्रस्य प्रधानमोक्षाङ्गत्वात्, तथाहि—ज्ञानदर्शने सती अपि न चारित्रमन्तरेण कर्म्ममलापगमाय प्रभवतः, श्रेणिकादौ तथाऽनुपलम्भात्, चारित्रं पुनरवश्यं ज्ञानदर्शनाविनाभावि स्वल्पेनापि चामि

नवकर्म्मोपादाननिषेधपूर्वोपार्जितकर्म्मापगमकरणस्वरूपं, ततस्तत्पधानं मोक्षस्याङ्गं, प्रधानानुयायि च प्रेक्षावतां प्रयत्नः, ततोऽत्र चारित्रोद्गमेन प्रयोजनम् ॥ लड्डुकादेरित्यादिशब्देन सूचितं ज्योतिरुद्गमादिरूपं द्रव्योद्गमं विवरीतुमाह—

जोइसतणोसहीणं मेहरिणकराणमुग्गमो दव्वे । सो पुण जत्तो य जया जहा य दव्वुग्गमो वच्चो ॥ ८७ ॥

व्याख्या—ज्योतिषां—चन्द्रसूर्यादीनां तृणानां—दर्भादीनां औषधीनां—शाल्यादीनां मेघानां—जीमूतानां ऋणस्य—उत्तमर्णाय दातव्यस्य कराणां—राजदेयभागानां, उपलक्षणमेतत् अन्येषामपि द्रव्याणां, य उद्गमः स ' द्रव्ये ' द्रव्यविषयो द्रव्यस्य सम्बन्धी वेदितव्यः, स पुनर्द्रव्योद्गमः ' यतः ' यस्मात्स्थानात् ' यदा ' यस्मिन् काले ' यथा ' येन प्रकारेण भवति तथा वाच्यः, तत्र ज्योतिषां मेघानां च आकाशदेशात् तृणानामोषधीनां च भूमेः ऋणस्य व्यवहारादेः कराणां नृपतिनियुक्तपुरुषादेः, तथा यदेति ज्योतिषां मध्ये सूर्यस्य प्रभाते शेषाणां तु कस्यापि कस्यांचिद्वेलायां तृणादीनां प्रायः श्रावणादौ, तथा यथेति ज्योतिषां मेघानां चाऽऽकाशे प्रसरणेन तृणानामौषधीनां च भूमीं स्फोटयित्वा ऊर्ध्वं निस्सरणेन ऋणस्य पञ्चकशतादिवर्द्धनरूपेण कराणां प्रतिवर्षं गृहस्य गृहस्य द्रम्मद्वयादि प्रामिस्थैर्यरूपेण, एवं शेषाणामपि द्रव्याणां यतो यदा यथा च यथासम्भवमुद्गमो भावनीयः ॥ इह प्राग् ' दव्वंमि लड्डुगाई ' इत्युक्तं, तेन च लड्डुकप्रियकुमारकथानकं सूचितम्, अतस्तदेवेदानीं गाथात्रयेणोपदर्शयति—

वासहरा अणुजत्ता अत्थाणी जोग्ग किड्डकाले य । घडगसरावेसु कया उ मोयगा लड्डुगपियस्स ॥ ८८ ॥

जोग्गा अजिण्ण मारुय निसग्ग तिसमुत्थ तो सुद्धसमुत्थो । आहारुग्गमचिंता असुइ्वि वुहा मलप्पभवो ॥ ८९ ॥

तस्सेवं वेरग्गुग्गमेण सम्मत्तनाणचरणाणं । जुगवं कमुग्गमो वा केवलनाणुग्गमो जाओ ॥ १० ॥

व्याख्या—'वासवुडाए' वासभयनात् मनुयात्रा—निर्गमः, तत्र आस्थान्यां योग्यक्रीडा सा व्यधीयत, तथा 'काले' भोजनवेलायां तस्य 'लड्डुकप्रियस्य' मोदकप्रियस्य कुमारस्य योग्या घटेषु शरावेषु च कृत्वा मोदका जनन्या प्रेषिताः, ते च परिजनेन सह स्वेच्छं तेन भुक्ताः, ततो नृपोऽपि योग्यक्रीडा निरीक्षणासक्तचित्ततया तस्य रात्रौ जागरणभावतस्ते मोदका न जीर्णाः, ततोऽजीर्णदोषप्रभावतोऽतीव पूतिगन्धो मारुतनिसर्गोऽभवत्, तत्र आहारोपरमचिन्ता जाता, यथा 'मिसमुत्था' घृतगुडक-णिक्कसमुत्था एते मोदकाः, ततः शुचिसमुत्थाः, शुभे च भाजने कृतवर्ने, केवलं द्विधा मलप्रभवोऽयं देहः, ततस्तत्सम्पर्कतोऽशुचयो जाता इत्येवं तस्य वैराग्योद्गमेन ज्ञानदर्शनचारित्राणां युगपत्क्रमेण वा उद्गमो जातः, तत केवलज्ञानोद्गम इति गाथाक्षरार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्—श्रीस्थलकं नाम नगरं, तत्र राजा भानुः, तस्य भार्या रुक्मिणी, तया सुरूपनामा तनयः, स च यथा सुखं पञ्चभिर्धात्रीभिः परिपाल्यमानः प्रथमसुरकुमार इवानेकस्वजनहृदयाभिनन्दनं कुमारभावमधिरूढो, ततः शुक्लपक्षचन्द्रबिम्बमिव प्रतिदिवसं कलाभिरभिवर्धमानः क्रमेण कमनीयकामिनीजनमनःप्रह्लादकारिणीं यौवनश्रियमधिजगाम, तस्मै च स्वभावत एव रोचन्ते मोदकाः ततो लोके तस्य मोदकप्रिय इति नाम प्रसिद्धिमगमत्, स च कुमारोऽन्यदा वसन्तसमये वासभवनात् मातरुत्थाय आस्थानमण्डपि-कायामाजगाम, तत्र च निजशरीरलावण्यापाकृतसुरसुन्दरीरूपातुरमनोरविलासिनीजनगीतनृत्यादिकं परिभावयितुं प्रावर्तत, तत्र च स्थितस्य भोजनवेलायामागतायां भोजननिमित्तं जननी प्रधानशरावसम्पुटेषु शेषपरिजननिमित्तं च घटेषु कृत्वा मोदकान् प्रेषितवती, तदशेषेण परिजनेन सह मोदका यथेच्छं बुभुजिरे, ते च रात्रावपि नीलत्पाविध्याक्षिप्तचित्ततया जागरणभावतो न जीर्णाः, ततोऽजीर्ण-

दोषमभान्तोऽपोवातोऽपीव पूतिगन्धिर्निर्जगाम, तद्गन्धपुद्गलाश्च सर्वतः परिभ्रमन्तस्तन्नासिकां प्रविविशुः, ततस्तं तथारूपं पूतिगन्धमाघ्राय चिन्तयामास, यथाऽमी मोदका घृतगुडकणिकादिनिष्पन्नास्तथा शुचिद्रव्यसमुत्था एवैते केवलमयं यो देहो जननीशोणितजनकशुक्ररूपादि पामल्यमलत्वादशुचिरूपः, तत्सम्पर्कवशतोऽशुचिरूपा जाताः, दृश्यन्ते च कर्पूरादयोऽपि पदार्थाः स्वरूपतः सुरभिगन्धयोऽपि देहसम्पर्कतः क्षणमात्रेण दुरभिगन्धयो जायमाना, क्षणान्तरे शरीरगन्धस्यैव पूत्यात्मकस्योपलम्भात्, तत इत्थमशुचिरूपस्यानेकापायसंसर्गसङ्कुलस्य शरीरस्यापि कृते ये मूढमनसाय नरकादिकुगतिविनिपातकारीणि पापकर्म्माणि सेवन्ते ते सचेतना अपि मोहमयनिद्रोपहतविवेकचेतनत्वादचेतना एव परमार्थतो वेदितव्याः, यदपि च तेषां शास्त्रादिपरिज्ञानं तदपि परमार्थतः शरीरायासफलं, यद्वा तदपि पापानुबन्धिकर्म्मोदयवशतस्तथाविधस्योपशमनिबन्धनत्वादशुभकर्म्मकार्यमेवेति तत्त्ववेदिनामुपेक्षास्पदं, विद्वत्ता हि सा तत्त्ववेदिनां मतंसारा या यथाऽवस्थितं वस्तु विविच्य हेयोपादेयहानोपादानमहाविफला, या तु सकलजन्माभ्यासमहत्त्वया कथमपि परिपाकमागताऽपि सती सदैव तथाविधपापकर्म्मोदयवशतः एकान्ताशुचिरूपेष्वपि युवतिमनवदनजघनवक्षोजादिशरीरावयवेषु रामणीयकव्यावर्णनफला सा इहलोकेऽपि शरीरायासफला परलोके च कुगतिविनिपातहेतुरित्युपेक्षणीया, ये पुनः परमर्षेः सर्वज्ञस्य सर्वज्ञमतानुसारितर्कागमशास्त्राभ्यासतो विदितयथाऽवस्थितहेयोपादेयवस्तव इत्थं शरीरस्याशुचिरूपतां परिभाव्य युवतिकलेवरेषु नाभिरज्यन्ते नापि कर्म्माणि स्वशरीरकृते पापानि समाचरन्ति किन्तु शरीरादिनिस्पृहतया निरन्तरं सम्यक्शास्त्राभ्यासतो ज्ञानामृताम्भोधिनिमग्नाः समभिप्रशमाः परिषहादिभिरजिताः सकलकर्म्मनिर्मूलनाय यतन्ते ते धन्यास्ते तत्त्ववेदिनस्तानहं नमस्करोमि तदनुष्ठितं च मार्गमिदानीमनुतिष्ठामि, इत्येवं तस्य मोदकप्रियस्य कुमारस्य वैराग्योद्गमेन सम्यग्दर्शनज्ञानचारित्राणामुद्गमो बभूव, ततः केवलज्ञानोद्गम इति ॥ तदेवमुक्तं मोदकप्रियकुमारकथानकं, सम्प्रति

यदुक्तं–'चारित्रोऽक्रमेणाधिकार' इति, तत्र चारित्रस्याक्रमेणाधिकारः शुद्धस्य ग्रहणे, नाशुद्धस्य, अशुद्धस्य मोक्षलक्षणकार्यसम्पादकत्वा योगात्, न खलु बीजमुपहतमङ्कुरं जनयति,सर्वत्राप्यनुपहतस्यैव कारणस्य कार्यजनकत्वात्, चारित्रस्य च शुद्धेः कारणं द्विधा, तद्यथा–आन्तरं बाह्यं च, ते द्वे अपि प्रतिपादयति—

दसणनाणप्पभवं चरणं सुद्धेसु तेसु तस्सुद्धी । चरणेण कम्मसुद्धी उग्गमसुद्धा चरणसुद्धी ॥ ११ ॥

व्याख्या—इह यतो ज्ञानदर्शनप्रभवं चारित्रं, ततस्तयोः शुद्धयोस्तस्य चारित्रस्य शुद्धिर्भवति नान्यथा, तस्मादवश्यं चारित्र शुद्धिनिमित्तं चारित्रिणा सम्यग्ज्ञाने सम्यग्दर्शने च यतितव्यं, यत्नश्च निरन्तरं सद्गुरुचरणकमलपर्युपासनापुरस्सरं सर्वज्ञमतानुसारितर्का गमशास्त्राभ्यासकरणम्, एतेन चारित्रशुद्धेरान्तरं कारणमुक्तम्, अथ चारित्रशुद्धयाऽपि किं प्रयोजनं येनेत्थं तच्छुद्धिरन्वेष्यते?, अत आह–चरणेन कर्मशुद्धिः, चरणेन विशुद्धेन कर्मणो–ज्ञानावरणीयादिकस्य शुद्धिः अपगमो भवति, तदपगमे चात्मनो यथाऽवस्थितस्वरूप-लाभात्मको मोक्ष, ततो मोक्षार्थिना चरणशुद्धिरपेक्ष्यते, तथा न केवलमेतयोरेव ज्ञानदर्शनयोः शुद्धौ चारित्रशुद्धिः किन्तूद्गमशुद्धौ चारित्र शुद्धिः । एतेन बाह्य कारणमुक्तं, ततश्चरणशुद्धिनिमित्तं सम्यग्दर्शनज्ञानवताऽपि नियमत उद्गमदोषपरिशुद्ध आहारो ग्राह्यः ॥ ते चोद्गम-दोषाः षोडश, तानेव नामतो निर्दिशति—

आहाकम्मुद्देसिय पूइकम्मे य मीसजाए य । ठवणा पाहुडियाए पाओयर कीय पामिच्चे ॥ १२ ॥
परियट्टिए अभिहडे उब्भिन्ने मालोहडे य । अच्छिज्जे अणिसिट्ठे अज्झोयरए य सोलसमे ॥ १३ ॥

व्याख्या—'आधाकर्म्मेति' आधानं—आधा 'उपसर्गादात' इत्यङ् प्रत्ययः, साधुनिमित्तं चेतस प्रणिधानं, यथाऽमुकस्य साधोः कारणेन मया भक्तादि पचनीयमिति, आधया कर्म—पाकादिक्रिया आधाकर्म तद्योगाद् भक्ताद्यप्याधाकर्म्म, इह दोषाभिधानप्रक्रमेऽपि यद्दोषवतो ऽभिधानं तद्दोषदोषवतोरभेदविवक्षया द्रष्टव्य, यद्वा—आधाय—साधु चेतसि प्रणिधाय यत्क्रियते भक्तादि तदाधाकर्म्म, पृषोदरादित्वाद् यलोप' १, तथा उद्देशनम् उद्देशः—यावदर्थिकाद्यभिप्रणिधानं तेन निर्वृत्तमौद्देशिकं २, तथा शुचिमदोपरहिततया स्वतः पवित्रस्य सतो भक्तादेरन्यस्याविशुद्धकोटिकभक्तादेरवयवेन सह सम्पर्कतः पूतेः—पूतीभूतस्य कर्म्म—करणं पूतिकर्म्म तद्योगाद्भक्ताद्यपि पूतिकर्म्म ३, तथा मिश्रेण—कुटुम्बप्रणिधानसाधुप्रणिधानमीलनरूपेण भावेन जातं यद् भक्तादि तन्मिश्रजातं ४, तथा स्थाप्यते—साधुनिमित्तं कियन्तं कालं यावन्निधीयते इति स्थापना, यद्वा—स्थापनं साधुभ्यो देयमितिबुद्धया देयवस्तुनः कियन्तं कालं व्यवस्थापनं स्थापना, तद्योगादेयमपि स्थापना ५, तथा कस्मैचिदिष्टाय पूज्याय वा बहुमानपुरस्सरीकारेण यदभीष्टं वस्तु दीयते तत्प्राभृतमुच्यते, ततः प्राभृतमिव प्राभृतं साधुभ्यो भिक्षादिकं देयं वस्तु, प्राभृतमेव प्राभृतिका, 'अतिवर्त्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानी'ति वचनात् पूर्वं नपुंसकत्वेऽपि कप्रत्यये समानीते सति स्त्रीत्वं, यद्वा—प्र इति प्रकर्षेण आ इति साधुदानलक्षणमर्यादया भृता निर्वर्त्तिता यका भिक्षा सा प्राभृता, तत स्वार्थिककप्रत्ययविधानात् प्राभृतिका ६, तथा साधुनिमित्त मण्यादिस्थापनेन भित्त्यापनयनेन वा प्रादुः—प्रकटत्वेन देयस्य वस्तुन' करणं प्रादुष्करणं तद्योगाद्भक्ताद्यपि प्रादुष्करण, यद्वा प्रादुः—प्रकटं करणं यस्य तत् प्रादुष्करणं ७, तथा क्रीतं यत्साध्वर्थं मूल्येन परिगृहीतं ८, तथा 'पामिच्चे' इति अपमित्य—भूयोऽपि तव दास्यामीत्येवमभिधाय यत् साधुनिमित्तमुच्छिन्नं गृह्यते तदपमित्यम्, इह

---

१ 'प्रत्ययस्थे'त्यत्राप्ययशब्दसम्पन्निभ्रो हि स्यादेर्लुप्, तेन प्रणम्येत्यादौ आयमागमत्वेन कर्त्रोपी प्रवर्त्तमानत्वाद् अन्यपरार्थादिसम्बन्ध-

आहाकम्मिय नामा एगट्ठा कस्स वावि किं वावि । परपक्खे य सपक्खे चउरो गहणे य आणाइ ॥१४॥

व्याख्या—इह प्रथमत आधाकर्मिकस्य नामान्येकार्थिकानि वक्तव्यानि, ततस्तदनन्तरं कस्यार्थाय कृतमाधाकर्म्म भवतीति विचारणीयं, तदनन्तरं च किंस्वरूपमाधाकर्म्मेति विचार्यं, तथा 'परपक्ष' गृहस्थवर्गः 'स्वपक्षः' साध्वादिवर्गः, तत्र परपक्षनिमित्तं कृत माधाकर्म्म न भवति, स्वपक्षनिमित्त तु कृतं भवतीति वक्तव्यं, तथा आधाकर्म्मग्रहणविषये चत्वारोऽतिक्रमादयः प्रकारा भवन्तीति वक्तव्य, तथा 'ग्रहणे' आधाकर्म्मणो भक्तादेरादाने आज्ञादयः 'सूचनात्सूत्र'मिति न्यायादाज्ञाभङ्गादयो दोषा वक्तव्याः ॥ तत्रैकार्थिकाभिधानलक्षणं प्रथमं द्वारं विवक्षुराह—

आहा अहे य कम्मे आयाहम्मे य अत्तकम्मे य । पडिसेवण पडिसुणणा संवासऽणुमोयणा चेव ॥ १५ ॥

व्याख्या—'आहा अहे य कम्मे'त्ति अत्र कर्म्मशब्दः प्रत्येकमभिसम्बध्यते, चकारश्च कर्म्मेत्यनन्तरं समुच्चयार्थो द्रष्टव्यः, तत एवं निर्देशो ज्ञातव्यः—आधाकर्म्म अधःकर्म्म च, तत्राऽऽधाकर्म्मेति प्रागुक्तशब्दार्थम्, अधःकर्म्मेति अधोगतिनिबन्धनं कर्म्म अधःकर्म्म, तथाहि—भवति साधूनामाधाकर्म्म भुञ्जानानामधोगतिः, तन्निबन्धनप्राणातिपाताद्याश्रवेषु प्रवृत्तेः, तथा आत्मानं दुर्गतिप्रपातकारणतया हन्ति—विनाशयतीत्यात्मघ्न, तथा यत् पाचकादिसम्बन्धि कर्म्म—पाकादिलक्षणं ज्ञानावरणीयादिलक्षण वा तदात्मनः सम्बन्धि क्रियते अनेनेति आत्मकर्म्म । एतानि च नामान्याधाकर्म्मणो मुख्यानि सम्प्रति पुनर्यैः प्रतिसेवणादिभिः प्रकारैस्तदाधाकर्म्म भवति तान्यप्यभेदविवक्षया नामत्वेन प्रतिपादयति—'पडिसेवणेत्यादि' प्रतिसेव्यते इति प्रतिसेवण, तथा आधाकर्म्मनिमन्त्रणानन्तरं प्रतिश्रूयते—अभ्युपगम्यते यत्

आधाकर्म्म तत् प्रतिसेवनं तथा आधाकर्म्मभोक्तृभिः सह संवसनं—संवासः तद्वशात् शुद्धाहारभोज्यपि आधाकर्म्मभोजी द्रष्टव्य, यो हि तैः सह संवासमनुमन्यते स तेषामाधाकर्म्मभोक्तृत्वमप्यनुमन्यते, अन्यथा तैः सह संवसनमेव नेच्छेत्, अन्यच्च संवाससक्तः कदाचिदा, धाकर्म्मगतमनोज्ञगन्धाघ्राणादिना विभिन्नचित्तः सन् स्वयमप्याधाकर्म्मभोजने प्रवर्त्तेत, ततः संवास आधाकर्म्मदोषहेतुत्वादाधाकर्म्म उक्तः तथा 'अनुमोदनम्' अनुमोदना—आधाकर्म्मभोक्तृप्रशंसा, साऽपि आधाकर्म्मसमुत्थपापनिबन्धनत्वादाधाकर्म्मप्रवृत्तिकारणत्वाच्च आधाकर्म्मेति उक्तं, अमीषां च प्रतिसेवनादीनामाधाकर्म्मत्वमात्मकर्म्मरूपं नाम प्रतीत्य वेदितव्यं, तथा च वक्ष्यति—'अत्तीकरेइ कम्मभित्यादि' इह आधाकर्म्मेति शब्दार्थविचारे आधया कर्म्म आधाकर्म्मेत्युक्तं, साऽपि चाधा नामादिभेदाच्चतुर्द्धा, तद्यथा—नामाधा स्थापनाधा द्रव्याधा भावाधा च, तत्र नामाधा स्थापनाधा द्रव्याधाऽपि च आगमतो नोआगमतश्च ज्ञशरीररूपा भव्यशरीररूपा चैवमेव भावनीया, ज्ञशरीरभव्यशरीरव्यतिरिक्तां तु द्रव्याधामभिधित्सुराह—

धणुजुयकायभराणं कुडुंबरज्जधुरमाइयाणं च । खंधाई हियय चिय वज्झाहा अतए धणुणो ॥ ९६ ॥

व्याख्या—इह द्रव्याधायां विचार्यमाणायामाधारस्याऽधिकरणप्रधानो विवक्ष्यते आधीयतेऽस्यामित्याधा, आश्रय आधार इत्यनर्थान्तरं तत्र 'धणु'त्ति धनुः चाप तस्याधा आश्रयः प्रत्यञ्चा अतिसामर्थ्यादवगम्यते, 'यूप' प्रतीतः, 'काय' कापोती यथा पुरुषाः स्कन्धारूढया पानीयं वहन्ति 'भरा' धनधान्यादिसमूहः, तथा 'कुटुम्ब' पुत्रकलत्रादिसमुदायः, 'राज्य' प्रतीतं, तयोः धूः—चिन्ता आदिशब्दाद्गमनधूप्रमुखपरिग्रहः, तेषां च यथासङ्ख्यं द्रव्याधा—द्रव्यरूप आधारः स्कन्धादि इदं च, तत्र स्कन्धो बलीवर्दादिस्कन्धो नरादिस्कन्धश्च परिगृह्यते, आदिशब्दादूरुकणादिपरिग्रहः, तत्र यूपस्य द्रव्याधा द्रव्यरूप आश्रयो वृषभादिस्कन्धः, स हि यूपस्तत्रा

ऽऽरोप्यते, कापोत्या आश्रयो नरस्कन्धः, नरो हि पानीयानयनाय कापोतीं स्कन्धेन वहति, भरस्याश्रयो गन्धयादि, महाममाणे हि मरो गन्त्र्यादिनैवानेतुं शक्यते नान्येन, तथा कुटुम्बचिन्ताया राज्यचिन्तायामाश्रयः 'हृदयं' मनः, हृदयमन्तरेण चिन्ताया अयोगात्, धनुर्विषये भावनामाह—'अ‍र्वके' करसञ्ज्ञे धनुषः सम्बन्धिनि मस्यशाऽऽरोप्यते ततो धनुः मस्यञ्चाया आश्रयः, एवं शेषाणामपि यूपादीनां मत्याश्रयत्वं भावनीयं, तच भावितमेव ॥ उक्ता द्रव्याधा, सम्प्रति भावाधा वक्तव्या, सा च द्विधा—आगमतो नोआगमतश्च, तत्रागमत आधाशब्दार्थपरिज्ञानकुशल तत्र चोपयुक्तः, 'उपयोगो भावनिक्षेप' इति वचनात्, नोआगमतस्तु भावाधा यत्र तत्र वा मनःप्रणिधानं, तथाहि—भावो नाम मानसिकः परिणामः तस्य चाधानं—निष्पादनं भवति मनसस्तदनुगुणतया तेन तेन रूपेण परिणमने सति नान्यथा, ततो मनःप्रणिधानं भावाधा, सा चेह मस्तावात्साधुदानार्थमोदनपचनपाचनादिविषया द्रष्टव्या तया यत्कृतं कर्म्म—ओदनपाकादि तदाधाकर्म्म, तथा चाह निर्युक्तिकृत्—

ओरालसरीराण उद्दवण तिवायण च जस्सट्ठा । मणमाहित्ता कीरइ आहाकम्म तय बेंति ॥ ९७ ॥

व्याख्या—औदारिकं शरीरं येषां ते औदारिकशरीराः—तिर्यञ्चो मनुष्याश्च, तत्र तिर्यञ्च—एकेन्द्रियादयः पञ्चेन्द्रियपर्यन्ता द्रष्टव्याः, एकेन्द्रिया अपि सूक्ष्मा बादराश्च, नन्विह येऽपद्रावणयोग्यास्तिर्यञ्चस्ते ग्राह्याः, न च सूक्ष्माणां मनुष्यादिकृतमपद्रावणं सम्भवति, सूक्ष्मत्वादेन, ततः कथं ते इह गृह्यन्ते?, उच्यते, इह यो यस्मादविरत स तमकुर्व्वन्नपि परमार्थतः कुर्व्वन्नेव अवसेयो यथा रात्रिभोजनादानिवृत्तो रात्रिभोजन, गृहस्थश्च सूक्ष्मैकेन्द्रियापद्रावणादनिवृत्तः, ततः साध्वर्थं समारम्भं कुर्व्वन् स तदपि कुर्व्वन्नवगन्तव्य इति सूक्ष्मग्रहणं, यद्वा—एकेन्द्रिया बादरा एव ग्राह्या न सूक्ष्मा, तथा च वक्ष्यति भाष्यकृत्—"ओरालग्गहणेणं तिरिक्खमणुयाऽहवा सुहुमवज्जा" तेषामौ

शारिकशरीराणां यदपद्रावणम्—अतिपातविवर्जिता पीडा, किमुक्तं भवति ?—सामर्थ्यमुपरिक्रियमाणेष्वोदनादिषु यावदद्यापि शाल्यादि-
नस्पतिकायादीनामतिपातः—प्राणव्युपरमलक्षणो न भवति तावदर्वाग्वर्तिनी सर्वाऽपि पीडा अपद्रावणं, यथा साध्वर्यं शाल्योदनकृते
शालिकरटेर्योत्खादद्वयं कण्डनं, तृतीयं तु कण्डनमतिपातः, तस्मिन् कृते शालिजीवानामवश्यमतिपातभावात्, ततस्तृतीय कण्डनमतिपात
ग्रहणेन गृह्यते, वक्ष्यति च भाष्यकृत्—"उद्दवणं पुण जाणसु अइवायविवज्जियं पीडं" ति, उद्दवणशब्दस्य परतो विभक्तिलोप
आर्षत्वात्, तथा 'तिपायणं' ति त्रीणि कायवाङ्मनांसि, यद्वा त्रीणि देहायुरिन्द्रियलक्षणानि पातन चातिपातो विनाश इत्यर्थः, तत्र च
त्रिधा समासविवक्षा, तद्यथा—षष्ठीतत्पुरुषः पञ्चमीतत्पुरुषस्तृतीयातत्पुरुषश्च, तत्र षष्ठीतत्पुरुषोऽयं—त्रयाणां कायवाङ्मनसां पातनं—वि-
नाशनं त्रिपातनम्, एतच्च परिपूर्णगर्भजपञ्चेन्द्रियतिर्यग्मनुष्याणामवसेयम्, एकेन्द्रियाणां तु कायस्यैव केवलस्य विकलेन्द्रियसम्मूर्च्छिमतिर्य-
ग्मनुष्याणां तु कायवचसोरेवेति, यद्वा—त्रयाणां देहायुरिन्द्रियरूपाणां पातनं—विनाशनं त्रिपातनम्, इदं च सर्वेषामपि तिर्यग्मनुष्याणां
परिपूर्णं घटते, केवलं यथा येषां सम्भवति तथा तेषां वक्तव्यं—एकेन्द्रियाणां देहस्य—औदारिकस्य आयुषः—तिर्यगायूरूपस्य इन्द्रिय-
स्य—स्पर्शनेन्द्रियस्य, द्वीन्द्रियाणां देहस्यौदारिकरूपस्य आयुषस्तिर्यगायुष इन्द्रिययोश्च स्पर्शनरसनलक्षणयोरित्यादि, पञ्चमीतत्पुरुष-
स्त्वयं—त्रिभ्यः—कायवाङ्मनोभ्यो देहायुरिन्द्रियेभ्यो वा पातनं—च्यावनमिति त्रिपातनम्, अत्रापि त्रिभ्यः परिपूर्णेभ्यः कायवाङ्म-
नोभ्यः पातनं गर्भजपञ्चेन्द्रियतिर्यग्मनुष्याणाम् एकेन्द्रियाणां तु कायादेव केवलात् विकलेन्द्रियसंमूर्च्छिमतिर्यग्मनुष्याणां तु कायवा-
ग्भ्यामिति, देहायुरिन्द्रियरूपेभ्यस्तु त्रिभ्यः पातनं सर्वेषामपि परिपूर्णं सम्भवति, केवलं यथा येषां सम्भवति तथा तेषां प्रागिव वक्तव्यं,
तृतीयातत्पुरुषः पुनरयं—त्रिभिः कायवाङ्मनोभिर्विनाशकेन स्वसम्बन्धिभिः पातनं—विनाशनं त्रिपातनं. चशब्दः समवाये. त्रिभिरि

मक्तिनिर्देशमदस्योपादान च यस्य साध्वर्यमपद्रावणं कृत्वा सूरी स्वार्थमतिपातं करोति तत्कर्त्व्यं, यस्य तु पुरा त्रिपातनमपि साध्वर्थं विधत्त तम कत्व्यमिति ख्यापनार्थम्, इत्थंभूतमौदारिकशरीराणामपद्रावण त्रिपातनं च यस्य साधोरेकस्यानेकस्य वाऽर्थाय—निमित्तं 'मन आधाय' चित्त प्रवर्त्य क्रियते तदाधाकर्म्म ब्रुवते तीर्थकरगणधराः ॥ इमामेव गाथां भाष्यकृद् गाथात्रयेण व्याख्यानयति—

ओरालग्गहणेण तिरिक्खमणुयाऽहवा सुहुमवज्जा । उद्दवण पुण जाणसु अइवायविवज्जिय पीड ॥ २५ ॥

कायवइमणो तिन्नि उ अहवा देहाउइंदियप्पाणा । सामित्तावायाणे होइ तिवाओ य करणेसु ॥ २६ ॥

हियथमि समाहेउ एगमणेगं च गाहग जो उ । वहण करेइ दाया कायेण तमाहु कम्मति ॥ २७ ॥ (भा०)

व्याख्या—सुगमा, नवर 'देहाउइंदियप्पाणे'त्ति देहायुरिन्द्रियरूपास्त्रयः प्राणाः, 'सामित्ते'त्यादि, स्वामित्वे—स्वामित्वविषये सम्बन्धविवक्षयेति भावार्थः, एवमपादाने—अपादानविवक्षया करणेषु विषये—करणविवक्षया अतिपातो भवति, यथा त्रयाणां पातनं त्रिपातनं, यद्वा—त्रिभ्यः पातनं त्रिपातनं, त्रिभिर्वा करणभूतैः पातन त्रिपातन, भावार्थस्तु प्रागेवोपदर्शितः ॥ तदेवमुक्तमाधाकर्म्मनाम, सम्प्रत्यध:कर्म्मनाम वक्तव्यं, तदपि चाधःकर्म्म चतुर्द्धा, तद्यथा—नामाधःकर्म्म स्थापनाध:कर्म्म द्रव्याधःकर्म्म भावाधःकर्म्म च, एतत्राधाकर्म्मवत्तावद्वक्तव्य यावन्नोआगमतो ज्ञशरीरभव्यशरीररूपं द्रव्याधःकर्म्म, ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्याधःकर्म्म निर्युक्तिकृदाह—

जं दव्वं उदगाइसु छूढमहे वयइ जं च भारेण । सीईए रज्जुएण य ओयरण दव्वहेकम्मं ॥ ९८ ॥

व्याख्या—यत्किमपि 'द्रव्यम्' उपलादिकम् 'उदकादिषु' उदकदुग्धादिषु मध्ये क्षिप्तं सत् 'भारेण' स्वस्य गुरुतया अधो व्रजति, तथा 'र्म चेति' यत्र 'सीईए' त्ति निश्रेण्या रज्ज्वा वा अवतरणं पुरुषादेः कूपादौ प्रासादेर्वा भुवि तत्र अधोऽधो व्रजनमवतरणं वा द्रव्याधःकर्म, द्रव्यस्य—उपलादेरधः—अधस्ताद्गमनरूपमवतरणरूपं वा कर्म द्रव्याधःकर्मेति व्युत्पत्तेः ॥ सम्प्रति भावाधःकर्मणोऽवसरः, तच्च द्विधा—आगमतो नोआगमतश्च, तत्र आगमतोऽधःकर्मशब्दार्थज्ञाता तत्र चोपयुक्तः, नोआगमतस्त्वाह—

संजमठाणाण कंडगाण लेसाठिईविसेसाण । भावं अहे करेई तम्हा तं भावहेकम्मं ॥ ९९ ॥

व्याख्या—संयमस्थानानां वक्ष्यमाणानां 'कण्डकानां' संख्यातीतसंयमस्थानसमुदायरूपाणाम्, उपलक्षणमेतत् षट्स्थानकानां संयमश्रेण्याश्च, तथा लेश्यानां तथा सातवेदनीयादिरूपशुभप्रकृतीनां सम्बन्धिनां स्थितिविशेषाणां च सम्बन्धिषु विशुद्धेषु विशुद्धतरेषु स्थानेषु वर्तमानं सन्तं निजं 'भावम्' अध्यवसायं यस्मादाधाकर्म भुञ्जान साधुरधः करोति—हीनेषु हीनतरेषु स्थानेषु विधत्ते तस्मा तदाधाकर्म भावाधःकर्म, भावस्य—परिणामस्य संयमादिसम्बन्धिषु शुभेषु शुभतरेषु स्थानेषु वर्तमानस्य अधः—अधस्तनेषु हीनेषु हीनतरेषु स्थानेषु कर्म—क्रिया यस्मात्तद्भावाधःकर्मेति व्युत्पत्तेः ॥ एनामेव गाथां भाष्यकृद् गाथात्रयेण व्याख्यानयति—

तत्थाणंता उ चरित्तपज्जवा होंति संजमट्ठाणं । संखाईयाणि उ ताणि कंडगं होइ नायव्वं ॥ २८ ॥

संखाईयाणि उ कंडगाणि छट्ठाणगं विणिद्दिट्ठं । छट्ठाणा उ असंखा संजमसेढी मुणेयव्वा ॥ २९ ॥

किण्हाइया उ लेसा उक्कोसविसुद्धिठिइविसेसाओ । एएसिं विसुज्झंतं अप्प तग्गाहगो कुणइ ॥ ३० ॥ (भा०)

व्याख्या—इह सर्वोत्कृष्टादपि देशविरतिविशुद्धिस्थानाज्जघन्यमपि सर्वविरतिविशुद्धिस्थानमनन्तगुणम्, अनन्तगुणता च सर्वत्रापि षट्स्थानकचिन्तायां सर्वजीवानन्तकप्रमाणेन गुणकारेण प्रत्येया, इयं चात्र भावना—जघन्यमपि सर्वविरतिविशुद्धिस्थानं केवलिप्रज्ञाच्छेदकेन छिद्यते, छित्त्वा छित्त्वा च निर्विभागा भागाः पृथक् क्रियन्ते, ते च निर्विभागा भागाः सर्वसङ्ख्यया परिभाव्यमानाः सर्वोत्कृष्टभेदेन देशविरतिविशुद्धिस्थानगता निर्विभागा भागाः सर्वजीवानन्तकरूपेण गुणकारेण गुण्यमाना यावन्तो जायन्ते तावत्प्रमाणा' प्राप्यन्ते, अयमत्र भावार्थः—इह किलासत्कल्पनया सर्वोत्कृष्टस्य देशविरतिविशुद्धिस्थानस्य निर्विभागा भागा दश सहस्राणि १००००, सर्वजीवानन्तकप्रमाणश्च राशिः शतं, ततस्तेन शतसङ्ख्येन सर्वजीवानन्तकप्रमाणेन राशिना दशसहस्रसङ्ख्या सर्वोत्कृष्टदेशविरतिविशुद्धिस्थानगता निर्विभागा भागा गुण्यन्ते, जातानि दश लक्षाणि १००००००, एतावन्तः किल सर्वजघन्यस्यापि सर्वविरतिविशुद्धिस्थानस्य निर्विभागा भागा भवन्ति । सम्प्रति सूत्रमनुसियते—'तत्र' तेषु संयमस्थानादिषु वक्तव्येषु प्रथमतः संयमस्थानमुच्यते इति शेषः, 'अनन्ता' अनन्तसङ्ख्याः प्राग्वदसत्कल्पनया दशलक्षप्रमाणा ये चारित्रपर्याया—सर्वजघन्यचारित्रसत्कविशुद्धिस्थानगता निर्विभागा भागाः ते समुदिता संयमस्थानम्, अर्थात्सर्वजघन्यं भवति, तस्मादनन्तरं यद्द्वितीयं संयमस्थानं तत्पूर्वस्मादनन्तभागवृद्धं, किमुक्तं भवति ?—प्रथमसंयमस्थानगतनिर्विभागभागापेक्षया द्वितीयसंयमस्थाने निर्विभागा भागा अनन्ततमेन भागेनाधिका भवन्तीति, तस्मादपि यदनन्तरं तृतीयं तदतोऽनन्तभागवृद्धम्, एवं पूर्वस्मादुत्तरोत्तराण्यनन्ततमेन भागेन वृद्धानि निरन्तरं संयमस्थानानि तावद्वक्तव्यानि यावदङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणानि भवन्ति, एतावन्ति च समुदितानि स्थानानि कण्डकमित्युच्यते, तथा चाह—'सङ्ख्यातीतानि' असङ्ख्येयानि तुः पुनरर्थे 'तानि' संयमस्थानानि कण्डकं भवति ज्ञातव्यं, कण्डकं नाम समयपरिभाषया

अङ्गुलमात्रक्षेत्रासङ्ख्येयभागगतप्रदेशराशिप्रमाणा सङ्ख्याऽभिधीयते, तथा चोक्तं—"कण्डं ति इत्थ भण्णइ अंगुलभागो असंखेज्जो।" तस्मात् कण्डकात्परतो यदन्यदनन्तरं संयमस्थानं भवति तत्पूर्वस्मादसङ्ख्येयभागाधिकम्, एतदुक्तं भवति—प्राक्तनकण्डकसत्क चरमसंयमस्थानगतनिर्विभागभागापेक्षया कण्डकादनन्तरे संयमस्थाने निर्विभागा भागा असङ्ख्येयतमेन भागेनाधिकाः प्राप्यन्ते, ततः पराणि पुनरपि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरेकमसङ्ख्येयभागाधिकं संयमस्थानं, ततो भूयोऽपि ततः पराणि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरप्येकमसङ्ख्येयभागाधिकं संयमस्थानम्, एवमनन्तभागाधिकैः कण्डकप्रमाणैः संयमस्थानैर्व्यवहितानि असङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वक्तव्यानि यावत्तान्यपि कण्डकमात्राणि भवन्ति, ततश्चरमादसङ्ख्येयभागाधिकात् संयमस्थानात्पराणि यथोत्तरमनन्तभागवृद्धानि कण्डकमात्राणि संयमस्थानानि भवन्ति, ततः परमेकं सङ्ख्येयभागाधिकं संयमस्थानं, ततो मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि तेनैव क्रमेणाभिधाय पुनरप्येकं सङ्ख्येयभागाधिकं संयमस्थानं वक्तव्यम्, इदं द्वितीयं सङ्ख्येयभागाधिकं संयमस्थानं, ततोऽनेनैव क्रमेण तृतीयं वक्तव्यम्, अमूनि चैवं सङ्ख्येयभागाधिकानि संयमस्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति, तत उक्तक्रमेण भूयोऽपि सङ्ख्येयभागाधिकसंयमस्थानप्रसङ्गे सङ्ख्येयगुणाधिकमेकं संयमस्थानं वक्तव्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि तथैव वक्तव्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं संयमस्थानम्, अमून्यप्येवं सङ्ख्येयगुणाधिकानि संयमस्था

१ कण्डकमिति अत्र भण्यते अङ्गुलभागोऽसंख्येयः ।

नानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति, तत उक्तक्रमेण पुनरपि सङ्ख्येयगुणाधिकसंयमस्थानमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यं, तत पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि भागविक्रान्तानि यावन्ति तेनैव क्रमेण भूयोऽपि वक्तव्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरपि एकमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्, अमूनि चैवमसङ्ख्येयगुणाधिकानि संयमस्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति, तत पूर्वपरिपाट्या पुनरप्यसङ्ख्येयगुणाधिकसंयमस्थानमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यं, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि भागविक्रान्तानि तावन्ति तथैव क्रमेण भूयोऽपि वक्तव्यानि, ततः पुनरप्येकमनन्तगुणाधिकं संयमस्थानं वक्तव्यं, ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकमनन्तगुणाधिकं संयमस्थानं वक्तव्यम्, एवमनन्तगुणाधिकानि संयमस्थानानि तावद्वक्तव्यानि यावत्कण्डकमात्राणि भवन्ति, ततो भूयोऽपि तेषामुपरि पञ्चवृद्ध्यात्मकानि संयमस्थानानि मूलादारभ्य तथैव वक्तव्यानि, यत्पुनरनन्तगुणवृद्धिस्थानं तन्न प्राप्यते पट्स्थानकस्य परिसमाप्तत्वात्, इत्यमूान्यसङ्ख्येयानि कण्डकानि समुदितानि पट्स्थानकं भवति, तथा चाह भाष्यकृत्—' संखाईयाणि उ कंडगाणि छट्ठाणग भिणिद्दिं ' सुगमं, अस्मिंश्च पट्स्थानके पोढा वृद्धिरुक्ता, तद्यथा—अनन्तभागवृद्धिरसङ्ख्येयभागवृद्धिः सङ्ख्येयभागवृद्धिः सङ्ख्येयगुणवृद्धिरसङ्ख्येयगुणवृद्धिरनन्तगुणवृद्धिश्च, तत्र यादृशोऽनन्ततमो भागोऽसङ्ख्येयतम' सङ्ख्येयतमो वा गृह्यते यादृशस्तु सङ्ख्येयोऽसङ्ख्येयोऽनन्तो वा गुणकार' स निरूप्यते—तत्र यदपेक्षयाऽनन्तभागवृद्धता तस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागो ह्रियते हृते च भागे यल्लब्ध सोऽनन्ततमोभाग, तेनाधिकमुत्तरं संयमस्थानं, किमुक्तं भवति ?—प्रथमस्य संयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति ये लभ्यन्ते तावत्प्रमाणे

निर्विभागैर्भागैर्द्वितीये संयमस्थाने निर्विभागा भागा अधिकाः प्राप्यन्ते, द्वितीयस्य संयमस्थानस्य ये निर्विभागा भागास्तेषां सर्वजीवसङ्ख्या प्रमाणेन राशिना भागे हृते सति यावन्तो लभ्यन्ते तावत्प्रमाणैर्निर्विभागैर्भागैरधिकास्तृतीये संयमस्थाने निर्विभागा भागाः प्राप्यन्ते, एवं यावत् संयमस्थानमनन्तभागवृद्धमुपलभ्यते तावत्पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य सर्वजीवसङ्ख्याप्रमाणेन राशिना भागे हृते सति यावल्लभ्यते तावत्प्रमाणेन तावत्प्रमाणेनानन्ततमेन भागेनाधिकमवगन्तव्यम्, असङ्ख्येयभागाधिकानि पुनरेवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य सत्कानां निर्विभागभागानामसङ्ख्येयलोकाकाशप्रदेशप्रमाणेन राशिना भागे हृते सति यावल्लभ्यते स सोऽसङ्ख्येयतमो भागः, ततस्तेन तेनासङ्ख्येयतमेन भागेनाधिकानि असङ्ख्येयभागाधिकानि वेदितव्यानि, सङ्ख्येयभागाधिकानि चैवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्योत्कृष्टेन सङ्ख्येयेन भागे हृते सति यावल्लभ्यते स स सङ्ख्येयतमो भागः, ततस्तेन तेन सङ्ख्येयतमेन भागेनाधिकानि सङ्ख्येयभागाधिकानि संयमस्थानानि वेदितव्यानि, सङ्ख्येयगुणवृद्धानि पुनरेवं—पाश्चात्यस्य पाश्चात्यस्य संयमस्थानस्य ये ये निर्विभागा भागास्ते ते उत्कृष्टेन सङ्ख्येयकप्रमाणेन राशिना गुण्यन्ते, गुणिते च सति यावन्तो यावन्तो भवन्ति तावत्प्रमाणानि तावत्प्रमाणानि सङ्ख्येयगुणाधिकानि संयमस्थानानि ग्राह्याणि, एवमसङ्ख्येयगुणवृद्धानि अनन्तगुणवृद्धानि च भावनीयानि, नवरमसङ्ख्येयगुणवृद्धौ पाश्चात्यस्य संयमस्थानस्य निर्विभागा भागा असङ्ख्येयलोकाकाशप्रदेशप्रमाणेनासङ्ख्येयेन गुण्यन्ते, अनन्तगुणवृद्धौ तु सर्वजीवप्रमाणेनानन्तेन, इयं च भागहारगुणकारकल्पना स्वमनीषिकाविकल्पिता अस्याः, यत उक्तं कर्मप्रकृतिसङ्ग्रहण्यां षट्स्थानकगतभागहारगुणकार विचाराधिकारे—"सव्वजियाणमसंखेज्जलोग संखिज्जगस्स जिट्ठस्स । भागो तिसु गुणणा तिसु" इति, प्रथमाच्च षट्स्थानकादूर्ध्वमुक्तक्रमेणैव द्वितीयं षट्स्थानकमुत्तिष्ठति, एवमेव च तृतीयम्, एवं षट् स्थानकान्यपि तावद्वाच्यानि यावदसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति,

उक्तं च—" छट्ठाणगअवसाणे अन्न छट्ठाणय पुणो अन्नं । एवमसङ्खा लोगा छट्ठाणाणं मुणेयव्वा ॥ १ ॥ " इत्थंभूतानि चासङ्ख्ये-
यलोकाकाशप्रदेशप्रमाणानि षट् स्थानकानि संयमश्रेणिरुच्यते, तथा चाह—'छट्ठाणा उ असंखा संजमसेढी मुणेयव्वा'। तथा 'लेसाउ'त्ति
कृष्णाद्यो लेश्या, स्थितिविशेषा उत्कृष्टानां—सर्वोत्कृष्टानां सातावेदनीयप्रकृतीनां विशुद्धप्रकृतीनां सम्बन्धिनो 'विशुद्धा' स्थितिविशेषा
भेदितव्या, तत एतेषां संयमस्थानादीनां सम्बन्धिषु शुभेषु स्थानेषु वर्तमानस्तद्ग्राहक—आधाकर्मग्राहक आत्मानमेतेषां—संयमस्थानादीनां
विशुद्धानामधोऽधस्तात्करोति ॥ यदि नाम संयमस्थानादीनामधस्तादात्मानमाधाकर्मग्राही करोति ततः किं दूषणं तस्यापतितमत आह—

भावावयारमाहेउमप्पणो किंचिनूणचरणग्गो । आहाकम्मग्गाही अहो अहो नेइ अप्पाणं ॥ १०० ॥

भावानां—संयमस्थानादिरूपाणां विशुद्धानामधस्तात् हीनेषु हीनतरेषु अध्यवसायेषु 'अवतारम्' अवतरणमात्मनि 'आधाय'
कृत्वा 'किञ्चिन्नूनचरणग्गो' इति इह चरणेनाग्रः—प्रधानश्चरणाग्रः, स च निश्चयनयमतापेक्षया क्षीणकषायादिरकषायचारित्रि परिगृह्यते,
न च तस्य प्रमादसम्भवो नापि लौल्यम्, एकान्तेन मोहनीयस्य विनाशात्, ततो न तस्याधाकर्मग्रहणसम्भव इति किञ्चिन्न्यूनग्रहणं,
किञ्चिन्न्यूनेन चरणेनाग्रः—प्रधानः किञ्चिन्न्यूनचरणाग्रः, स च परमार्थत उपशान्तमोह उच्यते, अतिशयख्यापनार्थं चैतदुक्तं, ततोऽयमर्थः—
किञ्चिन्न्यूनचरणाग्रोऽपि यावदास्तां प्रमत्तसंयतादिरिति, आधाकर्मग्राही अधोऽधो—रत्नप्रभादिनरकादौ नयत्यात्मानम्, एतद्दूषणमाधाकर्म-
ग्राहिणः ॥ एतदेव भावयति—

बंधइ अहेभवाऊ पकरेइ अहोमुहाइ कम्माइं । घणकरणं तिव्वेण उ भावेण चओ उवचओ य ॥ १०१ ॥

व्याख्या—आधाकर्मग्राही विशुद्धेभ्यः संयमादिस्थानेभ्योऽवतीर्य 'अध' अधोऽधोवर्तिषु हीनेषु हीनतरेषु भावेषु वर्तमानोऽधो भवस्य रत्नप्रभादिनारकरूपस्य भवस्य सम्बन्धि आयुः 'करोति' बध्नाति, शेषाण्यपि कर्माणि गत्यादिनामादीनि 'अधोमुखानि' अधोगत्यभिमुखानि अधोगतिनयनशीलानि इत्यर्थः, 'प्रकरोति' प्रकर्षेण दुस्सहकटुकतीव्रानुभावयुक्ततया करोति—बध्नाति, यदानां च सदाधाकर्मविषयपरिभोगलाम्पट्यवृद्धितो निरन्तरमुपजायमानेन 'तीव्रेण' तीव्रतरेण 'भावेन' परिणामेन घनकरणं यथायोगं निधत्तिरूपतया निकाचनारूपतया वा व्यवस्थापनं, तथा प्रतिक्षणमन्यान्यपुद्गलग्रहणेन चय उपचयश्च, तत्र स्तोकतरा वृद्धिश्चयः, प्रभूततरा वृद्धिरुपचयः, एतेन च व्याख्याप्रज्ञप्तिसूत्रमाचार्येणानुवर्तितं, तथा च व्याख्याप्रज्ञप्त्यालापकः—"आहाकम्मं णं भुंजमाणे समणे निग्गंथे अट्ठकम्मपगडीओ बंधइ जाव उवचिणाइ" इत्यादि ॥ तत एव सति—

तेसिं गुरूणमुदएण अप्पगं दुग्गईए पवडंतं । न चएइ विधारेउं अहरगतिं निंति कम्माइं ॥ १०२ ॥

व्याख्या—'तेषाम्' अधोभवायुरादीनां कर्मणां 'गुरूणां' अधोगतिनयनस्वभावतया गुरूणीव गुरूणि तेषाम्, 'उदयेन' विपाकवेदनानुभवरूपेण, विपाकवेदनानुभवरूपोदयप्रभावितत्वात्, दुर्गतौ प्रपतन्तमात्मानं 'विधारयितुं' निवारयितुम् आधाकर्मग्राही न शक्नोति यतोऽतः कर्माणि अधोभवायुरादीनि उदयप्राप्तानि बलाद् 'अधरगतिं' नरकादिरूपां नयन्ति, न च कर्मणां कोऽपि बलीयान्,

१ स्थित्यनुभागयोर्वृद्धिरुद्वर्तना, तयोरेव ह्रस्वीकरणमपवर्तना, उद्वर्तनाऽपवर्तनावर्जशेषसंक्रमादिकरणायोग्यत्वेन व्यवस्थापनं निधत्तिः, समस्तकरणायोग्यत्वेन व्यवस्थापनं निकाचना, [ संक्रमः प्रकृतिस्थित्यनुभागप्रदेशानामन्यकर्मरूपतया स्थितानामन्यकर्मस्वरूपेण व्यवस्थापनम्, आदिशब्देनोदीरणोपशमने गृह्येते ]। २ आधाकर्म भुञ्जानः श्रमणो निर्ग्रन्थोऽष्टौ कर्मप्रकृतीर्बध्नाति अधः प्रकरोति यावदुपचिनोति एव उपचिनोति।

अन्यथा न कोऽपि नरकं यायात्, न वा कोऽपि दुःखमनुभवेत्, तस्मादाधाकर्म्म अधोगतिनिबन्धनमित्यध'कर्मोत्युच्यते ॥ तदेवमुक्तमधः कर्मेति नाम, साम्प्रतमात्मघ्नाम्नोऽवसरः, तदपि चात्मघ्नं चतुर्द्धा, तद्यथा—नामात्मघ्नं स्थापनात्मघ्नं द्रव्यात्मघ्नं भावात्मघ्नं च, द्रव्यात्मघ्नं कर्म्मवधावज्ञावनीयं यावन्नोआगमतो ज्ञशरीरद्रव्यात्मघ्नं भव्यशरीरद्रव्यात्मघ्नं, ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यात्मघ्नं निर्युक्तिकृदाह—

अट्ठाए अणट्ठाए छक्कायपमद्दण तु जो कुणइ । अनियाए य नियाए आयाहम्मं तय बेंति ॥ १०३ ॥

व्याख्या—यो गृही 'अर्थाय' स्वस्य परस्य वा निमित्तम् 'अनर्थाय' प्रयोजनमन्तरेण एवमेव पापकरणशीलतया 'अणियाए य नियाएत्ति' निदान निदा—प्राणिहिंसा नरकादिदुःखहेतुरिति जानतोऽपि यद्वा साधूनामाधाकर्म्म न कल्पते इति परिज्ञानवतोऽपि यज्जीवानां प्राणव्यपरोपणं सा निदा, तद्विपरीतानिदा, पूर्वोक्तपरिज्ञानविकलेन सता यत्परप्राणनिवर्हण सा अनिदेति भावार्थः, अथवा स्वार्थे परार्थे चेति विभागेनोद्दिश्य यत् प्राणव्यपरोपणं सा निदा, तद्विपरीतानिदा यत् स्व पुत्रादिकमन्य वा विभागेनाविविच्य सामान्येन विधीयते, अथवा व्यापाद्यस्य सत्त्वस्य या ! धिक् सम्प्रत्येष मां मारयिष्यतीति परिज्ञानतो यत् प्राणव्यपरोपणं सा निदा, तद्विपरीता अनिदा, यदजानतो व्यापाद्यस्य सत्त्वस्य व्यापादनमिति ॥ तथा चाह भाष्यकृत्—

जाणन्तु अजाणतो तहेव उद्दिसिय ओहओ वावि । जाणग अजाणग वा वहेइ अनिया निया एसा ॥३१॥ (भा०)

व्याख्यातार्था, ततो निदयाऽनिदया वा य षट्कायप्रमर्दनं करोति—षण्णां पृथिव्यादीनां कायानां प्राणव्यपरोपणं विदधाति, तत् षट्कायप्रमर्दनं आत्मघ्नं नोआगमतो द्रव्यात्मघ्नं ब्रुवन्ति तीर्थकरगणधरा । अथ षट्कायप्रमर्दनं कथं नोआगमतो द्रव्यात्मघ्नं ?, यावता भावात्मघ्नं कस्मान्न भवति ?, अत आह—

दव्वाया खलु काया ।

व्याख्या—'कायाः' पृथिव्यादय 'खलु' निश्चयेन 'द्रव्यात्मानो' द्रव्यरूपा आत्मानः, जीवानां गुणपर्यायवत्तया द्रव्यत्वात्, उक्तं च—"अजीवकाया धर्माधर्माकाशपुद्गलाः, द्रव्याणि जीवाश्च" (तत्त्वा० अ० ५–सू० १–२) इति । ततस्तेषां षड्जीवनिकायानां वधे द्रव्यात्मवधः भवति। उक्त द्रव्यात्मत्वं, सम्प्रति भावात्मत्वं वक्तव्य—तच्च द्विधा—आगमतो नोआगमतश्च, तत्र आगमत आत्मशब्दार्थज्ञाता तत्र चोपयुक्तः, नोआगमतो भावात्मत्वमाह—

भावाया तिन्नि नाणमाईणि । परपाणपाडणरओ चरणाय अप्पणो हणइ ॥ १०४ ॥

व्याख्या—'भावात्मानो' भावरूपा आत्मानः 'त्रीणि ज्ञानादीनि' ज्ञानदर्शनचारित्राणि, आत्मनो हि पारमार्थिकं स्वस्वरूप ज्ञानदर्शनचरणात्मकं, ततस्तान्येव परमार्थत आत्मानो न शेषं द्रव्यमात्रं, स्वस्वरूपाभावात्, ततो यश्चारित्री सन् परेषां पृथिव्यादीनां ये प्राणाः—इन्द्रियादयः तेषां यत् पातनं—विनाशनं तस्मिन् रतः—आसक्तः स आत्मनश्चरणरूपं भावात्मानं हन्ति, चरणात्मनि च हते ज्ञानदर्शनरूपावप्यात्मानौ परमार्थतो हतावेव द्रष्टव्यौ, यत आह—

निच्छयनयस्स चरणायविघाए नाणदसणवहोऽवि । ववहारस्स उ चरणे हयंमि भयणा उ सेसाणं ॥१०५॥

व्याख्या—निश्चयनयस्य मतेन चरणात्मविघाते सति ज्ञानदर्शनयोरपि वधो–विघातो द्रष्टव्यः, ज्ञानदर्शनयोर्हि फलं चरणप्रतिपत्तिरूपा सम्यगुपगतिः, सा चेन्नास्ति तर्हि ते अपि ज्ञानदर्शने परमार्थतोऽसती एव, स्वकार्याकरणात्, उक्तं च मूलटीकायां—'चरणा

त्मनिघाते ज्ञानदर्शनवधोऽपि, तयोश्चरणफलत्वात्, फलाभावे च हेतोर्निरर्थकत्वादिति, अपिच—चरणं प्रतिपद्याऽऽधाकर्मग्रहणादिना ततो न विनिवर्तते स नियमाद्भगवदाज्ञाविलोपादिदोषभागी, भगवदाज्ञाविलोपादौ च वर्तमानो न सम्यग्ज्ञानी नापि सम्यग्दर्शनी, उक्तं च—"आणाए चिय चरणं तब्भंगे जाण किं न भग्गंति । आणं च अइक्कंतो कस्साएसा कुणइ सेसं ? ॥ १ ॥" तथा "जो जहवायं न कुणइ मिच्छद्दिट्ठी तओ हु को अन्नो ? । वड्ढेइ य मिच्छत्तं परस्स संकं जणेमाणो ॥ २ ॥" तच्चरणविघाते नियमतो ज्ञानदर्शनविघातः, 'व्यवहारस्य' व्यवहारनयस्य पुनर्मतेन हते चरणे 'शेषयोः' ज्ञानदर्शनयोः 'भजना' कचिद्धननं कचिन्न, य एकान्तेन भगवतो विमतिपक्षस्तस्य न भवतो यस्तु देशादिरतिः भगवति श्रद्धानमात्रं वा कुरुते तस्य व्यवहारनयमतेन सम्यग्दृष्टित्वात्तत्त्वत इति, ततो निश्चयनयमतापेक्षया चरणात्मनि हते ज्ञानदर्शनरूपावप्यात्मानौ हतावेवेति परमाणव्यपरोपणरतः समूलघातमात्मघ्न इति परमाणव्यपरोपणात्मघ्न, तच्च साधोराधाकर्म भुञ्जानस्यानुमोदनादिद्वारेण नियमतः सम्भवतीत्युपचारत आधाकर्म आत्मघ्नमित्युच्यते ॥ तदेवमुक्तमात्मघ्ननाम, सम्मत्यात्मकर्मनाम्नोऽवसरः, तदपि चात्मकर्म चतुर्धा, तद्यथा—नामात्मकर्म स्थापनात्मकर्म द्रव्यात्मकर्म भावात्मकर्म च, इदं चाधाकर्मैव यावज्ज्ञावनीय यावन्नोआगमतो भव्यशरीरद्रव्यात्मकर्म, ज्ञशरीरभव्यशरीरव्यतिरिक्तं तु द्रव्यात्मकर्म प्रतिपादयति—

दव्वंमि अत्तकम्मं जं जो उ ममायए तयं दव्वं ।

व्याख्या—'यः' पुरुषो यद् द्रम्मादिकं द्रव्यं 'ममायते' ममेति प्रतिपद्यते सत्-ममेति प्रतिपादनं तस्य पुरुषस्य 'दव्वंमि अत्तक

---

१ आज्ञयैव चरणं तद्भङ्गे जानीहि किं न भग्नमिति । आज्ञां चातिक्रान्तः कस्यादेशात् करोति शेषम् ? ॥ १ ॥

२ यो यथावादं न करोति मिथ्यादृष्टिस्ततः कोऽन्यः । वर्धयति च मिथ्यात्वं परस्य शङ्कां जनयन् ॥ २ ॥

र्म'ति ज्ञशरीरभव्यशरीरव्यतिरिक्त द्रव्ये–द्रव्यविषयमात्मकर्म्म भवति, आत्मसम्बन्धित्वेन कर्म्म–करणम् आत्मकर्म्मेति व्युत्पत्त्याश्रय-णात्। भावात्मकर्म्म च द्विधा, तद्यथा–आगमतो नोआगमतश्च, तत्राऽऽगमत आत्मकर्म्मशब्दार्थज्ञाता तत्र चोपयुक्तः, नोआगमतः पुनराह—

भावे असुहपरिणओ परकम्म अत्तणो कुणइ ॥ १०६ ॥

व्याख्या—'अशुभपरिणत' अशुभेन मरवाचादाधाकर्म्मग्रहणरूपेण भावेन परिणतः परस्य–पाचकादेः सम्बन्धि यत् कर्म्म दवनपाचनादिजनितं ज्ञानावरणीयादि तत् आत्मनः सम्बन्धि करोति, तच परसम्बन्धिनः कर्म्मण आत्मीयत्वेन करणं 'भावे' भावतः आत्मकर्म्म, नोआगमतो भावात्मकर्म्मेत्यर्थः, भावेन–परिणामविशेषेण परकीयस्यात्मसम्बन्धित्वेन कर्म्म–करणं भावात्मकर्म्मेति व्युत्पत्तेः ॥ एतदेव सार्द्धया गाथया भावयति—

आहाकम्मपरिणओ फासुयमवि संकिलिट्ठपरिणामो । आययमाणो बज्झइ तं जाणसु अत्तकम्मन्ति ॥ १०७ ॥

परकम्म अत्तकम्मीकरेइ तं जो उ गिण्हिउ भुंजे ।

व्याख्या—प्रासुकम्–अचेतनम् उपलक्षणमेतत् एषणीयं च स्वरूपेण भक्तादिकमास्तामाधाकर्म्मेत्यपिशब्दार्थः, 'सङ्क्लिष्टपरिणामः सन्' आधाकर्म्मग्रहणपरिणतः सन् 'आददानो' गृह्णन् यथाऽस्मतिशयेन व्याख्यानलब्धिमान् मद्गुणाश्चासाधारणाद्विधा दिरूपाः मूर्खस्य मानव इव तुष्ट कुत्र न प्रसरमधिरोहन्ति ?, ततो मद्गुणावर्जित एष सर्वोऽपि लोकः पक्त्वा पाचयित्वा च मह्यमिष्ट-मिष्टमोदनादिक मपरच्छीत्यादि, स इत्यमाददानः साक्षादारम्भकर्त्तेव ज्ञानावरणीयादिकर्म्मणा बध्यते, ततस्तत् ज्ञानावरणीयादिकर्म्म-

त्मकमात्मकर्म्म जानीहि, इयमत्र भावना—आधाकर्म्म यद्यपि स्वरूपेणानाधाकर्म्मापि भक्तिवशतो मदर्थमेतन्निष्पादितमित्याधाकर्म्मग्रहण-परिणतो यदा भुङ्क्ते तदा स साक्षादारम्भकर्तेव स्वपरिणामविशेषतो ज्ञानावरणीयादिकर्म्मणा बध्यते, यदि पुनर्न गृह्णीयाच्चेत् न बध्यते, तत आधाकर्म्मग्राहिणा यत्परस्य पाचकादेः कर्म्म तदात्मनोऽपि क्रियते इति परकर्म्म आत्मकर्म्म करोतीत्युच्यते, एतदेव स्पष्टं व्यनक्ति—'परकर्म्मे'त्यादि, तत आधाकर्म्म यदा साधुर्गृहीत्वा भुङ्क्ते स परस्य पाचकादेर्यत्कर्म्म तदात्मकर्म्मीकरोति, आत्मनोऽपि सम्बन्धि करोतीति भावार्थः ॥ अमुं च भावार्थमस्य वाक्यस्याजानानः परो भावसंशयं प्रकटयति—

तत्थ भवे परकिरिया कह णु अन्नत्थ संकमइ ? ॥ १०८ ॥

व्याख्या—'तत्र' परकर्म्म आत्मकर्म्मीकरोतीत्यत्र वाक्ये भवेत् परस्य वक्तव्यं यथा—कथं 'परक्रिया' परस्य सत्कं ज्ञानावरणीयादिकर्म्म अन्यत्र आधाकर्म्मभोजके साधौ सङ्क्रामति ?, नैव सङ्क्रामतीति भावः, न खलु जातुचिदपि परकृतं कर्म्म अन्यत्र सङ्क्रामति, यदि पुनरन्यत्रापि सङ्क्रामेत् तर्हि क्षपकश्रेणिमधिरूढः कृपापरीतचेताः सकलजगज्जन्तुकर्म्मनिर्मूलनापादनसमर्थः सर्वेषामपि जन्तूनां कर्म्म ज्ञानावरणीयाद्यात्मनि सङ्क्रमय्य क्षपयेत्, तथा च सति सर्वेषामेककालं मुक्तिरुपजायेत, न च जायते, तस्मान्नैव परकृतकर्म्मणामन्यत्र सङ्क्रम, उक्तं च—"क्षपकश्रेणिपरिगतः स समर्थः सर्वकर्म्मिणां कर्म्म। क्षपयितुमेको यदि कर्म्मसङ्क्रमः स्यात्परकृतस्य ॥ १ ॥ परकृतकर्म्मणि यस्मान्न क्रामति सङ्क्रमो विभागो वा। तस्मात्सत्त्वानां कर्म्म यस्य यत्तेन तद्वेद्यम् ॥ २ ॥" ततः कथमुच्यते—परकर्म्म आत्मकर्म्मीकरोतीति ?। इदं च वाक्यं पूर्वोक्तगतमन्यथाऽपि केचित्परमार्थमजानाना व्याख्यानयन्ति, तत्तन्मतमपाकर्तुमुपन्यस्यन्नाह—

कूडउवमाइ केइ परप्पउत्तेऽवि बेंति बंधोत्ति ।

व्याख्या—'केचित्' स्वयूथ्या एव प्रवचनरहस्यमजानाना 'कूटोपमया' कूटदृष्टान्तेन ब्रुवते 'परप्रयुक्तेऽपि' परेण पाचकादिना निष्पादितेऽप्योदनादौ साधोस्तद्ग्राहकस्य भवति बन्धः, एतदुक्तं भवति—यथा व्याधेन कूटे स्थापिते मृगस्यैव बन्धो न व्याधस्य, तथा गृहस्थेन पाकादौ कृते तद्ग्राहकस्य साधोर्बन्धो न पाककर्तुः, ततः परस्य यत्कर्म ज्ञानावरणीयादि सम्भवति तदाधाकर्मग्राही स्वस्यैव सम्बन्धि करोतीति परकर्म आत्मकर्मीकरोतीत्युच्यते, तदेतदसुन्दरं, जिनवचनविरुद्धत्वात्, तथाहि—परस्यापि साक्षादारम्भकर्तृत्वेन नियमत कर्मबन्धसम्भवः, ततः कथमुच्यते तद्ग्राहकस्य साधोर्बन्धो न पाककर्तुः ?, न च मृगस्यापि परप्रयुक्तिमात्राद् बन्धः, किन्तु स्वस्मादेव प्रमादादिदोषात्, एवं साधोरपि ॥ तथा चैतदेव निर्युक्तिकृदाह—

भणइ य गुरू पमत्तो बज्झइ कूडे अवक्खो य ॥ १०९ ॥

एमेव भावकूडे बज्झइ जो असुभभावपरिणामो । तम्हा उ असुभभावो वज्जेयव्वो पयत्तेणं ॥ ११० ॥

व्याख्या—'भणति' प्रतिपादयति, 'चः' पुनरर्थे, पुनरर्थभावम्—एके केचन सम्यग्गुरुचरणपर्युपासनाविकलतया यथाऽवस्थिततत्त्ववेदिताऽनन्तरोक्तं ब्रुवते, गुरुः पुनर्भगवान् श्रीयशोभद्रसूरिरेवमाह, एतेनैतत्रावेदयति—जिनवचनमवितथं जिज्ञासुना नियमतः प्रज्ञावताऽपि सम्यग्गुरुचरणकमलपर्युपासनमास्थेयम्, अन्यथा यथार्था अवेतथ्यानुपपत्तेः, उक्तं च—"तत्तदुत्प्रेक्षमाणानां, पुराणैरागमैर्विना । अनुपासितवृद्धानां, प्रज्ञा नातिप्रसीदति ॥ ' ॥" गुरुवचनमेव दर्शयति—मृगोऽपि खलु कूटे स बध्यते यः प्रमत्तोऽवसन्न भवति, यस्त्वप्रमत्तो दक्षः स कदाचनापि न बध्यते, तथाहि—अप्रमत्तो मृगः प्रथमत एव कूटदेश परिहरति, अथ कथमपि प्रमादवशात् कूटदेश

मपि प्राप्तो भवति तथापि यावन्नाद्यापि य षः पतति तावदक्षतया भ्रगिति तद्विषयादपसर्पतीति, यस्तु प्रमत्तो दक्षतारहितश्च स बध्यते एवं, तस्मा मृगोऽपि बध्यते परमार्थतः स्वप्रमादक्रियावशतो न परप्रयुक्तिमात्रात्, 'एवमेव' अनेनैव मृगदृष्टान्तोक्तप्रकारेण 'भावकूटे' स्वयम् रूपभावबन्धनाय कूटमिव कूटम्—आधाकर्म तत्र स 'बध्यते' ज्ञानावरणीयादिकर्म्मणा युज्यते, योऽशुभभावपरिणामः—आहारकाम्पट्यत आधाकर्मग्रहणात्मकअशुभभावपरिणामो न क्षेपः, न खल्वाधाकर्म्मणि कृतेऽपि यो न गृह्णाति नापि भुङ्क्ते स ज्ञानावरणीयादिना पापेन बध्यते, न हि कूटे स्थापितेऽपि यो मृगस्तदेश एव नाऽऽयाति आयातोऽपि यत्नतस्तदेशं परिहरति स कूटेन बन्धमाप्नोति, तस्य परप्रयुक्तिमात्राद् यो येन प्रोक्तनीत्या परकृतकर्म्मण आत्मकर्म्मीकरणमुपपद्यते, किन्त्वशुभाध्यवसायभावतः, तस्मादशुभो भाव आधाकर्म्म ग्रहणरूपः साधुना प्रयत्नेन वर्जयितव्यः, परकर्म्म आत्मकर्म्म करोतीत्यत्र च वाक्ये भावार्थः प्रागेव दर्शितः, यथा परस्य पाचकादेर्यत्कर्म तदात्मकर्म्मीकरोति, किमुक्तं भवति ?—तदात्मन्यपि कर्म्म करोतीति, ततो न कश्चिद्दोषः, परकर्म्मणश्चात्मकर्म्मीकरणमाधाकर्म्मणा ग्रहणे भोजने वा सति भवति, नान्यथा, तत उपचारादाधाकर्म्म आत्मकर्मेत्युच्यते ॥ ननु यदाधाकर्म्म यदा स्वयं करोत्यथवा कारयति कृतं वाऽनुमोदते तदा भवतु दोषो, यदा तु स्वयं न करोति नापि कारयति नाप्यनुमोदते तदा कस्तस्य ग्रहणे दोष इति ?, अत आह—

कामं सयं न कुव्वइ जाणतो पुण तहावि तग्गाही । वड्ढेइ तप्पसंगं अगिण्हमाणो उ वारेइ ॥ १११ ॥

व्याख्या—'कामं' सम्मतमेतत्, यद्यपि स्वयं न करोत्याधाकर्म्म उपलक्षणमेतत् कारयति, तथाऽपि मदर्थमेतन्निष्पादितमिति जानानो यद्याधाकर्म्म गृह्णाति तर्हि तद्ग्राही 'तत्प्रसङ्गम्' आधाकर्मग्रहणप्रसङ्गं वर्द्धयति, तथाहि—यदा स साधुराधाकर्म्म जानानो गृह्णाति तदाऽन्येषां साधूनां श्रावकाणां चैवं बुद्धिरुपजायते—नाऽऽधाकर्म्मभोजने कश्चनापि दोषः, कथमन्यथा स साधुर्जानानोऽपि गृह्णी

कूडउवमाइ केई परप्पउत्तेऽवि बेंति वधोत्ति ।

व्याख्या—'केचिन्' स्वयूथ्या एव प्रवचनरहस्यमजानानाः 'कूटोपमया' कूटदृष्टान्तेन ब्रुवते 'परप्रयुक्तेऽपि' परेण पाचकादिना निष्पादितेऽप्योदनादौ साधोस्तद्ग्राहकस्य भवति बन्ध, एतदुक्तं भवति—यथा व्याधेन कूटे स्थापिते मृगस्यैव बन्धो न व्याधस्य, तथा गृहस्थेन पाकादौ कृते तद्ग्राहकस्य साधोर्बन्धो न पाककर्तुः, तत परस्य यत्कर्म ज्ञानावरणीयादि सम्भवति तदाधाकर्मग्राही स्वस्यैव सम्बन्धि करोतीति परकर्म आत्मकर्मीकरोतीत्युच्यते, तदेतदसदुत्तरं, जिनवचनविरुद्धत्वात्, तथाहि—परस्यापि साक्षादारम्भकर्तृत्वेन नियमतः कर्मबन्धसम्भवः, तत कथमुच्यते तद्ग्राहकस्य साधोर्बन्धो न पाककर्तुः ?, न च मृगस्यापि परप्रयुक्तिमात्राद् बन्धः, किन्तु स्वस्मादेव प्रमादादिदोषात्, एवं साधोरपि ॥ तथा चैतदेव निर्युक्तिकृदाह—

भणइ य गुरू पमत्तो वज्झइ कूडे अवक्खो य ॥ १०९ ॥

एमेव भावकूडे वज्झइ जो असुभभावपरिणामो । तम्हा उ असुभभावो वज्जेयव्वो पयत्तेण ॥ ११० ॥

व्याख्या—'भणति' प्रतिपादयति, 'चः' पुनरर्थे, पुनरर्थश्चायम्—एके केचन सम्यग्गुरुचरणपर्युपासनाविकलतया यथाऽवस्थित तत्त्ववेदिवारोऽन्तरोक्तं ब्रुवते, गुरुः पुनर्भगवान् श्रीयशोभद्रसूरिरेवमाह, एतेनैतदावेदयति—जिनवचनमवितथं जिज्ञासुना नियमत प्रयत्नेनाऽपि सम्यग्गुरुचरणकमलपर्युपासनमास्थेयम्, अन्यथा यथावत् अवबोधानुपपत्तेः, उक्तं च—"तत्तदुत्प्रेक्षमाणानां, पुराणैरागमैर्विना । अनुपासितवृद्धानां, प्रज्ञा नातिप्रसीदति ॥ " ॥" गुरुवचनमेव दर्शयति—मृगोऽपि खलु कूटे स बध्यते यः प्रमत्तोऽन्यथा भवति, यस्त्वप्रमत्तो दक्षश्च स कदाचनापि न बध्यते, तथाहि—अप्रमत्तो मृगः प्रयत्न एव कूटदेशं परिहरति, अथ कथमपि प्रमादवशात् कूटदेश

एन्तं प्रवक्ष्यामि, तत्र प्रथमतः प्रतिषेवणास्वरूपं प्रकाश्यं, तत्रापि य आधाकर्म्म स्वयमानीय भुङ्क्ते स आधाकर्म्मप्रतिसेवी प्रतीत एव ॥ केवलमिह ये परेणोपनीतमाधाकर्म्म भुञ्जानस्य न कश्चिद्दोष इति मन्यन्ते तन्मतविकुट्टनार्थं परेणोपनीतस्याऽऽधाकर्म्मणो भोमने प्रतिषेवणप्रदोषमाह—

अन्नेणाहाकम्मं उवणीय असइ चोइओ भणइ । परहत्थेणंगारे कड्ढंतो जह न डज्झइ हु ॥ ११४ ॥

एव खु अह सुद्धो दोसो देंतस्स कूडउवमाए । समयत्थमजाणंतो मूढो पडिसेवणं कुणइ ॥ ११५ ॥

व्याख्या—'अन्येन' साधुना भक्तादिकमाधाकर्म्म 'उपनीतं' गृहस्थगृहादानीय समर्पितं यथोऽश्नाति स प्रतिषेवणां करोतीति सम्बन्धः, स चाधाकर्म्म भुञ्जानः केनाप्यपरेण साधुना धिग्धार्मिकं यत्र तत्र भवान्विद्वानपि संयतोऽप्याधाकर्म्म भुङ्क्ते इति चोदितः शिक्षितः सन् प्रत्युत्तरं भणति—यथा न मे कश्चिद्दोषः, स्वयंग्रहणस्याभावात्, यो हि नाम स्वयमाधाकर्म्म गृहीत्वा भुङ्क्ते तस्य दोषो, यस्तु परेणोपनीतं भुङ्क्ते तस्य न कश्चित्, यथा चात्र दृष्टान्तो यथा—परहस्तेनाङ्गारान् कर्षयन् दह्यते, एवमहमप्याधाकर्म्मभोजी 'खु' निश्चितं शुद्ध एव, दोषः पुनर्ददतो यथा परस्य स्वहस्तेनाङ्गारानाकर्षतः, एव 'कूटया उपमया' अलीकेन दृष्टान्तेन 'समयार्थं' भगवत्प्रवचनोपनिषदं "जेससट्ठा आरंभो पाणिवहो होइ तस्स नियमेण । पाणिवहे वयभंगो वयभंगे दोग्गई चेव ॥ १ ॥" इत्यादि रूपम् अजानानः, अत एव मूढः प्रतिषेवणं कुरुते ॥ तदेवमुक्तं प्रतिषेवणस्य स्वरूपं, सम्प्रति प्रतिश्रवणस्य स्वरूपमाह—

१ यस्यार्थमारम्भः प्राणिवधो भवति तस्य नियमेन । प्राणिवधे व्रतभङ्गो व्रतभङ्गे दुर्गतिरेव ॥ १ ॥

उवओगमि य टाभं कम्मगाहिस्स चित्तरक्खट्ठा । आलोइए सुलद्धं भणइ भणतस्स पडिसुणणा ॥ ११६ ॥

व्याख्या—इह यो गुरुरुपयोगकरणवेलायां कर्मग्राहिण आधाकर्मग्रहणाय प्रवृत्तस्य शिष्यस्य 'चित्तरक्षार्थं' मनोऽन्यथाभावनिवारणार्थं दाक्षिण्याद्युपेतो 'लाभं भणति' लाभ इति शब्दमुच्चारयति, तथाऽऽधाकर्मणि गृहस्थगृहादानीय आलोचिते आदिकर्मेव करोटिकया धृतमित्येवं निवेदिते 'सुलद्धं' शोभनं जातं यत्त्वयेदं लब्धमिति भणति तस्य गुरोरित्थं भणतः प्रतिश्रवणं नाम दोषः, सूत्रे तु क्लीबनिर्देशः प्राकृतत्वात्, प्राकृते हि लिङ्गं व्यभिचारि, यदाह पाणिनिः स्वप्राकृतलक्षणे—" लिङ्गं व्यभिचार्यपी"ति, प्रतिश्रवणं च नामाभ्युपगमः ॥ सम्प्रति संवासानुमोदनयोः स्वरूपं प्रतिपादयति—

संवासो उ पसिद्धो अणुमोयण कम्मभोयगपसंसा । एएसिमुदाहरणा एए उ कमेण नायव्वा ॥ ११७ ॥

व्याख्या—'संवासः' आधाकर्मभोक्तृभिः सहैकत्र संवसनरूपः प्रसिद्ध एव, अनुमोदना त्वाधाकर्मभोजकप्रशंसा—कृतपुण्या सुलब्धिका एते ये इत्थं सदैव लभन्ते भुञ्जते चेत्येवंरूपा ॥ तदेवमुक्तं प्रतिषेवणादीनां चतुर्णामपि स्वरूपं, सम्प्रत्येतेषामेव प्रतिषेवणादीनां क्रमेण 'एतानि' वक्ष्यमाणस्वरूपाणि उदाहरणानि ज्ञातव्यानि, सूत्रे च उदाहरणशब्दस्य पुंस्त्वं प्राकृतलक्षणवशात् ॥ तत्र यान्युदाहरणानि वक्तव्यानि तेषां नामानि क्रमेण प्रतिपादयति—

पडिसेवणाएँ तेणा पडिसुणणाए उ रायपुत्तो उ । संवासमि य पल्ली अणुमोयण रायदुट्ठो य ॥ ११८ ॥

व्याख्या—प्रतिषेवणस्य स्तेना उदाहरणं, प्रतिश्रवणस्य तु राजपुत्रः, राजपुत्रोपलक्षिता येषां पुरुषाः, संवासे 'पल्ली' पल्लीवास्तव्या वणिजः, अनुमोदनायां राजदुष्टो, राजदुष्टोपलक्षितास्तत्प्रशंसाकारिणः ॥ तत्र प्रथमतः प्रतिषेवणसम्बन्धिनं स्तेनदृष्टान्तं भावयति—

गोणीहरण सभूमी नेऊण गोणिओ पहे भक्खे । निव्विसया परिवेसण ठियावि ते कूविया घत्थे ॥ ११९ ॥

व्याख्या—इह गाथाक्षरयोजना सुगमत्वात्स्वयमेव कर्तव्या केवलं 'निव्विसया' इत्यत्र उपमोक्कारो, निष्पूर्वस्य विशेरुपभोगे वर्तमानत्वात्, तथा चोक्तम्—" निर्वेश उपभोगः स्यात् ", 'कूजकाः' व्यापारकारिणः, गवां व्यावर्तका इत्यर्थः, 'घत्थे' इति गृहीताः, कथानकमुच्यते—इह कश्चिद्ग्रामे बहवो दस्यवः, ते चान्यदा कुतश्चित्सन्निवेशाद्गा अपहृत्य निजग्रामाभिमुखं प्रचलिताः, गच्छतां च तेषामपान्तराले केऽप्यन्ये दस्यवः पथिकाः मिलितवन्तः, ततस्तेऽपि तैः सार्द्धं व्रजन्ति, व्रजन्तश्च स्वदेशं प्राप्ताः, ततः प्राप्तः स्वदेश इति निर्भया भोजनवेलायां कतिपया गा विनाश्य भोजनाय तन्मांसं पक्तुमारब्धवन्तः, अस्मिंश्च प्रस्तावे केऽप्यन्येऽपि पथिकाः समाययुः, ततस्तेऽपि तैर्दस्युभिर्भोजनाय निमन्त्रिताः, ततो गोमांसे पक्वे केऽपि चौराः पथिकाश्च भोक्तुं प्रवृत्ताः, केऽपि गोमांसभक्षणं बहुपापमिति परिभाव्य न भोजनाय प्रवृत्ताः, केवलमन्येभ्यः परिवेषणं विदधति, अत्रान्तरे च निष्पत्याकारनिशितकरवालकमीपसमूर्तयः समाययुः कूजकाः, ततस्तैः सर्वेऽपि मोक्तारः परिवेषकाश्च परिगृहीताः, [illegible] ये पथिका अपान्तराले मिलितास्ते पथिका वयमिति ब्रुवाणा अपि चौरोपनीतगोमांसभक्षणपरिवेषणप्रवृत्ततया चौरवदुष्टा इति गृहीता विनाशिताश्च ॥ अमुमेवार्थं दार्ष्टान्तिके योजयति—

जेऽविय परिवेसती, भायणाणि धरति य । तेऽवि बज्झंति तिव्वेण, कम्मुणा किमु भोइणो ? ॥ १२० ॥

व्याख्या—इह चौराणां येऽपान्तराले भोजनवेलायां वा ये मिलिताः पथिकास्तत्रापि ये परिवेषमात्रं भाजनधारणमात्रं वा कृतवन्तस्तेऽपि कूजकैरागत्य यथा विनाशिताश्च, एवमिहापि ये साधवोऽन्येभ्यः साधुभ्यः आधाकर्म परिवेषयन्ति वा धरन्ति तेऽपि 'तीव्रेण' दुस्सहविपाकेन नरकादिगतिहेतुना कर्मणा बध्यन्ते, किं पुनराधाकर्मभोजिनः ? । तत एतदुपमयात्परिवेषणादिमात्रमप्याधाकर्मणा

प्रतिषेवण यतिभिर्न कर्त्तव्यम्, इह चौरस्थानीया आधाकर्म्मनिमन्त्रिणः साधवो गोमांसभक्षकचौरपथिकस्थानीयाः स्वयंगृहीतनिमन्त्रिताधाकर्म्म-भोजिनो गोमांसपरिवेषकादिस्थानीया आधाकर्म्मपरिवेषकादयः गोमांसस्थानीयमाधाकर्म्म पयस्थानीयं मानुष जन्म कूपकस्थानीयानि कर्म्माणि मरणस्थानीय नरकादिप्रपातः ॥ सम्प्रति प्रतिश्रवणस्य पूर्वोक्त राजसुतदृष्टान्तं भावयति—

सामत्थण रायसुए पिइवहण सहाय तह य तुण्हिक्का । तिण्हंपि हु पडिसुणणा रण्णा सिट्ठंमि सा नत्थि ॥ १२१ ॥

व्याख्या—गुणसमृद्ध नाम नगरं, तत्र महाबलो राजा तस्य शीला नाम देवी, तयोर्विजितसमरो नाम ज्येष्ठः कुमारः, स च राज्यं जिघृक्षुः पितरि दुष्टाशयश्चिन्तयामास—यथा ममैष पिता स्थविरोऽपि न म्रियते नूनं दीर्घजीवी सम्भाव्यते ततो निजभटान् सहा-यीकृत्यैनं मारयामीति, एवं च चिन्तयित्वा निजभटैः समं मन्त्रयितुं प्रावर्त्तत, तत्र कैश्चिदुक्तं—वयं ते साहायककारिणोऽपरैरुक्तम्—एवं कुरु, केचित्पुनस्तूष्णीं प्रतिपेदिरे, अपरे पुनरेतदप्रतिपद्यमानाः सकलमपि वृत्तान्तं राज्ञे निवेदयामासुः, ततो राजा ये साहायकं प्रतिपन्ना ये चैवं कुर्वित्युक्तवन्तो येऽपि च तूष्णीं तस्थुः तान् सर्वानपि ज्येष्ठं च कुमारं वैवस्वतमुखे प्रतिचिक्षेप, यैस्त्वागत्य निवेदितं ते पूजिताः, गाथाक्षरयोजना त्वियं—'सामत्थणं' स्वभटैः सह पर्यालोचनं, 'रायसुए' इति तृतीयार्थे सप्तमी, ततोऽयमर्थः—राजसुतेन कर्तुमारब्धमिति शेषः, तत्र कैश्चिदुक्तं—पितृहनने कर्त्तव्ये तव सहाया वयमिति 'तथा' इति समुच्चये चशब्दोऽनुक्तसमुच्चयार्थः स च केचिदेवं कुर्विति भाषितवन्त इति समुच्चिनोति, केचित्पुनस्तूष्णीका जाताः—मौनेनावस्थिताः, एतेषां च त्रयाणामपि प्रतिश्रवणदोषः, यैस्तु राज्ञे शिष्टं तेषां 'सा' तत् प्रतिश्रवण नास्ति ॥ अमुमेवार्थं दार्ष्टान्तिके योजयति—

भुंज न भुंजि भुंजसु तइओ तुसिणीए भुंजए पढमो । तिण्हंपि हु पडिसुणणा पडिसेहतस्स सा नत्थि ॥ १२२ ॥

व्याख्या—इह किल केनापि साधुना चत्वारः साधव आधाकर्म्मणे निमन्त्रिता यथा भुङ्ग्ध्वं यूयमेनमाहारमिति, तत्रैवं निमन्त्रणे कृते प्रथमो भुङ्क्ते, द्वितीय आह—नाहं भुञ्जे भुङ्क्ष्व त्वमिति, तृतीयो मौनमाश्रितः, चतुर्थः पुनः प्रतिषिद्धवान् यथा—न कल्पते साधूनामाधाकर्म्म तस्मादहं न भुञ्जे इति, तत्र त्रयाणामाद्यानां प्रतिश्रवणदोषः, चतुर्थस्य प्रतिषेधत 'सा' तत्प्रतिश्रवणं नास्ति, अत्राह—नन्वाद्यस्याधाकर्म्म भुञ्जानस्य प्रतिषेवणलक्षण एव दोषः, कथं प्रतिश्रवणदोष उक्तः ?, उच्यते, इह यदाऽऽधाकर्म्मनिमन्त्रित सत्तद्ग्रहणमभ्युपगच्छति तदा नाद्यापि प्रतिषेवणमिति प्रतिश्रवणदोषः, तत ऊर्ध्वं तु प्रतिषेवणं, ततो न कश्चिद्दोषः ॥ अथामीषामेव भोक्त्रादीनां कस्य कायिकादिको दोषः स्याद् ?, अत आह—

आणतभुजगा कम्मुणा उ वीयस्स वाइओ दोसो । तइयस्स य माणसिओ तीहिं विसुद्धो चउत्थो उ ॥१२३॥

व्याख्या—इह य आधाकर्म्मणः स्वयमानेता यश्चानीतस्य निमन्त्रितः सन् भोक्ता तौ द्वावपि कर्म्मणा—आनयनभोजनरूपया कायक्रियया तत्सम्बन्धान्मनसा वाचा च दोषवन्तौ, द्वितीयस्य तु भुङ्क्ष्व त्वं नाहं भुञ्जे इति ब्रुवाणस्य वाचिको दोषः, उपलक्षणमेतन्मानसिकश्च, तृतीयस्य तु तूष्णीं स्थितस्य मानसिको, यस्तु चतुर्थः स त्रिभिरपि दोषैर्विशुद्धः, तस्माच्चतुर्थकल्पेन सर्वदैव साधुना भवितव्यम् ॥ सम्प्रति दृष्टान्तोक्तस्य कुमारस्य ये दोषाः संभवन्ति तानुपदर्श्याधाकर्म्मणो भोक्तरि योजयति—

पडिसेवण पडिसुणणा संवासऽणुमोयणा उ चउरोवि । पियमारग रायसुए विभासियव्वा जइजणेऽवि ॥ १२४ ॥

व्याख्या—पितृमारके राजसुते प्रतिषेवणप्रतिश्रवणसंवासानुमोदनारूपाश्चत्वारोऽपि दोषा घटन्ते, तथाहि—तस्य स्वयं पितृमारणाय प्रवृत्तत्वात्प्रतिषेवणं, यच्च मम सहाया इति निजभटवचनं प्रतिपद्यमानस्य प्रतिश्रवणं, तैरेव सार्द्धमेकत्र निवसनेन संवासः, तेषु बहुमानक-

रणादनुमोदना, एवं यतिमनेऽप्याधाकर्म्मणो भोक्तरि 'विभाषितव्याः' योजनीयाः, अत्र यः स्वयमानीयान्यै स भुङ्क्ते तत्र प्रथमतो योऽपन्ते, तस्याऽऽधाकर्म्म गृहस्थगृहादानीय भुञ्जानस्य प्रतिषेवण, गृहस्थेनाऽऽधाकर्म्मग्रहणाय निमन्त्रितस्य तद्ग्रहणाभ्युपगमं प्रतिश्रवणं, यस्मै तदाधाकर्म्म आनीय संविभागेन प्रयच्छति तेन सहैकत्र समसतः संवासः, तथैव बहुमानकरणादनुमोदना, यदाऽन्येनाऽऽनीतमाधाकर्म्म निमन्त्रितः सन् भुङ्क्ते तस्य प्रथमतो निमन्त्रणाऽनन्तरमभ्युपगच्छतः प्रतिश्रवणं, ततो भुञ्जानस्य प्रतिषेवणं, निमन्त्रकेण सहैकत्र समसतः संवासः, तत्र बहुमानकरणादनुमोदना, तदेवं यत्र प्रतिषेवणं तत्र नियमतश्चत्वारोऽपि दोषाः, प्रतिश्रवणे च केवले त्रयः, संवासे द्वौ, अनुमोदनायां त्वनुमोदनैव केवला, अत एवादिपदं गुरु शेषाणि तु पदानि लघुलघुलघुकानीति ॥ सम्प्रति संवासे पल्ली दृष्टान्तं भावयति—

पल्लीवहंमि नट्ठा चोरा वणिया वयं न चोरत्ति । न पलाया पावकरत्ति काउ रन्ना उवालद्धा ॥ १२५ ॥

व्याख्या—वसन्तपुरं नाम नगरं, तत्रारिमर्दनो नाम राजा, तस्य प्रियदर्शना देवी, तस्य वसन्तपुरस्य प्रत्यासन्ना भीमाभिधाना पल्ली, तस्यां च बहवो भिल्लरूपा दस्यवः परिवसन्ति वणिजश्च, ते च दस्यवः सदैव स्वपल्ल्या विनिर्गत्य सकलमप्यरिमर्दनराजमण्डलमुपद्रवन्ति, न च कश्चिदस्ति राज्ञः सामन्तो माण्डलिको वा यस्तान् साधयति, ततोऽन्यदा सकलं सकलमण्डलोपद्रवमाकर्ण्य महाकोपावेशपूरितमानसो राजा स्वयं महतीं सामग्रीं विधाय भिल्लान् प्रति जगाम, भिल्लाश्च पल्लिं मुक्त्वा सम्मुखीभूय सङ्ग्रामं दातुमुद्यताः, राजा प्रचण्डसेनापरिकलिततया तान् सर्वानप्यगणयन् सोत्साहो हन्तुमारब्धवान्, ते चैवं हन्यमानाः केऽपि तथैव परासवो बभूवुः, केऽपि पुनः पलायितवन्तः, राजा च सामर्षः पल्लीं गृहीतवान्, वणिजश्च तमस्या न वयं चौरास्ततः किमस्माकं राजा करिष्यति? इति बुद्ध्या नाशे

वन्, राज्ञा च तेऽपि ग्राहिताः, ततस्तैर्विज्ञप्यपायके यथा—देव ! वयं वणिजो न चौरा इति, ततो राजाऽवादीत्—यूय चौरेभ्योऽप्यतीवाप राधकारिणो यऽस्माकमपराधकारिभिश्चौरैः सह संवसथेति, ततो निगृहीताः । गाथाक्षरयोजना तु सुगमत्वात्स्वय कार्या । दार्ष्टान्तिके योजनां करोति—

आहाकम्मभोईहिं सहवासो तह य तव्विवज्जंपि । दंसणगंधपरिकहा भाविंति सुलूहविर्त्तिपि ॥ १२६ ॥

भावना—यथा वणिजां चौरैः सहैकत्र संवासो दोषाय बभूव तथा साधूनामप्याधाकर्म्मभोक्तृभिः सहैकत्र संवासो दोषाय वेदि तव्यः, यत 'तद्विवर्ज्जमपि' आधाकर्म्मपरिहारमपि तथा 'सुरूक्षवृत्तिमपि' सुष्ठु-अतिशयेन रूक्षा द्रव्यतो विकृत्यपरिभोगेण भावतोऽभि ष्वङ्गाभावेन निःस्नेहा वृत्ति'-र्वर्त्तनं यस्य स तथा तमपि आधाकर्म्मसम्बन्धिन्यो दर्शनगन्धपरिकथा 'भावयन्ति' आधाकर्म्मपरिभोग वाञ्छोत्पादनेन वासयन्ति, तथाहि—'दर्शनम्' अवलोकनं, तच्च मनोज्ञमनोज्ञतराधाकर्म्माहारविषय निपमाद्वासयति, यतः कस्य नाम वह्नकुन्दावदातो रसपाकनिधाननिष्णातमहासूपकारसुसंस्कृतः शाल्याद्योदनो न मनःक्षोभमुत्पादयति, गन्धोऽपि सद्यस्तापितघृतादिस म्बन्धी नासिकेन्द्रियाप्यायनशीलो बलादपि तद्भोजने श्रद्धामुपजनयति, परिकथाऽपि च विशिष्टविविधविशिष्टतरद्रव्यनिष्पादितमोदकादिविषया विधीयमाना तदास्वादसम्पत्त्यावसायिनो चेव उत्साहयितुमीश्वरा, तथादर्शनात्, ततोऽवश्यमाधाकर्म्मभोक्तृभिः सह संवासो यतीनां दोषायेति ॥ अनुमोदनायां राजदुष्टदृष्टान्तं भावयति—

रायारोहऽवराहे विभूसिओ घाइओ नयरमज्झे । धन्नाधन्नात्ति कहा वहावहो कप्पडिय खोला ॥ १२७ ॥

व्याख्या—श्रीनिलय नाम नगर तत्र गुणचन्द्रो नाम राजा, तस्य गुणवतीप्रमुखमन्तःपुरं, तत्रैव च पुरे सुरूपो नाम वणिक्, स

च निजशरीरसौन्दर्यविनिर्जितमकरध्वजरूपेणासौ कमनीयकामिनीनामतीव कामास्पदं स्वभावतश्च परदाराभिष्वङ्गलालसः, ततः सोऽन्यदा राजाऽन्तःपुरसन्निवेशसमीपं गच्छन्नन्तःपुरिकाभिः सस्नेहमवलोकितः, तेनापि च ताः साभिलाषमवलोकिता, ततो जातः परस्परमनुरागः, दूतीनिवेदितसम्प्रयोगवृत्तेन च ताः प्रतिदिनं तेन सेवितुमारब्धाः, राज्ञा च कथमप्ययं वृत्तान्तो जज्ञे, ततो यथा सोऽन्तःपुरं प्राविशत्तदा निजपुरुषैर्धारितो धारयित्वा च यैरेवाभरणैरसावन्तःपुरं प्रविवेश तैरेवाभरणैर्विभूषितो नगरमध्ये चतुष्पथे सकलजनसमक्षं विविधकदर्थनापुरस्सरं विनिपातितो। राजा चान्तःपुरविध्वंसेनातीव क्रूरमनास्तस्मिन् विनाशितेऽपि न कोपाऽऽवेशं मुञ्चति, ततो हेरिकान् प्रेषयामास, यथा रे! दुरात्मानं तं ये प्रशंसन्ति ये वा निन्दन्ति तान् द्वयानपि मम निवेदय? इति, एवं च ते प्रेषिताः कार्पटिकवेषधारिणः सर्वत्रापि नगरे परिभ्रमन्ति, लोकाश्च तं विनाशितं दृष्ट्वा केचन ब्रुवते, यथा अहो! जातेन मनुजन्मनाऽमुष्य यावन्मर्त्यं परं या मत्समादृशा मधन्यानां दृष्टिपथमपि कदाचनापि नायान्ति ता अप्येष यथासुखं चिरकालं भुक्त्वा मृतस्तस्मादन्य एष इति, अपरे ब्रुवते—अधन्य एष उभयलोकविरुद्धकारी, स्वामिनोऽन्तःपुरिका हि जननीतुल्याः, ततस्तास्वप्येष सञ्चरन् कथं प्रशंसामर्हति शिष्टेभ्यः? इति, ततस्ते द्वयेऽपि हेरिकैर्निवेदिता राज्ञो, राज्ञा च ये तस्य निन्दाकारिणस्ते सत्कृत्य इतिकृत्वा पूजिताः, इतरे तु कृतान्तमुखे प्रक्षिप्यन्त, गाथाक्षरयोजना त्वेवं—राज्ञोऽपराधे—अन्तःपुरं तद्विषयेऽपराधे यैरेवाऽऽभरणैर्विभूषितोऽन्तःपुरे प्रविष्टस्तैरेव विभूषितो नगरमध्ये घातितः, ततः कार्पटिकवेषधारिणः 'लोकाः' हेरिका राज्ञा नियुक्ताः, लोकानां च तद्विषया धन्याधन्यकथा, ततो धन्यकथाकारिणां विनाशः इतरेषां त्वविनाश इति, दार्ष्टान्तिकयोजना त्वेवम्—एके सावद्यमाधाकर्म भुञ्जते, तथापरे जल्पन्ति—धन्या एते सुखं जीवन्ति, अन्ये ब्रुवते—[illegible] ये [illegible] एष ये [illegible] कर्मणा बध्यन्ते इतरे तु न, इहान्तःपुरस्थानीयमाधाकर्म, अस्य

पुरोहकरिस्थानीया आधाकर्म्मभोजिनः साधवः, नृपस्थानीयं ज्ञानावरणादिकं कर्म्म, मरणस्थानीयः संसारः, तत्र ये आधाकर्म्मभोजनप्रशंसकास्ते कर्म्मवधे निबद्धाः, शेषास्त्वनिबद्धाः ॥ सम्प्रत्यनुमोदनाद्वारमेव दर्शयति—

साउं पज्जत्तं आयरेण काले रिउक्खम निद्धं । तग्गुणविकत्थणाए अभुंजमाणेऽवि अणुमन्ना ॥ १२८ ॥

व्याख्या—आधाकर्म्मभोजिनं दृष्ट्वा केचिदेवं ब्रुवते—वयं तावत् कदाचनापि मनोज्ञमाहारं न लभामहे, एते पुनः सदैव स्वादु लभन्ते, तदपि च 'पर्याप्तं' परिपूर्णं, तथापि 'आदरेण' बहुमानपुरस्सरं तथापि 'काले' प्रस्तुतभोजनवेलायां तदपि 'ऋतुक्षमं' शिशिरादिऋतूपयोगि तथा 'स्निग्धं' घृतपूरादि, तस्माद्धन्या अमी सुखं जीवन्ति, एवं 'तद्गुणविकत्थनया' तद्गुणप्रशंसया 'अभुञ्जानेऽपि' अनभ्यवहरत्यपि 'अनुमन्या' अनुमोदना, इह अनुमन्याजनितो दोषोऽपि कार्ये कारणोपचारादनुमन्येत्युक्तः, ततोऽयमर्थः—अभुञ्जानेऽपि अनुमोदनाद्वारेणाधाकर्म्मभोजिन इव दोषो भवतीति, अन्ये तु तद्गुणविकत्थनामेव योजयन्ति—आधाकर्म्मभोजिनं कोऽपि कन्दर्पेणानाभोगेन वा पृच्छति—साधु कस्मै त्वया भोजनं, तथा पर्याप्तं तथा आदरेण भक्त्या इत्यादि?, तत्राप्यविरोधः ॥ तदेवमुक्तान्याधाकर्म्मणो नामानि, तदुक्तौ च यदुक्तं प्राग् मूलद्वारगाथायाम् 'आधाकर्म्मिकनामा' इति तद्व्याख्यातं, सम्प्रति 'एगट्ठा' इत्यवयवं व्याचिख्यासुरिदमाह—

आहा अहे य कम्मे आयाहम्मे य अत्तकम्मे य । जह वंजणनाणत्तं अत्थेणऽवि पुच्छए एवं ॥ १२९ ॥

व्याख्या—अथ परः एवं पृच्छति, यथा आधाकर्म्म अधःकर्म्म आत्मघ्नम् आत्मकर्म्म इत्येतेषु चतुर्षु नामसु व्यञ्जनैर्नानात्वं विद्यते, तथा 'अर्थेनापि' अर्थापेक्षयापि, नानात्वमस्ति किंवा न? इति, पृच्छतश्चायमभिप्रायः—इह आधाकर्म्मादीनां नाम्नां सर्वेषामपि व्युत्पत्तिनिमित्तं पृथक् पृथगुक्तं, तद्यथा—आधया कर्म्म आधाकर्म्म, अत्र साधुविषयप्रणिधानपुरस्सरपाकादिक्रियासमारम्भो व्युत्पत्तिनिमित्तम्,

अधोऽधःकर्म अधः कर्म, अत्र विशुद्धेभ्यः संयमादिस्थानेभ्योऽधोऽधस्तरामागमनम्, आत्मानं हन्तीत्यात्मघ्नमिति, अत्र चरणायात्म विनाशन, परकर्म आत्मकर्म क्रियते इत्यात्मकर्म, अत्र परकर्मण आत्मसम्बन्धितया करणं, तत्रेऽत्र सशयो, यथा व्युत्पत्तिनिमित्त पृथक् पृथग् भिन्नमेव प्रवृत्तिनिमित्तमपि पृथक् पृथग् भिन्न यथा घटपटशकटादिशब्दानां, किंवा न यथा घटकलशकुम्भादीनामिति, अत्र 'आहा अहे य कम्मे' इत्यादावसरयोमना प्रागिव भावनीया ॥ एवं परेण प्रश्ने कृते सति शिष्यमतिमागरव्याधानाय सामान्यतो नाम विषयां चतुर्भङ्गिकामाह—

एगट्ठा एगवंजण एगट्ठा नाणवंजणा चेव । नाणट्ठ एगवंजण नाणट्ठा वंजणानाणा ॥ १३० ॥

व्याख्या—इह नामानि जगति प्रवर्तमानानि कानिचिदुपलभ्यन्ते एकार्थानि एकव्यञ्जनानि, कानिचिदेकार्थानि नानाव्यञ्जनानि, कानिचिन्नानार्थानि एकव्यञ्जनानि, कानिचित्पुनर्नानार्थानि नानाव्यञ्जनानि ॥ अस्या एव चतुर्भङ्गिकाया क्रमेण लौकिकनिदर्शनानि गाथाद्वयेनोपदर्शयति—

दिठ खीर खीरं एगट्ठ एगवंजण लोए । एगट्ठं बहुनाम दुद्ध पओ पीलु खीर च ॥ १३१ ॥

गोमहिसिअयाखीर नाणट्ठं एगवजणं नेय । घडपडकडसगडरहा होइ पिहत्थ पिहनामं ॥ १३२ ॥

व्याख्या—इह सर्वत्रापि प्राकृतत्वादेकवचनं, ततोऽयमर्थः—एकार्थानि एकव्यञ्जनानि नामानि लोके प्रवर्तमानानि दृष्टानि, यथा क्षीरं क्षीरमिति, इयमत्र भावना—एकत्र कस्मिंश्चिद् गोदुग्धादिविषये क्षीरमिति नाम प्रवर्तमानमुपलभ्य, तथाऽन्यत्रापि गोदुग्धादावेव विषये

क्षीरमिति नाम प्रवर्त्तमानमुपलभ्यते, एवं ततोऽप्यन्यत्र गृहान्तरे, ततोऽमूनि सर्वाण्यपि क्षीरं क्षीरमित्येवंरूपाणि नामानि एकार्थानि एकव्यञ्जनानि, तथा एकार्थानि बहुव्यञ्जनरूपाणि नामानि यथा दुग्धं पयः पीलु क्षीरमिति, अमूनि हि नामानि सर्वाण्यपि विवक्षितगोदुग्धादिलक्षणैकार्थाभिधायितया नानापुरुषैरेककालं क्रमेणैकपुरुषेण वा प्रयुज्यमानानि एकार्थानि नानाव्यञ्जनानि च ततो द्वितीये भङ्गे निपतन्ति, नानार्थान्येकव्यञ्जनानि, यथा—गोमहिष्यजासम्बन्धिषु क्षीरं क्षीरमिति नामानि प्रवर्त्तमानानि, एतानि हि नामानि सर्वाण्यपि समानव्यञ्जनानि भिन्नाभिन्नगोदुग्धमहिषीदुग्धादिरूपार्थवाचकतया भिन्नार्थानि च तत उच्यन्ते—नानार्थान्येकव्यञ्जनानि, नानार्थानि नानाव्यञ्जनानि यथा घटपटशकटरथादीनि नामानि ॥ तदेवमुक्तानि चतुर्भङ्गिकाया निदर्शनानि, साम्प्रतमिमामेव चतुर्भङ्गिकामाधाकर्म्मणि यथासम्भवं गाथाद्वयेन योजयति—

आहाकम्माईण होइ दुरुत्ताइ पढमभंगो उ । आहाहेकम्मति य बिइओ सक्किंद इव भंगो ॥ १३३ ॥

आहाकम्मंतरिया असणाई उ चउरो तइयभंगो । आहाकम्म पकुव्वा नियमा सुद्धो चरिमभंगो ॥ १३४ ॥

व्याख्या—आधाकर्म्मादीनां नाम्नां युगपत्क्रमेण पुरुषैरेकेन वा कालभेदेनैकस्मिन्नेव अशनादिरूपे वस्तुनि यद् 'द्विरुक्तादि' द्विरुच्चारणादि, आदिशब्दात् त्रिरुच्चारणादिपरिग्रहः, स भवति प्रथमो भङ्गः, किमुक्तं भवति ?—एकत्र वसतावशनविषये केनाप्याधाकर्म्मेति नाम प्रयुक्तं, तथाऽन्यत्रापि वसत्यन्तरेऽशनविषये एवाधाकर्म्मेति नाम प्रयुज्यते, तथा ततोऽन्यत्रापि वसत्यन्तरे, तान्यमूनि सर्वाण्यप्याधाकर्म्मेति नामानि एकार्थानि एकव्यञ्जनानि इति प्रथमे भङ्गेऽवतरन्ति, आधाकर्म्म अधःकर्म्मेत्यादीनि तु नामानि विवक्षिताशनादिरूपैकविषये प्रवर्त्तमानानि द्वितीयो भङ्गः, एकार्थानि नानाव्यञ्जनानीत्येवंरूपद्वितीयभङ्गविषयाणि 'सक्किंद इवे'ति यथा इन्द्रः शक्र

इत्येवमादीनि नामानि, तथा 'अशनादयः' अशनपानखादिमस्वादिमरूपाः चत्वार 'आधाकर्म्मान्तरिता' आधाकर्मशब्देन व्यवहिता यथाऽशनमाधाकर्म्म पानमाधाकर्मेत्येवमादि, 'तृतीयभङ्गः' तृतीयभङ्गविषयाः, अत्राप्ययं भावार्थः—यदाऽशनादयः प्रत्येकमाधाकर्म्म आधाकर्म्मेति देशभेदेन बहुभिः पुरुषैरेककालमेकेन वा पुरुषेण कालभेदेनोच्यन्ते तदा तानि आधाकर्म्म आधाकर्म्मेति नामानि नानार्थान्येकव्यञ्जनानीति तृतीये भङ्गेऽवतरन्ति, आधाकर्म्मरूपं नामाधिकृत्य पुनश्चरमो भङ्गो नानार्थानि नानाव्यञ्जनानीत्येवरूपो नियमाच्छून्य आधाकर्म्म आधाकर्मेत्येवमादिनाम्नां सर्वेषामपि समानव्यञ्जनत्वात्, उपलक्षणमेतत्, तेन सर्वाण्यपि नामानि प्रत्येकं चरमभङ्गे न वर्तन्ते, यदा तु कोऽप्यशनविषये आधाकर्म्मेति नाम प्रयुङ्क्ते पानविषये त्वधःकर्म्मेति स्वादिमविषये त्वात्मघ्नमिति खादिमविषये त्वात्मकर्म्मेति तदाऽमूनि नामानि नानार्थानि नानाव्यञ्जनानि चेति चरमोऽपि भङ्गः प्राप्यते, इह विवक्षिताशनादिरूपैकविषये प्रवर्त्तमानानि आधाकर्म्माधःकर्म्मप्रभृतीनि नामानि द्वितीयभङ्ग उक्तस्ततस्तमेव भावयति—

इंदत्थं जह सद्दा पुरंदराई उ नाइवत्तंते । अहकम्म आयहम्मा तह आह नाइवत्तंते ॥ १२५ ॥

व्याख्या—यथा 'इन्द्रार्थम्' इन्द्रशब्दवाच्यं देवराजरूपं 'पुरन्दरादयः' पुरन्दरशक्र इत्येवमादयः शब्दा नातिवर्त्तन्ते—नातिक्रामन्ति, तथा अधःकर्म्मात्मघ्नशब्दौ उपलक्षणमेतत् आत्मकर्मशब्दश्च 'आह'न्ति सूचनात्सूत्रमिति न्यायादाधाकर्म्मार्थं—आधाकर्मशब्दवाच्यं नातिवर्त्तन्ते, यतैव येन दोषेण दुष्टमाधाकर्म्मेत्यभिधानमाप्नोति तदेव तेनैव दोषेण दुष्टमधःकर्म्मादयोऽपि शब्दा ब्रुवते इति भावः । एतदेव भावयति—

आहाकम्मेण अहेकरेति जं हणइ पाण भूयाइं । जं स आययमाणो परकम्मं अत्तणो कुणइ ॥ १२६ ॥

व्याख्या—आधाकर्मणा भुज्यमानेन कृत्वा यस्मादधःशुभेभ्यो विशुद्धतरेभ्यः संयमादिस्थानेभ्योऽधोऽधोऽवसारयति तेन कारणेन तदेवाधाकर्म अधःकर्मेत्युच्यते, तथा यस्मादाधाकर्मणा भुज्यमानेन कृत्वा स एव भोक्ता परमार्थेन 'प्राणान्' द्वीन्द्रियादीन् 'भूतान्' वनस्पतिविशेषान् उपलक्षणमेतत् जीवान् सत्त्वांश्च हन्ति—विनाशयति, 'जस्सट्ठा आरंभो पाणिवहो होइ तस्स नियमेण' इति वचनप्रामाण्यात्, प्राणादींश्च घ्नन् नियमतः नरकादिरूपमात्मानं हन्ति, 'पाणिवहे वयभंगो' इत्यादिवचनात्, अत आधाकर्म आत्मघ्नमित्युच्यते, तथा 'यत्' यस्मात्कारणात् 'तत्' आधाकर्म आददानः परस्य—पाचकादेः सम्बन्धि यत्कर्म—आरम्भजनितं ज्ञानावरणीयादिकमुत्पन्नमासीत् तदात्मनोऽपि करोति, ततस्तदाधाकर्म आत्मकर्मेत्युच्यते, तस्मादधःकर्मादीनि नामानि सर्वाण्यपि नाधाकर्म शब्दार्थमतिवर्तन्ते इति द्वितीये भङ्गेऽवतरन्ति । तदेवं मूलद्वारगाथायां 'एगट्ठा' इत्यपि व्याख्यातं, सम्प्रति 'कस्स वावि' इत्यवयवं व्याचिख्यासुराह—

कस्सत्ति पुच्छियंमी नियमा साहम्मियस्स तं होइ । साहम्मियस्स तम्हा कायव्व परूवणा विहिणा ॥ १२७ ॥

व्याख्या—'कस्य' पुरुषविशेषस्य अर्थाय कृतमाधाकर्म भवतीति परेण पृष्टे उत्तरमभिधीयते, नियमात्साधर्मिकस्यार्थाय कृतं 'तत्' आधाकर्म भवति, तस्मात्साधर्मिकस्यागमोक्तेन विधिना प्ररूपणा कर्तव्या ॥ प्रतिज्ञातमेव निर्वाहयति—

१ प्राणा द्वित्रिचतुः प्रोक्ताः, भूतास्तु तरवः स्मृताः । जीवाः पञ्चेन्द्रिया प्रोक्ताः, शेषाः सत्त्वा उदीरिताः ॥ १ ॥
२ यस्यार्थमारम्भः प्राणिवधः भवति तस्य नियमेन । ३ प्राणिवधात् व्रतभङ्गः ।

नामं ठवणा दविए खेत्ते काले अ पवयणे लिंगे । दंसण नाण चरित्ते अभिग्गहे भावणाओ य ॥ १३८ ॥

व्याख्या—'नामं 'ति नाम्नि साधर्मिकः, स्थापनासाधर्मिकः, 'द्रव्ये' द्रव्यविषयः साधर्मिकः, एवं क्षेत्रसाधर्मिकः, कालसाधर्मिकः, प्रवचनसाधर्मिकः, लिङ्गसाधर्मिकः, दर्शनसाधर्मिकः, ज्ञानसाधर्मिकः, चारित्रसाधर्मिकः, अभिग्रहसाधर्मिकः, 'भावणाओ य 'त्ति भावनातश्च साधर्मिको भवति, तदेवं द्वादशधा साधर्मिकः ॥ एनामेव गाथां गाथाद्वयेन व्याख्यानयति—

नाममि सरिसनामो ठवणाए कट्ठकम्ममाईया । दव्वमि जो उ भविओ साहमि सरीरग चेव ॥ १३९ ॥

खेत्ते समाणदेसी कालंमि समाणकालसंभूओ । पवयणि संघेगयरो लिंगे रयहरणमुहपोत्ती ॥ १४० ॥

दंसणे नाणे चरणे तिग पण पण तिविह होइ उ चरित्ते । दव्वाइओ अभिग्गह अह भावणमो अणिच्चाई ॥१४१॥

व्याख्या—'नाम्नि' नामविषयः साधर्मिकः सत्वनामा, किमुक्तं भवति ?—विवक्षितस्य साधोर्यन्नाम तदेव यदा इतरस्यापि तदानीं स इतरस्तस्य साधोर्नामसाधर्मिको भवति, यथा देवदत्तनाम्नः साधोर्देवदत्तनामा कश्चित्, तथा 'स्थापनायां' स्थापनाविषये साधर्मिकः 'काष्ठकर्मादिकः' दारुमयप्रतिमाप्रभृतिकः, इह स्नेहवशात् कश्चिद्भिन्नपुत्रादेः साधोर्जीवतो मृतस्य वा काष्ठमयीं प्रतिमां कारयति सा प्रतिमा अन्येषां जीवतां संयतानां स्थापनासाधर्मिकः, आदिशब्दात्पाषाणादिकप्रतिमापरिग्रहः, अनेन सद्भावस्थापनासाधर्मिक उक्तो, यदा त्वसद्भावे साधुस्थापना तदा सोऽसद्भावस्थापनासाधर्मिकः, तथा द्रव्ये भावप्रधानोऽयं निर्देशः 'द्रव्यत्वे' द्रव्यत्वविषयः साधर्मिको यो भव्यो योग्यः साधर्मिकत्वस्य, किमुक्तं भवति ?—यस्तेनैव शरीरसमुच्छ्रयेण भविष्यमाणेन साधोः साध

र्मिको भविष्यतीति स भव्य इत्यर्थः, तथा यस्य साधर्मिकशरीरं सिद्धिशिलातलादिगतमपगतजीवितं भव्यशरीररूपोऽतीतसाधर्मिकशरीररूपश्च द्रव्यसाधर्मिकः, 'खेत्ते' क्षेत्रविषयः साधर्मिकः, 'समानदेशी' समानदेशसम्भूतः, कालसाधर्मिकः समानकालसम्भूतः, प्रवचनसाधर्मिकः साध्वादिचतुर्विधरूपसङ्घमध्यादन्यतमः कश्चित्, लिङ्गसाधर्मिको रयहरणमुहपोती इति सूचनात् सूत्रमितिन्यायात् रजोहरणमुखपोतिकाद्युपकरणवान्, 'दर्शनसाधर्मिकः' समानदर्शनः, दर्शनं च त्रिधा, तद्यथा—क्षायिकं क्षायोपशमिकमौपशमिकं च, ततो दर्शनद्वारेण यः साधर्मिकः सोऽपि त्रिधा, तद्यथा—क्षायिकदर्शनसाधर्मिकः क्षायोपशमिकदर्शनसाधर्मिक औपशमिकदर्शनसाधर्मिकश्च, तत्र क्षायिकसम्यग्दृष्टेः क्षायिकसम्यग्दृष्टिः क्षायिकदर्शनसाधर्मिक इत्यादि, 'ज्ञानसाधर्मिकः' समानज्ञानः, ज्ञानं च पञ्चधा, तद्यथा—मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं च, ततो ज्ञानद्वारेण साधर्मिकोऽपि पञ्चधा, तद्यथा—मतिज्ञानसाधर्मिक इत्यादि, तत्र मतिज्ञानिनो मतिज्ञानी मतिज्ञानसाधर्मिक इत्यादि । चारित्रसाधर्मिकः समानचारित्रः, चारित्रमपि च पञ्चधा, तद्यथा—सामायिकं छेदोपस्थापनं परिहारविशुद्धिकं सूक्ष्मसम्परायं यथाख्यातं च, तच्चारित्रेण साधर्मिकोऽपि पञ्चधा, तद्यथा—सामायिकचारित्रसाधर्मिकश्छेदोपस्थापनिकचारित्रसाधर्मिक इत्यादि, तत्र सामायिकचारित्रस्य योऽपरः सामायिकचारित्रः स सामायिकचारित्रसाधर्मिक इत्यादि, 'तिविह होइ उ चरित्ते' मतान्तरेण पुनश्चारित्रे—चारित्रविषयः साधर्मिकस्त्रिविधो भवति, यतश्चारित्रं मतान्तरेण त्रिधाऽत्र विवक्षितं, तद्यथा—क्षायिकं क्षायोपशमिकमौपशमिकं च, तत्तद्द्वारेण यः साधर्मिकः सोऽपि त्रिधा, तद्यथा—क्षायिकचारित्रसाधर्मिक इत्यादि, तत्र क्षायिकचारित्रस्यापरः क्षायिकचारित्रः क्षायिकचारित्रसाधर्मिक इत्यादि, अभिग्रहा द्रव्यादौ—द्रव्यादिविषयाश्चतुर्विधास्तद्यथा—द्रव्याभिग्रहाः क्षेत्राभिग्रहाः कालाभिग्रहाः भावाभिग्रहाश्च तद्द्वारेण साधर्मिका अपि चतुर्विधास्तद्यथा—द्रव्याभिग्रहसाध

र्मिकाः सेनाभिग्रहसाधर्मिक इत्यादि, तत्र द्रव्याभिग्रहस्यापरो द्रव्याभिग्रहो द्रव्याभिग्रहसाधर्मिक इत्यादि, भावना द्वादशधा, तद्यथा— अनित्यत्वभावना ( १ ) अशरणत्वभावना ( २ ) एकत्वभावना ( ३ ) अन्यत्वभावना ( ४ ) अशुचित्वभावना ( ५ ) संसारभावना ( ६ ) कर्माश्रवभावना ( ७ ) संवरभावना ( ८ ) निर्जरणभावना ( ९ ) लोकविस्तारभावना ( १० ) जिनप्रणीतधर्मभावना ( ११ ) बोधिदुर्लभत्वभावना ( १२ ), भावनाद्वारेण साधर्मिका अपि द्वादशधा, तद्यथा—अनित्यत्वभावनासाधर्मिकोऽशरणत्वभावनासाधर्मिक इत्यादि, तत्रानित्यत्वभावनासहितस्यापरोऽनित्यत्वभावनासहितोऽनित्यत्वभावनासाधर्मिक इत्यादि, सर्वेऽपि व्यासपाताः सर्वेऽपि साधर्मिकाः । सम्प्रत्येतानेवाधिकृत्य कल्प्याकल्प्यविधिर्वक्तव्यः, तत्र नामसाधर्मिकमधिकृत्य प्रथमतः कल्प्याकल्प्यविधिं गाथाद्वयेन प्रतिपादयति—

जावंत देवदत्ता गिहीव अगिहीव तेसि दाहामि । नो कप्पई गिहीण दाहति विसेसिये कप्पे ॥ १४२ ॥

पासंडीसुवि एवं मीसामीसेसु होइ हु विभासा । समणेसु संजयाण उ विसरिसनामाणवि न कप्पे ॥ १४३ ॥

व्याख्या—इह कोऽपि पितरि मृते जीवति वा तन्नामानुरागतस्तन्नामयुक्तेभ्यो दानं दित्सुरेवं सङ्कल्पयति, यथा यावन्तो गृहस्था अगृहस्था वा देवदत्तास्तेभ्यो मया भक्तादिकमुपस्कृत्य दातव्यं, तदेवं सङ्कल्पे कृते देवदत्तस्यान्यस्य साधोर्न कल्पते, देवदत्तशब्देन तस्यापि सङ्कल्पविषयीकृतत्वात्, यदा पुनरेवं सङ्कल्पयति, यथा यावन्तो गृहस्था देवदत्तास्तेभ्यो दातव्यमिति, तदा एवं 'विशेषिते' निर्द्धारिते सति तयोपस्कृतं देवदत्तस्यान्यस्य साधोः कल्पते, तस्य विवक्षितसङ्कल्पविषयीकरणाभावात्, तथा पाषण्डिष्वपि मिश्रा-मिश्रेष्वेवं पूर्वोक्तप्रकारेण विभाषा कर्त्तव्या, इह सामान्यसङ्कल्पविषया मिश्रा कथ्यन्ते, यथा यावन्तः पाषण्डिनो देवदत्ता इति, मति-

निषतसङ्कल्पविषयास्त्वमिथा यथा यावन्तः सरजस्काः पाखण्डिनो यदि वा सौगता देवदत्ता इत्यादि, तत्र यावन्तो देवदत्ताः पाखण्डिन इति मिश्रसङ्कल्पे कृते न कल्पते पाखण्डिदेवदत्तशब्दाभ्यां देवदत्ताख्यस्यापि साधोः सङ्कल्पविषयीकृतत्वात्, यदा पुनरमिश्रः सङ्कल्पो यथा यावन्तः सरजस्काः पाखण्डिनो देवदत्ता यदि वा यावन्तः सौगता देवदत्ता यद्वा साधुव्यतिरेकेण सर्वेऽपि पाखण्डिनो देवदत्ता स्तेभ्यो दास्यामीति, तदा देवदत्ताख्यस्य साधोः कल्पते, तस्य सङ्कल्पविषयीकरणाभावात्, यथा च पाखण्डिषु मिश्रामिश्रेषु विभाषा कृता तथा श्रमणेष्वपि मिश्रामिश्रेषु कर्तव्या, श्रमणा हि शाक्यादयोऽपि भण्यन्ते, यतो वक्ष्यति—' निर्ग्रन्थसक्कतावसगेरुयआजीव पञ्चहा समणा '। ततो यदैवं मिश्रः सङ्कल्पो यावन्तः श्रमणा देवदत्ताख्यास्तेभ्यो दास्यामीति तदा देवदत्ताख्यस्य साधोर्न कल्पते, तस्य श्रमणदेवदत्तशब्दाभ्यां सङ्कल्पविषयीकृतत्वात्, यदा पुनरेवममिश्रः सङ्कल्पो यावन्त शाक्याः श्रमणा यदि वा आजीविका देवदत्ता यद्वा—साधुव्यतिरेकेण सर्वे श्रमणा देवदत्तास्तेभ्यो दास्यामीति तदा कल्पते, तस्य विवक्षितसङ्कल्पाविषयीकरणाभावात्, संयतानां तु निर्ग्रन्थानां विसरसनाम्नामपि सङ्कल्पे कृते देवदत्ताख्यादेः साधोर्न कल्पते, किमुक्तं भवति ?—चैत्रनाम्नोऽपि संयतस्योद्देशेन कृतं देवदत्ताख्यस्य साधोर्न कल्पते, तथा भगवदाज्ञाविभूषणत्, यदा पुनस्तीर्थकरमस्येकदुद्दसङ्कल्पनेन कृतं तदा कल्पते, तीर्थकरमस्येक-पुद्गानां सङ्घातीतत्वेन सङ्घमध्यवर्तिभिः साधुभिः सह साधर्मिकत्वाभावात्, ' संजयाण उ विसरिसनामाणवि न कप्पे ' इति वचना धार्यापरया यावन्तो देवदत्ता इत्यादौ विसदृशचैत्रादिनाम्नां साधूनां कल्पत एवेति प्रतिपादितं द्रष्टव्यं । तदेवमुक्तो नामसाधर्मिकमधिकृत्य कल्प्याकल्प्यविधिः, सम्प्रति स्थापनाद्रव्यसाधर्मिकावधिकृत्य तमाह—

नीसमनीसा व कडं ठवणासाहम्मियम्मि उ विभासा । दव्वे मयतणुभत्तं न तं तु कुच्छा विवज्जेज्जा ॥१४४॥

व्याख्या—इह कोऽपि गृही गृहीतव्रतस्य मृतस्य जीवतो वा पित्रादेः स्नेहवशात् प्रतिकृतिं कारयित्वा तत्पुरतो ढौकनाय बलिं निष्पादयति, तन्निष्पादनं च द्विधा, तद्यथा—निश्रया अनिश्रया च, तत्र ये रजोहरणादिवेषधारिणो मत्पितृतुल्यास्तेभ्यो दास्यामीति सङ्कल्प्य निष्पादयति तदा तन्निष्पादनं निश्राकृतमुच्यते, यदा त्वेवंविधः सङ्कल्पो न भवति, किन्त्वेवमेव ढौकनाय बलिं निष्पादयति तदा तन्निष्पादनमनिश्राकृतमुच्यते, तथा चाह—'नीसमनीसा य कडे' इह प्रथमा तृतीयार्थे वेदितव्या, ततोऽयमर्थः—निश्रयाऽनिश्रया वा कृतं—निष्पादितं भक्तादिस्थापनासाधर्मिकविषये तत्र विभाषा कर्तव्या, यदि निश्राकृतं तदपि च लौकिकमलौकिकं वा तर्हि न कल्पते, अनिश्राकृतं तु लौकिकमलौकिकं वा कल्पते, परं तथापि बहुदोषोपप्रसङ्ग इति पूर्वसूरयो निषेधमाचक्षते तथा 'द्रव्ये' द्रव्यसाधर्मिकविषये मृतकभक्तं—तत्कालं मृतस्य साधोर्यो तनुस्तस्याः पुरतो ढौकनाय यदशनादि तत्सुतादिना कृतं तन्मृतकभक्तं, तत्रापि द्विधा—निश्राकृतमनिश्राकृतं च, तत्र साधुभ्यो दास्यामीति सङ्कल्प्य कृतं निश्राकृतमितरत्तु स्वपित्रादिभक्तिमात्रकृतमनिश्राकृतं, तत्र यन्निश्राकृतं तन्निषेधयति—नैव कल्पते, इतरत्त्वनिश्राकृतं कल्पते, किन्तु तद्ग्रहणे लोके जुगुप्सा—निन्दा प्रवर्तते, यथा अहो! अमी भिक्षवो निःशूका मृतकभक्तमपि न परिहरन्तीति ततो विवर्जयन्ति तत्साधवः ॥ सम्प्रति शेषनामसाधर्मिकादिकल्प्योऽतिदेशेन कल्प्याकल्प्यविधिमाह—

पासंडियसमणाणं गिहिनिग्गंथाण चेव उ विभासा । जह नामंमि तहेव य खेत्ते काले य नायव्वं ॥१४५॥

व्याख्या—यथा 'नाम्नि' नामसाधर्मिकविषये पाषण्डिनां श्रमणानां 'गिहिति' सूचनात्सूत्रमितिं न्यायात् गृहस्थिनां निर्ग्र

१ अन्यत्र प्रसिद्धत्वादत्र कथनमविशेषम् ।

न्यानां च विभाषा कृता तथा क्षेत्रे काले च विभाषणं ज्ञातव्यं, तत्र 'क्षेत्रं' सौराष्ट्रादिकं 'कालो' दिनपौरुष्यादिकं, तत्र क्षेत्रविषये विभाषा एवं—यदि सौराष्ट्रदेशोत्पन्नेभ्यः पाषण्डिभ्यो मया दातव्यमिति सङ्कल्पः तदा सौराष्ट्रदेशोत्पन्नस्य साधोर्न कल्पते, सौराष्ट्रदेशोत्पन्नत्वेन तस्यापि सङ्कल्पविषयीकरणात्, शेषदेशोत्पन्नानां तु कल्पते, तेषां सङ्कल्पविषयीकरणाभावात्, यदि पुनः सौराष्ट्रदेशोत्पन्नेभ्यः पाषण्डिभ्यः सरजस्केभ्यो यदि वा सौगतेभ्यो यद्वा साधुव्यतिरेकेण सर्वपाषण्डिभ्यो दास्यामीति सङ्कल्पः तदा सौराष्ट्रदेशोत्पन्नस्यापि साधोः कल्पते, तस्य सङ्कल्पाक्रोडीकरणात्, एवं श्रमणेष्वपि सामान्यतः सङ्कल्पितेषु न कल्पते, साधुव्यतिरेकेण तु सङ्कल्पितेषु कल्पते, तथा गृहस्थेषु सामान्यतः सौराष्ट्रदेशोत्पन्नत्वेन सङ्कल्पितेषु न कल्पते, केवलेषु तु शेषेषु कल्पते, निर्ग्रन्थेषु तु सौराष्ट्रदेशोत्पन्नेष्वसौराष्ट्रदेशोत्पन्नेषु वा संकल्पितेषु सौराष्ट्रदेशोत्पन्नानामन्यदेशोत्पन्नानां वा सर्वथा न कल्पते, तदेवं क्षेत्रसाधर्मिके विभाषा भाविता, एवं कालसाधर्मिकेऽपि भावनीया, यथा विवक्षितदिनजातेभ्यः पाषण्डिभ्यो मया दातव्यमिति सङ्कल्पिते तस्यापि तद्दिनजातस्य साधोर्न कल्पते, तस्यापि तद्दिनजातत्वेन सङ्कल्पविषयीकरणात्, शेषदिनजातानां तु कल्पते, सङ्कल्पविषयीकरणाभावात्, इत्यादि सर्वं पूर्वोक्तानुसारेण भावनीयं, प्रवचनादिपदसप्तके पुनरेवं पूर्वाचार्यव्याख्या—प्रवचनलिङ्गदर्शनज्ञानचारित्राभिग्रहभावनारूपेषु सप्तसु पदेषु द्विकसंयोगभङ्गा एकविंशतिः, तद्यथा—प्रवचनस्य लिङ्गेन सहैकः, दर्शनेन सह द्वितीयो, ज्ञानेन सह तृतीयः, एवं यावद्भावनया सह षष्ठ इति षड् भङ्गाः, एवं लिङ्गस्य दर्शनादिभिः सह पञ्च, दर्शनस्य ज्ञानादिभिः सह चत्वारः, ज्ञानस्य चारित्रादिभिः सह त्रयः, चारित्रस्याभिग्रहभावनाभ्यां द्वौ, अभिग्रहस्य भावनया सहैक इत्येकविंशतिः, एतेषु चैकविंशतिसङ्ख्येषु भङ्गेषु प्रत्येकमेकैका चतुर्भङ्गिका, तद्यथा—प्रवचनतः साधर्मिको न लिङ्गतः, लिङ्गतः साधर्मिको न प्रवचनतः, प्रवचनतः साधर्मिको लिङ्गतश्च, न प्रवचनतो न लिङ्गतश्च, शेषेषु भङ्गेषु यथास्थानं चतुर्भङ्गिका दर्शयिष्यते ॥ तत्र प्रथमचतुर्भङ्गिकायां आद्यभङ्गद्वयोदाहरणमुपदर्शयति—

दस ससिहागा सावग पवयण साहम्मिया न लिंगेण । लिंगेण उ साहम्मी नो पवयण निह्नगा सव्वे ॥१४६॥

व्याख्या—प्रवचनतः साधर्मिका न लिङ्गेन अविरतसम्यग्दृष्टेरारभ्य यावद्दशमीं श्रावकप्रतिमां प्रतिपन्ना ये श्रावकास्तेऽत्र द्रष्टव्याः, कुत इत्याह—'दस ससिहागा' इत्यत्र 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति न्यायाद्धेतौ प्रथमा, ततोऽयमर्थः—यतस्ते दशमीं श्रावकप्रतिमां प्रतिपन्नाः 'सशिखाकाः' शिखासहिताः केशसहिता एवेत्यर्थः, ततस्ते प्रवचनत एव साधर्मिका भवन्ति न लिङ्गतो, ये त्वेकादशीं श्रावकप्रतिमां प्रतिपन्नास्ते निष्केशा इत्यादिना लिङ्गतोऽपि साधर्मिका भवन्तीति तद्विवर्जनम्, एतेषां चार्थाय यत्कृतं तत्साधूनां कल्पते, तथा लिङ्गतः साधर्मिका न प्रवचनतो निह्नवाः, तेषां प्रवचनबहिर्भूतत्वेन प्रवचनतः साधर्मिकत्वाभावात्, लिङ्गं तु तेषामपि रजोहरणादिकं विद्यते इति लिङ्गतः साधर्मिकाः, तेषामप्यर्थाय कृतं साधूनां कल्पते, निह्नवाश्च द्विधा—लोके निह्नवत्वेन ज्ञाता अज्ञाताश्च, तत्र ये ज्ञातास्ते इह ग्राह्याः, अज्ञातानां लोके साधुत्वेन व्यवहरणमात्रतः प्रवचनान्तर्वर्तित्वात्, इदानीं गाथाद्वयेन उदाहृते शेषमुत्तरं भङ्गद्वयं स्वयमेव श्रोतारोऽभ्यूहिष्यन्ते इति बुद्ध्या निर्युक्तिकृन्नोदाहृतवान्, अनेनैव च कारणेन शेषाणामपि चतुर्भङ्गिकाणामाद्यमेव भङ्गद्वयमुदाहरिष्यति नोत्तरं भङ्गद्वयं, वयं तु सुखावबोधायोदाहरिष्यामः, तत्रास्यामेव प्रथमचतुर्भङ्गिकायां प्रवचनतः साधर्मिका लिङ्गतश्चेति तृतीयभङ्गे उदाहरणं साधवः एकादशीं प्रतिमां प्रतिपन्ना श्रावका वा, तत्र साधूनामर्थाय कृतं न कल्पते श्रावकाणां त्वर्थाय कृतं कल्पते, न प्रवचनतः साधर्मिका नापि लिङ्गतस्तीर्थकरप्रत्येकबुद्धाः, तेषां प्रवचनलिङ्गातीतत्वात्, तेषामर्थाय कृतं कल्पते, द्वितीया चतुर्भङ्गिका प्रवचनतः साधर्मिका न दर्शनतो, दर्शनतः साधर्मिका न प्रवचनतः, प्रवचनतः साधर्मिका दर्शनतश्च, न प्रवचनतो न दर्शनतः, तत्राद्यभङ्गद्वयोदाहरणमाह—

विसरिसदंसणजुत्ता पवयणसाहम्मिया न दंसणओ । तित्थगरा पत्तेया नो पवयणदंससाहम्मी ॥ १४७ ॥

व्याख्या—प्रवचनतः साधर्मिका न दर्शनत, 'विसदृशदर्शनयुक्ताः' विभिन्नक्षायिकादिसम्यक्त्वयुक्ताः साधवः श्रावका वा, कथमुक्त भवति ?—एकेषां साधूनां श्रावकाणां वा क्षायोपशमिकं दर्शनमपरेषां त्वौपशमिकं क्षायिकं वा ते परस्परं प्रवचनतः साधर्मिका न दर्शनतः, तत्र साधूनामर्थाय कृतं साधूनां न कल्पते श्रावकाणां त्वर्थाय कृतं कल्पते तथा दर्शनतः साधर्मिका न प्रवचनतः, तीर्थकराः प्रत्येकबुद्धा वा समानदर्शना वेदितव्याः, तेषामर्थाय कृतं साधूनां कल्पते, प्रवचनतः साधर्मिका दर्शनतश्च, साधवः श्रावका वा समानदर्शनाः, अत्रापि साधूनामर्थाय कृतं न कल्पते श्रावकाणां त्वर्थाय कृतं कल्पते, न प्रवचनतो नापि दर्शनतस्तीर्थकरप्रत्येकबुद्धनिह्नवाः, तत्र तीर्थकराः प्रत्येकबुद्धाश्च विभिन्नदर्शना वेदितव्याः, निह्नवाश्च मिथ्यादृष्टयः प्रतीता एव, एतेषां च सर्वेषामर्थाय कृतं कल्पते । तृतीया चतुर्भङ्गिका प्रवचनतः साधर्मिका न ज्ञानतः, ज्ञानतः साधर्मिका न प्रवचनतः, प्रवचनतोऽपि साधर्मिका ज्ञानतश्च, न प्रवचनतो नापि ज्ञानतः, एवं चतुर्थ्यपि चतुर्भङ्गिका प्रवचनस्य चारित्रेण सह वेदितव्या, एतयोर्द्वयोरपि चतुर्भङ्गिकयोराद्यमाद्यं भङ्गद्वयमविशेषेणाहाहरति—

नाणचरित्ता एव नायव्वा होंति पवयणेण तु ।

व्याख्या—यथा प्रवचनेन सह दर्शनमुक्तम्, एवं ज्ञानचारित्रे अपि प्रवचनेन सह ज्ञातव्ये, तद्यथा—प्रवचनतः साधर्मिका न ज्ञानतः, विसदृशज्ञानसहिताः साधवः श्रावका वा, अत्रापि यदि साधवस्तर्हि न कल्पते, अथ श्रावकास्तर्हि कल्पते, ज्ञानतः साधर्मिका न प्रवच

नव, तीर्थकरा प्रत्येकबुद्धा वा समानज्ञाना, तेषामर्थाय कृतं कल्पते, प्रवचनत साधर्मिका ज्ञानतश्च, साधवः श्रावका वा समानज्ञाना, भ्रमापि साध्वर्थं कृतं न कल्पते, श्रावकाणां त्वर्थाय कृतं कल्पते, न प्रवचनतो नापि ज्ञानतस्तीर्थकरप्रत्येकबुद्धनिह्नवाः, तत्र तीर्थकराः प्रत्येकबुद्धाश्च विभिन्नज्ञाना वेदितव्याः, निह्नवास्तु मिथ्यादृष्टित्वादज्ञानिनः प्रतीता एव, एतेषां सर्वेषामप्यर्थाय कृतं कल्पते, तथा प्रवचनतः साधर्मिका न चारित्रत' साधवः श्रावकाश्च, तत्र साध्वो विसदृशचारित्रसहिता वेदितव्याः, श्रावकाणां त्वविरतसम्यग्दृष्टीनां सर्वथा विरत्यभावेन देशविरतानां तु देशचारित्रतया चारित्रतः साधर्मिकत्वाभावः प्रतीतः, साध्वर्थं चेत्कृतं न कल्पते श्रावकार्थं चेत्तर्हि कल्पते, चारित्रत साधर्मिका न प्रवचनतः, तीर्थकरप्रत्येकबुद्धाः समानचारित्राः, तेषामर्थाय कृतं कल्पते, प्रवचनतः साधर्मिकाश्चारित्रतश्च साधवः समानचारित्राः, तेषामर्थाय कृतं न कल्पते, न प्रवचनतो नापि चारित्रतस्तीर्थकरप्रत्येकबुद्धनिह्नवाः, तत्र तीर्थकरप्रत्येकबुद्धा विसदृशचारित्रा वेदितव्याः, निह्नवास्त्वचारित्रिण एव, एतेषां च सर्वेषामप्यर्थाय कृतं कल्पते ॥ पञ्चमी चतुर्भङ्गिका प्रवचनतः साधर्मिका नाभिग्रहतः, अभिग्रहतः साधर्मिका न प्रवचनतः, प्रवचनतोऽपि साधर्मिका अभिग्रहतश्च, न प्रवचनतोऽपि नाप्यभिग्रहतश्च, एवं चतुष्पपि चतुर्भङ्गिका प्रवचनस्य भावनया सा वेदितव्या, एतयोर्द्वयोरपि चतुर्भङ्गिकयोः प्रत्येकमाद्यं भङ्गद्वयमुदाहरति—

पवयणओ साहम्मी नाभिग्गह सावगा जइणो ॥ १४८ ॥

साहम्मऽभिग्गहेणं नोपवयण निण्ह तित्थ पत्तेया । एव पवयणमाइण एत्तो सेसाण वोच्छामि ॥ १४९ ॥

व्याख्या—प्रवचनतः साधर्मिका नाभिग्रहतः श्रावका यतयश्च विसदृशाभिग्रहसहिताः, तत्र श्रावकाणामर्थाय कृतं कल्पते न साधू

नाम्, अभिप्रायेण साधर्मिका न प्रवचनेन, निह्नवतीर्थकरप्रत्येकबुद्धाः, एतेषां चार्थाय कृतं कल्पते प्रवचनतः साधर्मिका अभिप्रायेण च साधवः श्रावकाश्च समानाभिप्रायाः, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां, न प्रवचनतो नाप्यभिप्रायतः, तीर्थकरप्रत्येकबुद्ध निह्नवा विसदृशाभिप्रायकलिता निरभिप्राया वा, तेषामर्थाय कृतं कल्पते, 'एव पवयणभावण 'त्ति एवं—पूर्वोक्तेन प्रकारेण प्रवचनभावनेति प्रवचनभावनाच्चतुर्भङ्गिका भावनीया, तद्यथा—प्रवचनतः साधर्मिका न भावनातः, साधवः श्रावका वा विसदृशभावनाकाः, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां, भावनातः साधर्मिका न प्रवचनतः, निह्नवतीर्थकरप्रत्येकबुद्धास्तेषामर्थाय कृतं कल्पते, प्रवचनतः साधर्मिका भावनातश्च, साधवः श्रावकाश्च समानभावनाकाः, तत्र श्रावकाणामर्थाय कृतं कल्पते न साधूनां, न प्रवचनतो नापि भावनातः तीर्थकरप्रत्येकबुद्धनिह्नवा विसदृशभावनाकाः, एतेषामर्थाय कृतं कल्पते, तदेवमुक्तानि प्रवचनाभिधानां षण्णां चतुर्भङ्गिकानामुदाहरणानि, 'एत्तो सेसाण वोच्छामि'त्ति इत ऊर्ध्वं शेषाणां चतुर्भङ्गिकाणामुदाहरणानि वक्ष्ये। प्रतिज्ञातमेवातिदेशेन निर्वाहयति—

लिंगाईहिंवि एव एक्केक्केण तु उवरिमा नेया। जेऽणन्ने उवरिल्ला ते मोत्तुं सेसए एव ॥ १५० ॥

व्याख्या—'लिङ्गाईहिंवि' इत्यत्र सप्तम्यर्थे तृतीया ततोऽयमर्थः—एवं—पूर्वोक्तेन प्रकारेण लिङ्गादिष्वपि—लिङ्गदर्शनप्रभृतिष्वपि पदेषु एकैकेन लिङ्गादिना पदेन 'उपरितनानि' दर्शनज्ञानप्रभृतीनि पदानि नयेत्, किमुक्तं भवति?—लिङ्गदर्शनप्रभृतिषु पदेषु दर्शन ज्ञानादिभिः पदैः सह याश्चतुर्भङ्गिकास्ता पूर्वोक्तानुसारेणोदाहरेत्, अतीवेदं सङ्क्षिप्ततरमुक्तम्, अतो न्यक्षेण विवक्षुरिदमाह—'जेऽणन्ने' इत्यादि, ये अनन्ये—उदाहरणापेक्षया अन्यादृशा न भवन्ति भङ्गा तान्मुक्त्वा शेषकान् भङ्गकान् एवं—वक्ष्यमाणप्रकारेण भावयेत्, इयमत्र भावना—इह लिङ्गदर्शनपदयोः चत्वारो भङ्गाः सोदाहरणा वक्ष्यन्ते—आद्या एष प्राय उदाहरणापेक्षया लिङ्गज्ञानलिङ्ग-

चरणयोरपि भङ्गाः, ततस्तान् मुक्त्वा लिङ्गदर्शनलिङ्गाभिग्रहादिसत्कान् भङ्गानुदाहरिष्यामीति, तत्र लिङ्गदर्शनयोरियं चतुर्भङ्गिका, लिङ्गतः साधर्मिका न दर्शनतः, दर्शनतः साधर्मिका न लिङ्गतः, लिङ्गतोऽपि साधर्मिका दर्शनतश्च, न लिङ्गतो नापि दर्शनत, तत्राद्य भङ्गत्रयमुदाहरति—

लिङ्गेण उ साहम्मी न दसणे वीसुदसि जइ निण्हा । पत्तेयबुद्ध तित्थकरा य बीयम्मि भगंमि ॥ १५१ ॥

व्याख्या—लिङ्गेन साधर्मिका 'न दसणे' इत्यत्र तृतीयार्थे सप्तमी न दर्शनेन, 'विष्वग्दर्शना' विभिन्नदर्शना यतयो निह्नवाश्च, उपलक्षणमेतत्, विभिन्नदर्शना एकादशप्रतिमाप्रतिपन्नाः श्रावकाश्च, तत्र निह्नवा मिथ्यादृष्टित्वाच्च दर्शनतः साधर्मिका, अत्र च निह्नवानां श्रावकाणां चार्थाय कृतं कल्पते न यतीनां, द्वितीये भङ्गे दर्शनतः साधर्मिका न लिङ्गत इत्येवंरूपे प्रत्येकबुद्धास्तीर्थकृत एकादशप्रतिमाप्रतिपन्नवर्जा श्रावकाश्च समानदर्शना ज्ञेयाः, तेषामर्थाय कृतं कल्पते, शेषं भङ्गद्वयं चयमुदाहरामः, लिङ्गतः साधर्मिका दर्शनतश्च समानदर्शना साधव एकादशीं प्रतिमां प्रतिपन्नाः श्रावकाश्च, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां, न लिङ्गतो नापि दर्शनतो विसदृशदर्शनाः प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमाप्रतिपन्नवर्जाः श्रावकाश्च, तेषामर्थाय कृतं कल्पते, लिङ्गज्ञानचतुर्भङ्गिका त्वेवं, लिङ्गत साधर्मिका न ज्ञानतः, ज्ञानतः साधर्मिका न लिङ्गत, लिङ्गतः साधर्मिका ज्ञानतश्च, न लिङ्गतो नापि ज्ञानतः, अस्याश्चतुर्भङ्गिकाया आद्यभङ्गद्वयोदाहरणानि प्रायो लिङ्गदर्शनचतुर्भङ्गिकाभङ्गद्वयसदृशानीति कृत्वा निर्युक्तिकृन्नोदाहरति, ततो वयमेवोदाहराम—लिङ्गत साधर्मिका न ज्ञानतः, विभिन्नज्ञाना यत्य एकादशीं प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च, अत्रापि श्रावकाणां निह्नवानां चार्थाय कृतं कल्पते न यतीनां, ज्ञानतः साधर्मिका न लिङ्गतः समानज्ञानास्तीर्थकरप्रत्येकबुद्धा एकादशप्रतिमावर्जाः श्रावकाश्च, तेषामर्थाय कृतं कल्पते, लिङ्गतः

साधर्मिका ज्ञानतश्च समानज्ञाना' साधव एकादशीं प्रतिमां प्रतिपन्नाः श्रावकाश्च, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न यतीनां, न लिङ्गतो नापि ज्ञानतो, विभिन्नज्ञानाः प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमाप्रतिपन्नवर्जाः श्रावकाश्च, एतेषामर्थाय कृतं कल्पते, लिङ्गचरणयो रियं चतुर्भङ्गिका, लिङ्गतः साधर्मिका न चरणतः, चरणतः साधर्मिका न लिङ्गतो, लिङ्गतः साधर्मिकाश्चरणतश्च, न लिङ्गतो नापि चरणतः, अस्या अपि चतुर्भङ्गिकाया उदाहरणानि प्रायः पूर्वसदृशानीतिकृत्वा निर्युक्तिकृन्नोदाहृतवान् ततोऽहमेवोदाहरामि, लिङ्गतः साधर्मिका न चरणतो विभिन्नचारित्रा यतयः, एकादशीं प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च, अत्र श्रावकाणां निह्नवानां चार्थाय कृतं कल्पते न यतीनां, चरणतः साधर्मिका न लिङ्गतः, प्रत्येकबुद्धास्तीर्थकृतश्च समानचारित्रा, तेषामर्थाय कृतं साधूनां कल्पते, लिङ्गतः साधर्मिकाश्चरणतश्च समानचारित्रा यतयः, तेषामर्थाय कृतं न कल्पते, न लिङ्गतो नापि चरणतो विसदृशचरणाः प्रत्येकबुद्धतीर्थकरा एकादशप्रतिमावर्जाः श्रावकाश्च, तेषामर्थाय कृतं कल्पते ॥ लिङ्गाभिग्रहयोश्चतुर्भङ्गिका इयं—लिङ्गतः साधर्मिका नाभिग्रहतः, अभिग्रहतः साधर्मिका न लिङ्गतो, लिङ्गतः साधर्मिका अभिग्रहतश्च, न लिङ्गतो नाप्यभिग्रहतः, तत्राद्यं भङ्गत्रयमुदाहरति—

लिंगेण उ नाभिग्गह अणभिग्गह धीसुऽभिग्गाही चेव । जइ सावग बीयभंगे पत्तेयबुद्धा य तित्थयरा ॥ १५२ ॥

व्याख्या—लिङ्गेन साधर्मिका नाभिग्रहतोऽनभिग्रहा, यद्वा 'विष्वगभिग्रहिणो' विभिन्नाभिग्रहकलिता यतय एकादशीं प्रतिमां प्रतिपन्नाः श्रावकाश्च वेदितव्या', उपलक्षणमेतन्निह्नवाश्च, अत्रापि निह्नवानां श्रावकाणां चार्थाय कृतं कल्पते न यतीनाम् १, अभिग्रहत' साधर्मिका न लिङ्गत इत्येवंरूपे द्वितीये भङ्गे प्रत्येकबुद्धास्तीर्थकराश्चशब्दादेकादशप्रतिमावर्जाः श्रावकाश्च समानाभिग्रहा द्रष्टव्याः, एतेषामर्थाय कृतं कल्पते २, लिङ्गत' साधर्मिका अभिग्रहतश्च समानाभिग्रहा साधव एकादशीं प्रतिमां प्रतिपन्ना श्रावका निह्नवाश्च, अत्रापि

श्रावकनिह्नवानामर्थाय कृत कल्पते न यतीनां ३, न लिङ्गतो नाप्यभिग्रहतश्च विसदृशाभिग्रहास्तीर्थकरमत्येकबुद्धैकादशमतिमाप्रतिपन्नश्रावकस्य, एतेषामर्थाय कृत कल्पते ॥ लिङ्गभावनयोरपि चतुर्भङ्गिका—लिङ्गतः साधर्मिका न भावनातः भावनात साधर्मिका न लिङ्गतो लिङ्गत साधर्मिका भावनातश्च न लिङ्गतो नापि भावनातः, तत्रास्या उदाहरणान्यतिदेशेनाह—

एव लिङ्गेण भावण ।

व्याख्या—यथा लिङ्गे अभिग्रहेण सहोक्तमुदाहरणमेव भावनयाऽप्युदाहर्तव्यं । तद्यथा—लिङ्गत साधर्मिका न भावनातः, भावनार हिता निष्कृष्टभावना वा यस्य एकादशीं प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च, तत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनामर्थाय १, भावनात साधर्मिका न लिङ्गतः, प्रत्येकबुद्धास्तीर्थकृत एकादशीं प्रतिमां प्रतिपन्ना श्रावकाश्च समानभावनाकाः, एतेषामर्थाय कृतं कल्पते २, लिङ्गत साधर्मिका भावनातश्च समानभावनाकाः साधव एकादशीं प्रतिमां प्रतिपन्नाः श्रावका निह्नवाश्च, अत्रापि श्रावकनिह्नवानामर्थाय कृत कल्पते न यतीनां ३, न लिङ्गतो नापि भावनातो विसदृशभावनाकास्तीर्थकरप्रत्येकबुद्धैकादशप्रतिमावर्जश्रावकाः, एतेषामर्थाय कृतं कल्पते ॥ तदेवं लिङ्गविषया चतुर्भङ्गिका उक्ता, सम्प्रति दर्शनस्य ज्ञानादिभिः सह वक्तव्या, तत्र दर्शनज्ञानयोरपि चतुर्भङ्गिका—दर्शनत साधर्मिका न ज्ञानत, ज्ञानतः साधर्मिका न दर्शनतः दर्शनतोऽपि साधर्मिका ज्ञानतश्च न दर्शनतो नापि ज्ञानतः, तत्राद्य भङ्गद्वयमुदाहरति—

दंसणनाणे य पढम भंगो उ । जह सावग वीसुनाणी एवं चिय विइयभंगोऽवि ॥ १५१ ॥

व्याख्या—'दर्शनज्ञाने' दर्शनज्ञानविषयायां 'च' समुच्चये, प्रथमो भङ्गो दर्शनतः साधर्मिका न ज्ञानत इत्येवरूपः 'विष्वग् ज्ञानिनः' विभिन्नज्ञानाः समानदर्शना यतयः श्रावकाश्च वेदितव्याः, तत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनामर्थाय कृतम्। एवमेव ज्ञानत' साधर्मिका न दर्शनत इत्येवंरूपो द्वितीयो भङ्गोऽपि ज्ञातव्य', तत्रापि यतयः श्रावकाश्च वेदितव्या इत्यर्थ, केवलं विभिन्नदर्शनाः समानज्ञाना', अत्रापि कल्प्याकल्प्यविधिः प्राग्वत्, ज्ञानतः साधर्मिका दर्शनतश्च समानज्ञानाः समानदर्शना यतय' श्रावकाश्च, अत्रापि कल्प्याकल्प्यविधिः प्राग्वत्, न ज्ञानतो नापि दर्शनतो विसदृशज्ञानदर्शनाः साधवः श्रावका निह्नवाश्च, अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनां ॥ दर्शनचरणयोश्चतुर्भङ्गिका त्वियं–दर्शनतः साधर्मिका न चरणत चरणत साधर्मिका न दर्शनत दर्शनतोऽपि साधर्मिकाश्चरणतश्च न दर्शनतो नापि चरणत, तत्राद्यं भङ्गद्वयमुपदर्शयति—

दसणचरणे पढमो सावग जइणो य बीयभंगो उ। जइणो विसरिसदंसी दसे य अभिग्गहे वोच्छं ॥ १५४ ॥

व्याख्या—'दर्शनचरणे' दर्शनचरणचतुर्भङ्गिकायां प्रथमो भङ्गो दर्शनत साधर्मिका न चरणत इत्येवंरूपः समानदर्शना श्रावका विसदृशचरणा यतयश्च, अत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनामर्थाय कृतं १, द्वितीयो भङ्गः पुनश्चरणत साधर्मिका न दर्शनत इत्येवंरूपो विसदृशदर्शनाः समानचारित्रा यतय, एतेषामर्थाय कृतं न कल्पते २, दर्शनतः साधर्मिकाश्चरणतश्च समानदर्शनचरणा यतय, अत्रापि न कल्पते ३, न दर्शनतो नापि चरणतो निह्नवा विसदृशदर्शना श्रावका विसदृशदर्शनचरणा यतयश्च, तत्र निह्नवश्रावकाणामर्थाय कृतं कल्पते न यतीना, दर्शनाभिग्रहयोरियं चतुर्भङ्गिका–दर्शनतः साधर्मिका नाभिग्रहतः, अभिग्रहत साधर्मिका न दर्शनत',

दर्शनत साधर्मिका अभिग्रहतश्च, न दर्शनतो नाप्यभिग्रहत, तत्राद्य भङ्गद्वयमुदाजिहीर्षुरिदमाह–' दंसग ' इत्यादि, दर्शनेऽभिग्रहे चाद्यम भङ्गद्वयमधिकृत्योदाहरणं वक्ष्ये । प्रतिज्ञातमेव निर्वाहयति—

सावग जइ वीसऽभिग्गह पढमो बीओ य

व्याख्या—समानदर्शनाः ' विष्वगभिग्रहाः ' विभिन्नाभिग्रहाः श्रावका यतयश्च दर्शनत साधर्मिका नाभिग्रहत एवरूपः प्रथमो भङ्गः, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न यतीनां, द्वितीयोऽपि भङ्गोऽभिग्रहत साधर्मिका न दर्शनत इत्येवलक्षण श्रावकस्वरूप एव, केवलं ते यतयः श्रावकाश्च विसदृशदर्शनाः समानाभिग्रहा वेदितव्याः, उपलक्षणमेतत, तेन निह्नवाश्च समानाभिग्रहाः ज्ञातव्या', अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनां, दर्शनतः साधर्मिका अभिग्रहतश्च समानदर्शनाभिग्रहाः साधुश्रावकाः, अत्रापि श्रावकाणामर्थाय कृतं कल्पते न साधूनां, न दर्शनतो नाप्यभिग्रहतो विसदृशदर्शनाभिग्रहा' साधुश्रावकनिह्नवा , अत्र कल्प्याकल्प्य विधिर्द्वितीयभङ्गवत् । दर्शनभावनयोरपि चतुर्भङ्गिका–दर्शनत साधर्मिका न भावनातो, भावनातः साधर्मिका न दर्शनत , दर्शनतोऽपि साधर्मिका भावनातश्च, न दर्शनतो नापि भावनातः । अस्या आद्यभङ्गद्वयोदाहरणातिदेशार्थमाह—

भावणा चेव ।

व्याख्या—यथा दर्शनेन अभिग्रहे उदाहृत एवं भावनाऽप्युदाहर्तव्या, सा चैवं–दर्शनतः साधर्मिका न भावनातः, विसदृशभावनाकाः समानदर्शनाः श्रावका यतयः, भावनातः साधर्मिका न दर्शनतो विसदृशदर्शनसमानभावनकाः साधवः श्रावका निह्नवाश्च, दर्श

साधुश्रावका, न दर्शनतो नापि भावनातो विसदृशदर्शनभावनाकाः साधुश्रावक नतः साधर्मिका भावनातश्च समानदर्शनभावनाका साधुश्रावकाः, सम्प्रति ज्ञानस्य चारि निह्नवाः, अत्र चतुर्ष्वपि भङ्गेषु कल्प्याकल्प्यविधिः प्राग्वत् । एवं दर्शनविषया अपि चतस्रश्चतुर्भङ्गिका उक्ता, त्रिभिः सह वक्तव्याः, तथाचाह—

नाणेणऽवि नेज्जेवं

व्याख्या—यथा दर्शनेन सह चतस्रश्चतुर्भङ्गिका उक्ता एवं ज्ञानेनापि सह चारित्रादीनि पदान्यधिकृत्य तिस्रश्चतुर्भङ्गिका भावनीया । अथैतदेव सविस्तरमुक्तमतः स्पष्टं विध्रियते—ज्ञानचरणयोरियं चतुर्भङ्गिका, ज्ञानत. साधर्मिका न चरणत, चरणत साधर्मिका न ज्ञानतः, ज्ञानतोऽपि साधर्मिकाश्चरणतश्च, न ज्ञानतोऽपि नापि चरणत । तत्र ज्ञानत साधर्मिका न चरणत, समानज्ञाना श्रावका विसदृशचरणसमानज्ञाना यतयश्च, अत्र श्रावकाणामर्थाय कृतं कल्पते न यतीनां १, चरणतः साधर्मिका न ज्ञानतो विसदृशज्ञानाः समानचरणा यतय, अत्र न कल्पते २, ज्ञानतः साधर्मिकाश्चरणतश्च समानज्ञानचरणा यतयः, अत्रापि न कल्पते ३, न ज्ञानतो नापि चरणतो विसदृशज्ञानचरणा यतयो विसदृशज्ञानाः श्रावका निह्नवाश्च, अत्र श्रावकनिह्नवानामर्थाय कृतं कल्पते न यतीनां ४, ज्ञानाभिग्रहयोरियं चतुर्भङ्गिका—ज्ञानतः साधर्मिका नाभिग्रहतः, अभिग्रहतः साधर्मिका न ज्ञानतः, ज्ञानतोऽपि साधर्मिका अभिग्रहतश्च, न ज्ञानतो नाप्यभिग्रहतः । तत्र ज्ञानतः साधर्मिका नाभिग्रहत समानज्ञाना विसदृशाभिग्रहाः साधुश्रावकाः, अत्र श्रावकाणामर्थाय कृत कल्पते न साधूनाम् १, अभिग्रहतः साधर्मिका न ज्ञानतो विसदृशज्ञाना समानाभिग्रहाः साधुश्रावका समानाभिग्रहा निह्नवाश्च, अत्रापि श्रावकनिह्नवानामर्थाय कृत कल्पते न साधूनां २, ज्ञानतः साधर्मिका अभिग्रहतश्च समानज्ञानाभिग्रहाः साधुश्रावकाः, अत्र कल्प्याकल्प्यविधिः प्रथमभङ्ग इव ३,

न ज्ञानतो नाप्यभिग्रहतो विसदृशज्ञानाभिग्रहाः साधुश्रावका विसदृशाभिग्रहा निह्नवाश्च, अत्र द्वितीयभङ्गे इव कल्प्याकल्प्यभावना ४, ज्ञानभावनयोरियं चतुर्भङ्गिका—ज्ञानतः साधर्मिका न भावनातः, भावनातः साधर्मिका न ज्ञानतः, ज्ञानतोऽपि साधर्मिका भावनातश्च, न ज्ञानतो नापि भावनातः। तत्र ज्ञानतः साधर्मिका न भावनातः समानज्ञाना विसदृशभावनाकाः साधुश्रावकाः १, भावनातः साधर्मिका न ज्ञानतो विसदृशज्ञानाः समानभावनाका साधुश्रावकाः समानभावना निह्नवाश्च २, ज्ञानतः साधर्मिका भावनातश्च समान ज्ञानभावनाका साधुश्रावकाः ३, न ज्ञानतो नापि भावनातो विसदृशभावनाः साधुश्रावका विसदृशभावना निह्नवाश्च ४, अत्र चतुर्ष्वपि भङ्गेषु कल्प्याकल्प्यभावना भाविता। उक्तं ज्ञानविषया अपि तिस्रश्चतुर्भङ्गिका वक्ता, सम्प्रति चरणेन सह चतुर्भङ्गिकाद्वयं वक्तुकाम आह—

एत्तो चरणेण वोच्छामि ॥ १५५ ॥

व्याख्या—इत ऊर्ध्वं चरणेन सह ये द्वे चतुर्भङ्गिके तदुदाहरणानि वक्ष्ये तत्र चरणाभिग्रहयोरियं चतुर्भङ्गिका—चरणतः साधर्मिका नाभिग्रहतः, अभिग्रहत साधर्मिका न चरणतः, चरणतोऽपि साधर्मिका अभिग्रहतश्च, न चरणतो नाप्यभिग्रहतः। तत्राद्यं भङ्गद्वयमुदाजिहीर्षुराह—

जइणो वीसाभिग्गह पढमो बिय निण्हसावगजइणो उ (बीओ)।

व्याख्या—चरणतः साधर्मिका नाभिग्रहत इत्येवंरूपः प्रथमो भङ्गः, समानचरणा 'विष्वगभिग्रहाः' विभिन्नाभिग्रहा यतयः, अत्र न कल्पते, अभिग्रहतः साधर्मिका न चरणतः इत्येवंरूपो द्वितीयो भङ्गः समानाभिग्रहा निह्नवाः श्रावका विभिन्नचरणा यतयश्च, अत्र

श्रावकाणां निह्नवानां चार्थाय कृत कल्पते न यतीनां २, चरणतः साधर्मिका अभिग्रहतश्च समानचरणाभिग्रहा यतयः, अत्र न कल्पते ३, न चरणतो नाप्यभिग्रहतः विसदृशाभिग्रहचरणाः साधवो विसदृशाभिग्रहाः श्रावकनिह्नवाश्च, अत्र कल्प्याकल्प्यभावना द्वितीयभङ्ग इव ४, चरणभावनयोरियं चतुर्भङ्गिका—चरणतः साधर्मिका न भावनातः भावनातः साधर्मिका न चरणतः चरणतः साधर्मिका भावनातश्च न चरणतो नापि भावनातः, अस्या उदाहरणान्यतिदेशत आह—

एवं तु भावणासुऽवि

व्याख्या—यथा चरणेन सहाभिग्रहे उदाहृतम् एवं भावनास्वप्युदाहर्तव्यं, तथैव—चरणतः साधर्मिका न भावनातः समानचरण विभिन्नभावना यतय १, भावनातः साधर्मिका न चरणतः समानभावना निह्नवाः श्रावका विभिन्नचरणा यतयश्च २, चरणतः साधर्मिका भावनातश्च समानचरणभावना यतयः ३, न चरणतो नापि भावनातो विसदृशचरणभावनाः साधवो विसदृशभावनाः श्रावका निह्नवाश्च ४, अत्र चतुर्ष्वपि भङ्गेषु कल्प्याकल्प्यविधिः प्रागिव । तदेवं चरणविषयेऽपि द्वे चतुर्भङ्गिके उक्ते, सम्प्रत्यभिग्रहभावनयोश्चतुर्भङ्गिकां वक्तुकाम आह—

वोच्छं दोण्हंतिमाणित्तो ॥ १५६ ॥

व्याख्या—इत ऊर्ध्वं द्वयोरन्तिमयोः—अभिग्रहभावनालक्षणयोः पदयोश्चतुर्भङ्गिकामुदाहरणतो वक्ष्ये । तत्र तयोरियं चतुर्भङ्गिका—अभिग्रहतः साधर्मिका न भावनातः, भावनातः साधर्मिका नाभिग्रहतः, भावनातश्च साधर्मिका अभिग्रहतश्च, नाभिग्रहतो नापि भावनातः । तत्राद्यं भङ्गद्वयमुदाजिहीर्षुराह—

जइणो सावग निण्हव पढमे बिइए य हुंति भंगे य ।

व्याख्या—अभिग्रहतः साधर्मिका न भावनात इत्येवंरूपे प्रथमे भङ्गे भावनात' साधर्मिका नाभिग्रहत इत्येवंरूपे द्वितीये च भङ्गे यतयः श्रावका निह्नवाश्च भवन्ति, केवलं प्रथमभङ्गे समानाभिग्रहा विसदृशभावना वेदितव्याः, द्वितीये भङ्गे पुनः समानभावना विसदृशाभिग्रहाः, अभिग्रहतः साधर्मिका भावनातश्च समानभावनाभिग्रहाः साधुश्रावकनिह्नवाः, नाभिग्रहतो नापि भावनातो विसदृशभावनाभिग्रहा' साधुश्रावकनिह्नवाः । अत्र चतुर्ष्वपि भङ्गेषु श्रावकनिह्नवानामर्थाय कृतं कल्पते न साधूनामिति । तदेवमुक्ता एकविंशतिरपि चतुर्भङ्गिकाः, सम्प्रति सामान्यकेवलिनं तीर्थकरं चाधिकृत्य कल्प्याकल्प्यविधिं कथयति—

केवलनाणे तित्थकरस्स नो कप्पइ कय तु ॥ १५७ ॥

व्याख्या—'केवलज्ञाने' केवलज्ञानिनः सामान्यसाधो', उपलक्षणमेतत्, तेन तीर्थकरप्रत्येकबुद्धवर्जानां शेषसाधूनामित्यर्थः, तीर्थकरस्य, तीर्थकरग्रहणमुपलक्षणं तेन प्रत्येकबुद्धस्य चार्थाय कृतं यथाकर्म न कल्पते, तुशब्दस्यानुक्तार्थसमुच्चायकत्वात् कल्पते च, इयमत्र भावना—तीर्थकरप्रत्येकबुद्धवर्जशेषसाधूनामर्थाय कृतं न कल्पते, तीर्थकरप्रत्येकबुद्धानां त्वर्थाय कृतं कल्पते, तथाहि—तीर्थकरनिमित्तं सुरैः कृतेऽपि समवसरणे तत्र साधूनां देशनाश्रवणार्थमुपवेशनादि कल्पते, एवं भक्ताद्यपि, एवं प्रत्येकबुद्धस्यापि । सम्प्रति यानाश्रित्य पूर्वोक्ता भङ्गाः सम्भवन्ति स तान् प्रतिपादयति—

पत्तेयबुद्ध निण्हव उवासए केवलीवि आसज्ज । खइयाइए य भावे पडुच्च भंगे उ जोएज्जा ॥ १५८ ॥

व्याख्या—प्रत्येकबुद्धान् निह्नवान् 'उपासकान्' श्रावकान् 'केवलिन' ' तीर्थकरान् अभिग्रहाश्चोपसाधूनाश्रित्य तथा 'क्षायि-

कादीन् भावान्' क्षायिकक्षायोपशमिकौपशमिकानि 'दर्शनानि, चक्षुरादिविषयाणि ज्ञानानि चरणानि अभिग्रहान् भावनाश्च प्रतीत्य भद्गान् योजयेत्, ते च तथैव योजिता । तत्र प्रथमचतुर्भङ्गिकां प्रवचनलिङ्गविषयामधिकृत्य विशेषतः कल्प्याकल्प्यविधिमाह—

जत्थ उ तइओ भंगो तत्थ न कप्पं तु सेसए भयणा। तित्थकरकेवलिणो जहकप्पं नो य सेसाण ॥ १५९ ॥

व्याख्या—यत्र साधर्मिके तृतीयो भङ्गः प्रवचनतः साधर्मिका लिङ्गतश्चेत्येवंरूपस्तत्र न कल्पते, यतः प्रवचनतो लिङ्गतश्च साधर्मिकः प्रत्येकबुद्धतीर्थकरवर्जा यतय' ततस्तेषामर्थाय कृतं न कल्पते, तुशब्दोऽनुक्तसमुच्चयार्थः, स च श्रावकस्यैकादशीं प्रतिमां प्रतिपन्नस्य तृतीयभङ्गभाविनोऽप्यर्थाय कृतं कल्पते इति समुच्चिनोति, केचिदाहु'—एकादशीं प्रतिमां प्रतिपन्नः साधुकल्प इति तस्याप्यर्थाय कृतं न कल्पते, तदयुक्तं, मूलटीकायामस्यार्थस्यासम्भवत्वात्, मूलटीकायां हि लिङ्गाभिग्रहचतुर्भङ्गिकाविषये कल्प्याकल्प्यविधिरेवमुक्तः—" लिङ्गे नो अभिग्गहे नइ साहू न कप्पइ गिहत्थनिण्हवे कप्पइ "त्ति इह लिङ्गयुता मुण्डा एकादशीं प्रतिमां प्रतिपन्नाः श्रावका एव लभ्यन्ते, ततस्तेषामर्थाय कृतं कल्प्यमुक्तं, 'सेसए भयणा'त्ति शेषके भङ्गकत्रये 'भजना' विकल्पना क्वचित् कथञ्चित्कल्पते क्वचिन्न, भङ्गचतुष्टयमप्यधिकृत्य सामान्यत उदाहरति—'तित्थंकरे'त्यादि, यथेत्युदाहरणोपन्यासार्थः तीर्थकरकेवलिनोऽर्थाय कृतं कल्पते, इह तीर्थकर उत्पन्नकेवलज्ञान एव प्रायः सर्वत्रापि भूमण्डले प्रतीतो भवति, प्रतीतस्य च तीर्थकरस्यार्थाय कृतं कल्पते नाप्रतीतस्य ततः केवलिग्रहणं, यदा पुनश्छद्मस्थावस्थायामपि तीर्थकरत्वेन प्रतीतो भवति तदा तस्यामप्यवस्थायां तन्निमित्तं कृतं कल्पते, तीर्थकरग्रहणं च प्रत्येकबुद्धानामुपलक्षणं, तेन तेषामप्यर्थाय कृतं कल्पते, 'नो य सेसाणं'ति शेषसाधूनामर्थाय कृतं न कल्पते, इदं च सामान्यत उक्तं, ततोऽमुमेवार्थमुपजीव्य तृतीयवर्जे शेषे भङ्गत्रये भजना स्पष्टमुपदर्शयते—प्रवचनतः साधर्मिका न लिङ्गतः, एकादशप्रतिमाप्रतिपन्नवर्जाः शेषाः श्रावकास्ते

पामर्थाय कृतं कल्पते, ये तु चौरादिमुषितरजोहरणादिलिङ्गाः साधवस्तेषामर्थाय कृतं न कल्पते, द्रव्यलिङ्गापेक्षया साधर्मिकत्वाभावेऽपि भावतप्रवचनसाधर्मिकत्वात्, लिङ्गतः साधर्मिका न प्रवचनतो निह्नवा ते यदि लोके निह्नवत्वेन ख्यातास्ततस्तेषामर्थाय कृतं कल्पते, अन्यथा न, न प्रवचनतो न लिङ्गतः तीर्थकरप्रत्येकबुद्धास्तेषामर्थाय कृतं कल्पते, तदेवं प्रथमचतुर्भङ्गिकामधिकृत्य कल्प्याकल्प्यविधिरुक्तः, एतदनुसारेण च शेषास्वपि चतुर्भङ्गिकासु विशेषः, स च प्रागेव प्रत्येकं दर्शितः । सर्वत्राप्ययं तात्पर्यार्थोऽवधारणीयः—यदि तीर्थकराः प्रत्येकबुद्धा निह्नवाः श्रावका वा तर्हि तेषामर्थाय कृतं कल्पते साधूनामर्थाय कृतं न कल्पते । तदेवमुक्तः कल्प्याकल्प्यविधिः, तदुक्तौ च 'आहाकम्मियनामे'त्यादिमूलद्वारगाथायां 'कस्स वावी'ति व्याख्यातं, सम्प्रति 'किं वावी'ति व्याचिख्यासुराह—

किं त आहाकम्मति पुच्छिए तस्सरूवकहणत्थ । सम्भवदरिसणत्थ च तस्स असणाइय भणइ ॥ ११० ॥

व्याख्या—किं तदाधाकर्म्म इति शिष्येण पृष्टे 'तत्स्वरूपकथनार्थम्' आधाकर्म्मस्वरूपकथनार्थं 'तस्य' आधाकर्म्मणः सम्भवप्रदर्शनार्थं च 'अशनादिकम्' अशनपानखादिमस्वादिमं गुरुर्भणति, इयमत्र भावना—अशनादिस्वरूपमाधाकर्म्म—अशनादावेव चाधाकर्म्मणः सम्भवः, ततो गुरुः किमाधाकर्म्म इति पृष्टः सन्नशनादिकमेव वक्ति, तथा च शय्यम्भवसूरिराधाकर्म्म दर्शयन् पिण्डैषणाध्ययनेऽशनादिकमभिधत्ते, तद्यथा—"असणं पाणगं चेव, खाइमं साइमं तहा । जं जाणिज्ज सुणिज्जा वा, समणट्ठा पगडं इमं ॥ १ ॥ तं भवे भत्तपाणं तु, संजयाण अकप्पियं । देंतियं पडियाइक्खे, न मे कप्पइ तारिसं ॥ २ ॥" इति । सम्प्रत्यशनादिकमेव व्याचष्टे—

१ अशनं पानकमेव खाद्यं स्वाद्यं तथा । यज्जानीयाच्छृणुयाद्वा श्रमणार्थं प्रकृतमिदम् ॥ १ ॥

सालीमाई अवडे फलाइ सुंठाइ साइम होइ ।

व्याख्या—शाल्यादिकमशनम्, अवड इति वापिकूपतडागाद्युपलक्षणं, ततः कूपवापीतडागादौ यज्जलं तत्पानं, तथा 'फलादि' फलं—नालिकेरादि, आदिशब्दाद्विशिणिकपुष्पादिपरिग्रहस्तत् खादिमं, शुण्ठ्यादिकं स्वादिमं, तत्र शुण्ठी प्रतीता, आदिशब्दात् हरीतक्यादिपरिग्रहः । एवमेवं व्याख्याता पानकादीनि, सम्प्रत्येतेष्वेवाधाकर्मरूपेषु प्रत्येकं भङ्गचतुष्टयमाह—

तस्स कडनिट्ठियंमी सुद्धमसुद्धे य चत्तारि ॥ १९१ ॥

व्याख्या—तस्येति प्रस्तावात् साधोरर्थाय 'कृतमि'त्यत्र शुद्धाचादिकर्मविवक्षायां क्तप्रत्ययः, ततोऽयमर्थः—कर्तुं प्रारब्धं, तथा तस्य साधोरर्थाय 'निष्ठितं' सर्वथा प्रासुकीकृतमिति, अत्र विषये 'चत्वारि' इति चत्वारो भङ्गा भवन्ति, तत्र प्रथम एष एव भङ्गः—तस्य कृतं तस्य निष्ठितं, द्वितीयस्तस्य कृतमन्यस्य निष्ठितं, तृतीयोऽन्यस्य कृतं तस्य निष्ठितं, चतुर्थोऽन्यस्य कृतमन्यस्य निष्ठितं । तत्र प्रथमो व्याख्यातो द्वितीयादीनां तु भङ्गानामयमर्थः—पूर्वं तावत्तस्य साधोरर्थाय कर्तुमारब्धं ततो दातुः साधुविषयदानपरिणामाभावतोऽन्यस्य—आत्मनः स्वपुत्रादेर्वाऽर्थाय निष्ठां नीतं, तथा प्रथमतोऽन्यस्य—पुत्रादेरात्मनो वाऽर्थाय कर्तुमारब्धं ततः साधुविषयदानपरिणामभावतः साधोरर्थाय निष्ठां नीतं, तथा प्रथमत एवान्यस्य निमित्तं कर्तुमारब्धमन्यस्यैव च निमित्तं निष्ठां नीतम्, एवमशने पाने खादिमे स्वादिमे च प्रत्येकं चत्वार चत्वारो भङ्गा भवन्ति, तत्र 'सुद्धमसुद्धे य' इति आर्षत्वात् शुद्धावशुद्धौ चेति द्रष्टव्य, तत्र शुद्धौ—साधोरासेवनायोग्यौ, तौ च द्वितीयचतुर्थभङ्गौ, तथाहि—क्रियाया निष्ठा प्रधाना, ततो यद्यपि प्रथमतः साधुनिमित्त क्रिया प्रारब्धा तथापि निष्ठामन्यनिमित्तं नीतेति द्वितीयो भङ्गः साधोः कल्पते, चतुर्थस्तु भङ्गः शुद्ध एव, न तत्र विवादः, अशुद्धौ—अकल्पनीयौ, तौ च प्रथमतृतीयौ, तत्र प्रथम एकान्तेनाशुद्ध एव साध्वर्थं

मारभ्यताभिहितत्वाद्, तृतीये तु भङ्गे यद्यपि पूर्वं न साधुनिमित्तं पाकादिक्रियाऽऽरम्भस्तथापि सा साधुनिमित्तं निष्ठां नीता, निष्ठा च प्रधानेति न कल्पते। तदेवमाधाकर्म्मस्वरूपमुक्तं, साम्प्रतमशनादिरूपस्याधाकर्म्मणः सम्भवं प्रतिपिपादयिषुः कथानकं रूपकषट्केनाह—

कोद्दवरालगगामे वसही रमणिज्ज भिक्खसज्झाए। खेत्तपडिलेहसंजय सावयपुच्छुज्जुए कहणा ॥ १६२ ॥

जुज्जइ गणस्स खेत्त नवरि गुरूण तु नत्थि पाउग्गं। सालित्ति कए रुमण परिभायण नियय गेहेसु ॥ १६३ ॥

वोलिंता ते व अन्ने वा, अडता तत्थ गोयरं। सुणंति एसणाजुत्ता, बालादिजणसंकहा ॥ १६४ ॥

एए ते जेसिमो रद्धो, सालिकूरो घरे घरे। दिन्नो वा से सयं देमि, देहि वा विंति वा इमं ॥ १६५ ॥

थक्के थक्कावडियं, अभत्तए सालिभत्तयं जायं। मज्झ य पइस्स मरणं, दियरस्स य से मया भज्जा ॥ १६६ ॥

चाउलोदगंपि से देहि, सालीआयामकंजियं। किमेयंति कयं नाउं, वज्जंतऽन्ने वयंति वा ॥ १६७ ॥

व्याख्या—इह सङ्कुलो नाम ग्रामः, तत्र जिनदत्तनामा श्रावकः, तस्य भार्या जिनमतिः, तत्र च ग्रामे कोद्रवा रालकाश्च प्राचुर्येणोत्पद्यन्ते इति तेषामेव कूरं गृहे गृहे भिक्षार्थमटन्तः साधवो लभन्ते, वसतिरपि स्त्रीपशुपण्डकविवर्जिता सदमूलत्वादिगुणैरतिरमणीया कल्पनीया च प्राप्यते, स्वाध्यायोऽपि तत्र वसतामविघ्नमभिवर्द्धते, केवलं शाल्योदनो न प्राप्यते इति न केचनापि सूरयो भरेण तत्रावतिष्ठन्ते। अन्यदा च सङ्कुलग्रामसमीपे मन्त्रिलाभिधाने ग्रामे केचित्सूरयः समागमन्, तैश्च सङ्कुलग्रामे क्षेत्रप्रत्युपेक्षणाय साधवः प्रेष्यन्ते, साधवोऽपि समागत्य यथागमं जिनदत्तस्य पार्श्वे वसतिमयाचिषत, जिनदत्तेनापि च साधुदर्शनसमुच्छलितप्रमोदभरसमुत्थितरोमाञ्चकञ्चु

किगाश्रेण तेभ्यो वसतिः कल्पनीया उपाश्रयेऽपि, सार्धमत्र तत्र स्थिता', यथागमं भिक्षाग्रहणेन बहिर्भूमौ स्थण्डिलनिरीक्षणेन च सकलमपि ग्रामं प्रत्युपेक्षितवन्तः, जिनदत्तोऽपि च श्रावको वसतावागत्य यथाविधि साधून् वन्दित्वा सादरं साधुमपृच्छत्—भगवन्! कश्चित्पिद् युष्मभ्यं क्षेत्रं?, सूरयोऽत्र निजसमागमेनास्माकं प्रसादमाधास्यन्ति?, ततः स ज्येष्ठः साधुरवादीत्—वर्तमानयोगेन, ततो ज्ञातं जिनदत्तेन—यथा न कथंचिदमीभ्यः क्षेत्रमिति, चिन्तयति च—अन्येऽपि साधवोऽत्र समागच्छन्ति परं न केचित्प्रतितिष्ठन्ते, तन्न जानामि किमत्र कारणमिति, ततः कारणपरिज्ञानाय तेषां साधूनामन्यतमं कमपि साधुमृजुं ज्ञात्वा पप्रच्छ, स च यथावस्थितमुक्तवान्, यथाऽत्र सर्वेऽपि गुणा विद्यन्ते, गच्छस्यापि च योग्यमिदं क्षेत्रं, केवलमाचार्यस्य प्रायोग्यः शाल्योदनो न लभ्यते इति नावस्थीयते। तत एवं कारणं परिज्ञाय तेन जिनदत्तश्रावकेणापरस्माद्ग्रामात् शालीबीजमानीय निजक्षेत्रभूमिषु वापितं, ततः सम्पन्नो भूयान् शालिः, अन्यदा च यथाविहारक्रमं ते वाऽन्ये वा साधवः समायासिषुः, श्रावकश्च चिन्तयामास—यद्येतेभ्यो मया शाल्योदनो दातव्यो येन सूरीणामिदं योग्यं क्षेत्रमिति परिभाव्य साधवोऽमी सूरीनानयन्ति, तत्र यदि निजगृह एव दास्यामि ततोऽन्येषु गृहेषु कोद्रवकूरं लभमानानामेतेषामाधाकर्मशङ्कोत्पत्स्यते तस्मात्सर्वेष्वपि स्वजनगृहेषु शालिं प्रेषयामीति, तथैव च कृत, स्वजनांश्चोक्तवान् यथा स्वयमप्यमुं शालिं पक्त्वा भुञ्जत, साधुभ्योऽपि च दत्त, एष च वृत्तान्तः सर्वोऽपि बालादिभिरवजग्मे, साधवश्च भिक्षार्थमटन्तो यथाऽऽगमप्रेषणासमितिसमिता बालादीनामुक्तानि शृण्वन्ति, तत्र कोऽपि बालको वक्ति—एते ते साधवो येषामर्थाय गृहे शाल्योदनो निरपादि, अन्यो भाषते—साधुसम्बन्धी शाल्योदनो मह्यं जनन्या ददे, दासी वा कश्चिदेवं भाषते—द्रुतः परकीयः शाल्योदनः सम्प्रत्यात्मीयं किमपि दद्यामि, गृहनायकोऽपि कापि भूते—दत्त शाल्योदनं परकीयं सम्प्रत्यात्मीयं किमपि देहि, बालकोऽपि कापि कोऽप्यनभिज्ञो जननीं ब्रूते—मम साधुसम्बन्धिन

शाल्योदनं देहीति, अन्यस्त्वीषद्वृद्धि' सहर्षं भाषते–अहो! पश्यत यावत्कियदस्माकं सम्पन्नं, इह यद् अवसरेऽवसरानुरूपमाप तति तत् यथेप्सवद्वियमिस्युच्यते, ततः स एवमाह–येनामक्ते भक्ताभावेऽस्माकं शालिभक्तमुदपादि। अत्रैवार्थे स लौकिक दृष्टान्तमुदाहरति, सूरग्रामे यशोधराभिधाना काचिदाभीरी तस्या योगराजो नाम भर्ता, वत्सराजो नाम देवर', तस्य भार्या योधनी, अन्यदा च मरणपर्यवसानो जीवलोको मरणं चानियतहेतुकमनियतकालमिति योधनीयोगराजौ समकालं मरणमुपागतौ, ततो यशोधरा देवरं वत्सराजमयाचत—तव भार्याऽहं भवामीति, देवरोऽपि च ममापि भार्या न विद्यते इति विचिन्त्य प्रतिपन्नवान्, ततः सा चिन्तयामास–अहो! अवसरेऽवसरापतितमस्माकमजायत, यस्मिन्नेवावसरे मम पतिः पञ्चत्वमुपागमत् तस्मिन्नेवावसरे मम देवरस्यापि भार्या मृत्युमगच्छत्, ततोऽहं देवरेण भार्यात्वेन प्रतिपन्ना, अन्यथा न प्रतिपद्येत। तथा कापि बालको जननीमाचष्टे—मातः! शालिभक्तमोदकमपि साधुभ्यो देहि, अन्यस्त्वाह–शालिकाञ्जिकं, तत एवमादीनि बालादिमनजल्पितानि श्रुत्वा किमेतदिति पृच्छन्ति, पृष्टे च सति ये ऋजवस्ते यथावत्कथितवन्तो यथा युष्माकमर्थायेदं कृतमिति, ये तु मायाविनः श्रावकेण वा तथा प्रज्ञापितास्ते न कथयन्ति, केवलं परस्परं निरीक्षन्ते, तत एवं नूनमिदमाधाकर्म्मेति परिज्ञाय तानि सर्वाण्यपि गृहाणि परिहृत्यान्येषु भिक्षार्थमटन्ति स्म, ये च तत्र न निर्वहन्ति स्म ते तथानिर्वहन्तः प्रत्यासन्ने ग्रामे भिक्षार्थमगच्छन्, एवमन्यत्राप्याधाकर्म्म सम्भवति, तच्च बालादिजल्पितविशेषैरवगत्य कथानकोक्तसाधुभिरिव नियमतो निष्कलङ्कसंयमभिक्षुणा परिहर्त्तव्य, सूत्रं तु सकलमपि सुगमं, नवरं 'रुंपण'त्ति रोपणं 'परिभायण'त्ति सूत्रे परिभाजनं 'से' इति एतेभ्य 'अन्नं'ति अन्यं ग्रामम्। तदेवमुक्तोऽशनस्याधाकर्म्मणः सम्भव', सम्प्रति पानस्याह—

लोणागडोदए एवं, खाणितु महुरोदगं। ढक्किएणऽच्छते ताव, जाव साहुत्ति आगया ॥ १९८ ॥

व्याख्या—यथाऽशनस्याधाकर्म्मणः कथानकद्वयेन सम्भव उक्तस्तथा पानस्याप्याधाकर्म्मणो वेदितव्यः, कथानकमपि तथैव, केवलमयं विशेषः—क्वचिद्ग्रामे सर्वेऽपि कूपाः क्षारोदका आसीरन्, क्षारोदका नामापल्कोदका विज्ञेयाः, न त्वत्यन्तक्षारमलाः, तथा सति ग्रामस्याप्यनवस्थानानुपपत्तेः, ततस्तस्मिन् लवणामठे क्षेत्रे क्षेमप्रत्युपेक्षणाय साधवः समागच्छन्, परिभावयन्ति स्म च यथाऽऽग्रामं सकलमपि क्षेमं, ततस्तन्निवासिना श्रावकेण सादरमुपरुध्यमाना अपि साधवो नावतिष्ठन्ते, ततस्तन्मध्यवर्ती कोऽपि ऋजुकोऽनवस्थानकारणं पृष्टः, स च यथावस्थितं तस्मै कथयामास—यथा विद्यन्ते सर्वेऽप्यत्र गुणाः, केवलं क्षारं जलमिति नावतिष्ठन्ते, ततो गतेषु तेषु साधुषु स मधुरोदकं कूपं खानितवान्, तं खानयित्वा लोकप्रवृत्तिजनितपापभयात् फलकादिना स्थगितमुखं कृत्वा यावदास्ते तावत्ते वाऽन्ये वा साधवः समाययुः, समागतेषु च साधुषु मा मम गृहे केवले आधाकर्म्मिकशङ्का भूदिति भक्तिरं तन्मधुरमुदकं भाजितवान्, ततः पूर्वोक्तकथानकप्रकारेण साधवो भाजनादीनामुद्धापनाकर्ण्याधाकर्म्मेति च परिज्ञाय तं ग्रामं परिहृतवन्तः, एवमन्यथाप्याधाकर्म्मपानीयसम्भवो द्रष्टव्यः, तेऽपि च भाजनादुद्धापषिन्देः परिकल्प्य कथानकोक्तसाधव इव परिहरेयुरिति। सूत्रं सुगमम्। सम्प्रति खादिमस्वादिमयोराधाकर्म्मणोः सम्भवमाह—

कक्कडिय अम्बगा वा दाडिम दक्खा य वीयपूराई। खाइमऽहिगरणकरणंति साइम तिगडुगाईयं ॥ १६१ ॥

व्याख्या—'कर्कटिका' चिर्भटिका 'आम्रकाणि' चूतफलानि, दाडिमानि द्राक्षाश्च प्रतीताः, बीजपूरकादिकम्, आदिशब्दात् स्नपिस्यादिपरिग्रहः, एतानाश्रित्य खादिमविषये 'अधिकरणकरणं भवेत्' पापकरणं भवेत्, एतानि साधूनां शाल्नकादिकार्येषु प्रयुज्यन्ते इति तेषां वपनादि कुर्यादिति भावः। तथा 'त्रिकटुकादिकं' शुण्ठीपिप्पलीमरिचकादिकमाश्रित्य स्वादिमे अधिकरणकरणं भवेत्, साधू

नामौपधाय्यर्यममूनि कल्पन्ते इति तेषां रोपणादि कुर्यादिति भाव । सम्प्रति यदुक्तं प्राक् ' सरस काउनिट्ठियम्मी ' त्यादि, तत्र कृतनि ष्ठितशब्दयोरर्थमाह—

असणाइण चउण्हवि आम जं साहुगहणपाउग्ग । त निट्ठियं वियाणसु उवक्खड तू कड होइ ॥ १७० ॥

व्याख्या—अशनादीनां चतुर्णामपि मध्ये यत् ' आमम् ' अपरिणतं सत् साधुग्रहणप्रायोग्यं कृतं, प्रासुकीकृतमित्यर्थः, तं निष्ठितं विजानीत, उपस्कृतं तु अथापि सुद्धावारिकर्म्मविसायां क्रमरूपः ततोऽयमर्थः—उपस्कर्तुमारब्धमिति भावः, कृतं भवति ज्ञातव्यम् । एतदेव विशेषतो भावयति—

कंडिय तिगुणुक्कंडा उ निट्ठिया नेगदुगुणउक्कंडा । निट्ठियकडो उ कूरो आहाकम्मं दुगुणमाहु ॥ १७१ ॥

व्याख्या—इह ये तन्दुलाः प्रथमतः साध्वर्थमुप्ताः ततः क्रमेण करटयो जातास्तत कण्डिताः, कथंभूताः कण्डिताः ? इत्याह—' त्रिगुणोत्कण्डा ' त्रिगुणं—त्रीन् वारान् यावत् उत्—प्राबल्येन कण्डन—छटन येषां ते त्रिगुणोत्कण्डाः, त्रीन् वारान् कण्डिता इत्यर्थः, ते निष्ठिता उच्यन्ते, ये पुनर्वपनादारभ्य यावदेकगुणोत्कण्डा द्विगुणोत्कण्डा वा कृता पर्यन्ते ते कृताः, अथवा मा भूवन् साध्वर्थमुप्ता केवलं ये करटयः सन्तः साध्वर्थं त्रिगुणोत्कण्डकण्डितास्ते निष्ठिता उच्यन्ते, ये त्वेकगुणोत्कण्डं द्विगुणोत्कण्डं वा कण्डितास्ते कृताः, अत्र वृद्धसम्प्रदायः—इह यद्येक वारं द्वौ वा वारौ साध्वर्थं कण्डितास्तृतीयं तु वारमात्मनिमित्तं कण्डिता तदा ते साधूनां कल्पन्ते, यदि पुनरेकं द्वौ वा वारौ साध्वर्थं कण्डितास्तृतीयं वारं स्वनिमित्तमेव कण्डिता पश्चात्तु आत्मनिमित्तं ते केषांचिदादेशेनैकेनाप्यस्मै दत्तास्तेनाप्यकल्प्य

स्थापितेषं पानरसहस्रसङ्ख्ये स्थाने गताः, तत परं गताः कल्पन्ते नार्वाक्, अपरेषां त्वादेशेन नकल्पन्ते अपि, यदि पुनरेकं द्वौ वा वारौ साधुनिमित्तमात्मनिमित्तं वा कण्डितास्तृतीयं तु वारमात्मनिमित्तं राद्धाः पुनः साधूनां ते न कल्पन्ते, यदि पुनरेकं द्वौ वा वारौ साधुनिमित्तमात्मनिमित्तं वा कण्डितास्तृतीयं तु वारं साधुनिमित्तमेव, तैरेव च तण्डुलैः साधुनिमित्तं निष्पादितः कूरः स निष्ठितकृत उच्यते, निष्ठितैराधाकर्मतण्डुलैः कृतो-निष्पादितो राद्ध इत्यर्थः निष्ठितकृत , स साधूनां सर्वथा न कल्पते, कुतः ? इत्याह—'आधाकर्म्म' इत्यादि, आधाकर्म्म भवति द्विगुणमाहुस्तीर्थकरादयस्तं निष्ठितकृतं कूरं, तत्रैकमाधाकर्मनिष्ठिततण्डुलरूपं द्वितीयं तु पाकक्रियारूपं, तदेवमुक्तो निष्ठितकृतशब्दयोरर्थः, सम्प्रति चतुर्ष्वप्यशनादिषु कृतनिष्ठितता भाव्यते-तत्र वपनादारभ्य यावद्वारद्वयं कण्डनं तावत्कृतत्वं, तृतीयवारं तु कण्डनं निष्ठितत्वम्, एवमनन्तरमेवोक्ते पाने कूपादिकं साधुनिमित्तं खनितं, ततो जलमाकृष्टं, ततो यावत् प्रासुकीक्रियमाणं नाद्यापि सर्वथा प्रासुकीभवति तावत्कृतं, प्रासुकीभूतं च निष्ठितं, खादिमे कर्कटिकादयः साधुनिमित्तमुप्ताः क्रमेण निष्पन्ना यावद्दात्रादिना खण्डिताः, तानि च खण्डानि यावन्नाद्यापि प्रासुकीभवन्ति तावत्कृतत्वमवसेयं, प्रासुकीभूतानि च तानि निष्ठितानि । एवं स्वादिमेऽपि भावनीयं । सर्वथापि च द्वितीयचतुर्थभङ्गौ शुद्धौ, प्रथमतृतीयौ त्वशुद्धाविति । सम्प्रति खादिमस्वादिमाधिकृत्य मतान्तरं प्रतिचिक्षिप्सुराह—

छायंपि विवज्जंती केई फलहेउगाइवुत्तस्स । तं तु न जुज्जइ जम्हा फलंपि कप्पं बिइयभंगे ॥ १७२ ॥

व्याख्या—इह 'फलोत्पत्त्यादेः' फलहेतोः पुष्पहेतोरन्यस्माद्वा हेतोः साध्वर्थमुप्तस्य द्रुमस्य 'केचित्' अगीतार्थाश्छायामप्याधाकर्म्मिकवृक्षसम्बन्धिनीतिकृत्वा 'विवर्जयन्ति' परिहरन्ति, तत्तु छायाविवर्जनं न युज्यते, यस्मात्फलमपि यदर्थं स वृक्ष आरोपितस्तत्प्रायस्तन्मिकवृक्षसम्बन्धि द्वितीये भङ्गे तस्य छेदन्यायेन निष्ठितमिति विकल्पो यदि पानं सत् कल्पते, किंपुनश्छाया भवति ?—साध्वर्थमारोपितेऽपि

कदल्यादौ वृक्षे यदा फलं निष्पद्यमानं साधुसत्काया अपनीयासमसत्तासम्बन्धि करोति भोटयति च तदा तदपि कल्पते, किं पुनश्छाया ?, सा हि सर्वथा न साधुसत्तासम्बन्धिनी चिन्तिता, न हि साधुच्छायानिमित्तं स वृक्ष आरोपितस्तत्कथं न कल्पते ? ॥

परपच्चइया छाया न वि सा रुक्खोव्व वड्डिया कत्ता । नट्ठच्छाए उ दुमे कप्पइ एवं भणतस्स ॥ १७३ ॥

व्याख्या—सा छाया 'परप्रत्ययिका' सूर्यहेतुका, न वृक्षमात्रनिमित्ता, तस्मिन् सत्यपि सूर्याभावे अभावात्, तथाहि—छाया-नाम पार्श्वतः सर्वतोऽप्यपरिवेष्टितमविनियतदेशवर्ती श्यामपुद्गलात्मक आतपाभावः, इत्थंभूता च छाया सूर्यस्यैव अन्वयव्यतिरेका, चातु विषत्वेन द्रुमस्य, द्रुमस्तु केवलं तस्या निमित्तमात्रं, न चैतावता सा दुष्यति, छायापुद्गलानां द्रुमपुद्गलेभ्यो भिन्नत्वात्, न च 'वृक्ष इव' तरुरिव 'कर्त्री' वृक्षारोपकेण वृद्धिं नीता, तद्विषयव्यापारस्यैवाभावात्, ततो नाधाकर्म्मिकी छाया । किं च—यथाधाकर्म्मिकी छायेति न तस्यामवस्थानं कल्पते तत एव परस्य मतो यदा घनपटलैराच्छादितं गगनमण्डलं भवति तदा तस्मिन् द्रुमे नष्टच्छाये सति तस्याधः शीतभयादिनाऽवस्थानं कल्पते इति मार्गं, न चैतद्युक्तं, तस्मात्स एव द्रुम आधाकर्म्मिकस्तत्संस्पृष्टभावः कतिपयप्रदेशाः पूतिरिति प्रतिपत्तव्यं, न तु छायाऽऽधाकर्म्मिकीति । पुनरपि परेषां दूषणान्तरमाह—

वड्ढइ हायइ छाया तत्थिक्कं पूइयंपि व न कप्पे । न य आहाय सुविहिए निव्वत्तयई रविच्छायं ॥ १७४ ॥

व्याख्या—इह छाया तथातथासूर्यगतिविशेषाद्वर्द्धते हीयते च ततो रवेरस्तमयसमये प्रातःसमये चातिद्राघीयसी विवर्द्धमाना छाया सकलमपि ग्राममभिव्याप्य वर्त्तते, अतस्तत्स्पृष्टं सकलमपि ग्रामसम्बन्धि वसत्यादिकं 'पूतिकमिव' पूतीयोऽन्नदोषदुष्टमशनादिकमिव न

कल्पते, न चैत्रागमोपदिष्टं, तस्मादाधाकर्म्मिकी वृक्षस्य छाया, अपि च—आगन्तुककृत सूर्यमत्यया सा छाया न वृक्षहेतुका, न च सूर्यः दुरितितानापाय छायां निर्वर्त्तयति ततः कथमाधाकर्म्मिकी ? । यदि पुनराधाकर्म्मिकी भवेत्, तर्हि—

अघणघणचारिगगणे छाया नट्ठा दिया पुणो होइ । कप्पइ निरायवे नाम आयवे तं विवज्जेउं ॥ १७५ ॥

व्याख्या—अघना—विरला घना—मेघाः चारिणः—परिभ्रमणशीला यत्र इत्थंभूते गगने, विरलविरलेषु नभसि मेघेषु परिभ्रमत्सु इत्यर्थः, छाया नष्टापि सती दिवा पुनरपि भवति, ततो मेघैरन्तरिते सूर्ये ' निरातपे ' आतपाभावे तस्य वृक्षस्याधस्तनं प्रदेशं सेवितुं कल्पते, आतपे तु तं वर्जयितुं, न चायं विषयविभागः सूत्रेऽभिधीयते न च पूर्वपुरुषाचीर्णो नापि परेषां सम्मतः, तस्मादसदेतत्परोक्तमिति । इह पूर्वं वृक्षसम्बन्धित्वेन छायामाधाकर्म्मिकीमाशङ्क्य ' नट्ठच्छाए य तुमे कप्पइ ' इत्याद्युक्तम्, इदानीं तु रक्षितत्वेनाधाकर्म्मिकीमाशङ्क्य ' कप्पइ निरायवे नाम ' इत्याद्युक्तम्, अतो न पुनरुक्तता । सम्प्रति छायानिर्दोषत्वनिगमनमगीतार्थधार्मिकाणां परेषां किञ्चिदाश्वासनं च विवक्षुराह—

तम्हा न एस दोसो संभवई कम्मलक्खणविहूणो । तंपि य हु अइघिणिल्ला वज्जेमाणा अदोसिल्ला ॥ १७६ ॥

व्याख्या—यस्मात्कस्मिन्नपि द्वितीये भङ्गे कल्पते तथा रविकृतश्च छाया इत्यादि चोक्तं तस्मादाधाकर्म्मिकी छायेति यो दोष उत्पन्नः स एष दोषो न सम्भवति, कुतः ? इत्याह—' कर्म्मलक्षणविहीन ' इति, अत्र हेतौ प्रथमा, कर्म्मेति च आधाकर्म्मेति द्रष्टव्यं, ततोऽयमर्थः—यत आधाकर्म्मलक्षणविहीन एष दोषः, न हि तरुरिव छायापि कर्त्रा वृद्धिं नीता इत्यादि, तस्मान्नैष दोषः सम्भवति, अथवा ' तामपि ' आधाकर्म्मिकवृक्षस्य छायां ' हुः ' निश्चितम् ' अतिघृणावन्तः ' अतिशयेन दयालवो विवर्जयन्तः परेऽदोषवन्तः । तदे

समुक्तमानुषङ्गिकम्, तदुक्तौ च 'आहाकम्मियनाम' इत्यादिमूलद्वारगाथायां 'किं वापि ?' इति व्याख्यातं, सम्प्रति 'परपक्खो य सपक्खो' इति द्वारद्वयं व्याख्यानयन् प्रसङ्गतो निष्ठितकृतयोः स्वरूपं ताभ्यामुत्पन्नं भङ्गचतुष्टयं चाह—

परपक्खो उ गिहत्था समणो समणीउ होइ उ सपक्खो । फासुकड रद्धं वा निट्ठियमियरं कडं सव्वं ॥ १७७ ॥
तस्स कडनिट्ठियमी अन्नस्स कडंमि निट्ठिए तस्स । चउभंगो इत्थ भवे चरमदुगे होइ कप्पं तु ॥ १७८ ॥

व्याख्या—इह परपक्षः 'गृहस्थाः' श्रावकादयः, तेषामर्थाय कृतं साधूनामाधाकर्म न भवति, स्वपक्षः 'श्रमणाः' साधवः 'समणीउ'त्ति श्रमण्यो व्रतिन्यः, तेषामर्थाय कृतं साधूनामाधाकर्म वेदितव्यं, तथा प्रासुकं कृतं फलादिकं सचेतनं सत् साध्वर्थं निर्जीवीकृतं यच्च स्वपक्षचेतनमपि तन्दुलादिकं कूरत्वेन निष्पादितं तन्निष्ठितमित्युच्यते, इतरत्पुनरेकद्वित्रिगुणकण्डिततन्दुलादिकं सर्वं कृत-मिति । अत्र च कृतनिष्ठितविषये तस्य साधोरर्थाय कृते निष्ठिते च तथा अन्यस्याप्यर्थाय कृते तस्य साधोरर्थाय निष्ठिते भक्तादौ चतुर्भ-ङ्गिका भवति, तत्र प्रथमतृतीयभङ्गौ साक्षाद्दर्शितौ द्वितीयचतुर्थौ तु गम्यौ, तौ चैवं—तस्य कृतमन्यस्य निष्ठितमन्यस्य कृतमन्यस्य निष्ठितं, तत्रोपात्तयोर्द्वयोर्भङ्गयोः चरमौ—अनुक्तौ पाश्चात्यौ द्वौ भङ्गौ, द्वि(तीय) चतुर्थावित्यर्थः, प्रथमस्य हि द्वितीयः पाश्चात्यस्तृतीयस्य तु चतुर्थः, तत उपात्तप्रथमतृतीयभङ्गापेक्षया चरमौ द्वितीयचतुर्थौ कल्प्येते, तस्मिंश्चरमद्विके भवति कल्प्यमशनादि, एतच्च यद्यपि प्रागेवोक्तं तथापि विस्मरणशीलानां स्मरणाय भूयोऽप्युक्तमिति न कश्चिद्दोषः । उक्तं परपक्षस्वपक्षरूपं द्वारद्वयं, सम्प्रति 'चउरो' इति व्याचिख्यासुराह—

चउरो अइक्कमवइक्कमा य अइयार तह अणायारो । निद्दरिसणं चउण्हंपि आहाकम्मे निमंतणया ॥ १७९ ॥

व्याख्या—आधाकर्मणि विषये केनाप्यभिनवेन श्राद्धेन निमन्त्रणे कृते चत्वारो दोषाः संभवन्ति, तद्यथा—अतिक्रमो व्यतिक्रमोऽतीचारोऽनाचारश्च, एते चत्वारोऽपि स्वयमेव सूत्रकृता व्याख्यास्यन्ते, एतेषां च चतुर्णामपि 'निदर्शनं' दृष्टान्तो भावनीयः, तमपि च वक्ष्यति ॥ तत्र प्रथमत आधाकर्मनिमन्त्रणं भावयति—

सालीघयगुलगोरस नवेसु वल्लीफलेसु जाएसु । दाणे अहिगमसड्ढे आहायकए निमतेइ ॥ १८० ॥

व्याख्या—'शालिषु' शाल्योदनेषु तथा घृतगुडगोरसेषु साधूनाश्रित्य षट्कायोपमर्दनेन निष्पादितेषु नवेषु च वल्लीफलेषु जातेषु साधुनिमित्तमपि चीकृतेषु 'दाने' दानविषये कोऽप्यभिनवश्राद्धः—अभ्युपगतश्रावको निमन्त्रयते, यथा भगवन् ! प्रतिगृह्णीत यूयमस्मद्गृहे शाल्योदनादिकमिति । ततश्च—

आहाकम्मग्गहणे अइक्कमाईसु वट्टए चउसु । नेउरहारिगहत्थी चउतिगदुगएगचलणेणं ॥ १८१ ॥

व्याख्या—आधाकर्मग्रहणे अतिक्रमादिषु चतुर्षु दोषेषु वर्तते, स च यथा यथा उत्तरस्मिन्नुत्तरस्मिन् दोषे वर्तते तथा तथा तद्योगमनितारपापाद्आत्मानं महता कष्टेन व्यावर्तयितुमीष्टे, अत्र दृष्टान्तमाह—'नेउरे' त्यादि इह नूपुरपण्डितायाः कथानकमतिप्रसिद्धं स्याद् ग्रन्थगौरवाय न लिख्यते, किन्तु धर्मोपदेशमालाविवरणादेरवगन्तव्य, तत्र नूपुरं-मञ्जीरं तस्य हारो-हरणं चतुरकत्वं तेन या प्रसिद्धा सा नूपुरहारिका, आगमे चान्यत्र नूपुरपण्डितेति प्रसिद्धा, तस्याः कथानके यो हस्ती राजपत्नीं सञ्चारयन् प्रसिद्धः स नूपुरहारिकाहस्ती स यथा 'चउतिगदुगएगचलणेण 'त्ति पश्चानुपूर्व्या योजना, एकेन द्वाभ्यां त्रिभिश्चतुर्भिश्चरणैराकाशस्थैर्महता महत्तरेण कष्टेनात्मानं व्यावर्तयितुमीशः तथाऽऽधाकर्मग्राह्यपि, इयमत्र भावना—नूपुरहारिकाकथानके राज्ञा हस्ती स्वपत्नीमिण्ठाभ्यां सह छिन्नटङ्कं समारो

पित, ततोऽपि मिष्टेन छिन्नटङ्कपर्वतप्रभागे व्यवस्थाप्याग्रेतनमेकं कंचिच्चरणमाकाशे कारितः, स च तथाकारितः सन् स्तोकेनैव क्लेशेन तं चरणं व्यावर्त्य तथैव पर्वते आत्मानं स्थापयितुं शक्नोति, एवं च साधुरपि कश्चिदतिक्रमाख्यं दोषं प्राप्तः सन् स्तोकेनैव शुभाध्यवसायेन तं दोषं विशोध्यात्मानं संयमे स्थापयितुमीष्टे, यथा च स हस्ती चरणद्वयमग्रेतनमाकाशस्थं क्लेशेन व्यावर्त्तयितुं शक्नोति, एवं च साधुरपि व्यतिक्रमाख्यं दोषं विशिष्टेन शुभेनाध्यवसायेन विशोधयितुमीष्टे, यथा च स हस्ती चरणत्रयमाकाशस्थमेकेन केनापि पाश्चात्येन चरणेन स्थितो गुरुतरेण कष्टेन व्यावर्त्तयितुं समः, तथा साधुरप्यतीचारदोषं विशिष्टतरेण शुभेनाध्यवसायेन विशोधयितुं प्रभुः, यथा च स हस्ती चरणचतुष्टयमाकाशस्थितं सर्वथा न व्यावर्त्तयितुमीष्टः, किन्तु नियमतो भूमौ निपत्य विनाशमाविशति, एवं साधुरप्यनाचारे वर्त्तमानो नियमतः संयमात्मानं विनाशयति। इह दृष्टान्ते चरणचतुष्टयं हस्तिना नोत्पाटितं, किन्तु दार्ष्टान्तिके योजनानुरोधात् सम्भावनामङ्गीकृत्य प्रतिपादितम्। सम्प्रत्यतिक्रमादीनां स्वरूपमाह—

आहाकम्मनिमंतण पडिसुणमाणे अइक्कमो होइ। पयभेयाइ वइक्कम गहिए तइएयरो गिलिए ॥ १८२ ॥

व्याख्या—आधाकर्मनिमन्त्रणे सति तद् आधाकर्म 'प्रतिशृण्वति' अभ्युपगच्छति अतिक्रमो भवति, स च पात्रोद्ग्रहणादारभ्य तावत् यावदाधाकर्मग्रहणाय प्रचलति, 'पदभेदादौ' च पदस्य—चरणस्य भेदः—उत्पाटनं तदादौ, आदिशब्दाद्गमने प्रवेशने कपाटिकोद्घाटने ग्रहणाय पात्रप्रसारणे च व्यतिक्रमो दोषः, गृहीते त्वाधाकर्मणि तृतीयोऽतीचारलक्षणो दोषः, स च तावद्यावदागत्य गुरुसमक्षमालोच्य स्वाध्यायं कृत्वा गले तदाधाकर्म नाद्यापि प्रक्षिपति, गिलिते त्वाधाकर्मणि 'इतरः' चतुर्थो दोषः—अनाचारलक्षणः। तदेवं 'पउरो' इति व्याख्यातं, सम्प्रति 'गहणे य आणाई' इति व्याख्यानयन्नाह—

आणाइणो य दोसा गहणे ज भणियमह इमे ते उ । आणाभगऽणवत्था मिच्छत्त विराहणा चेव ॥ १८३ ॥

व्याख्या—यदुक्तम् 'आधाकम्मियनामे' त्यादिमूलद्वारगाथायामाधाकर्मग्रहणे 'आज्ञादय' आज्ञाभङ्गादयो दोषाः ते इमे, तद्यथा—आज्ञाभङ्गोऽनवस्था मिथ्यात्वं विराधना च ॥ तत्र प्रथमत आज्ञाभङ्गदोषं भावयति—

आण सव्वजिणाण गिण्हतो त अइक्कमइ लुद्धो । आण च अइक्कमंतो कस्साएसा कुणइ सेसं ? ॥ १८४ ॥

व्याख्या—'तद्' आधाकर्म्मिकमशनादिकं लुब्ध सन् गृह्णानः सर्वेषामपि जिनानामाज्ञामतिक्रामति, जिना हि सर्वेऽप्येतदेव ब्रुवन्ति स्म—यदुत मा गृह्णीत मुमुक्षवो ! भिक्षन आधाकर्म्मिकां भिक्षामिति, तवस्तदाददानो जिनाज्ञामतिक्रामति, तां चातिक्रामन् कस्य नाम ! आदेशात्—आज्ञया 'शेषं' केशलुञ्चनभूशयनमलिनवासोधारणमत्युपेक्षणाद्यनुष्ठानं करोति ?, न कस्यापीति भावः, सर्वस्यापि सर्वज्ञाऽऽज्ञाभङ्गकारिणोऽनुष्ठानस्य नैष्फल्यात् ॥ अनवस्थादोषं भावयति—

एक्केण कयमकज्ज करेइ तप्पच्चया पुणो अन्नो । सायाबहुलपरंपर वोच्छेओ संजमतवाण ॥ १८५ ॥

व्याख्या—इह प्रायः सर्वेऽपि प्राणिनः कर्मगुरुतया दृष्टमात्रसुखाभिलाषिणो न दीर्घसुखदर्शिनः तत एकेनापि साधुना यदाऽऽधाकर्म्मपरिभोगादिलक्षणमकार्यमासेव्यते तदा तत्प्रत्ययात् तेनापि साधुना तत्त्व विदुषाऽपि सेवितमाधाकर्म्म ततो वयमपि किं न सेविष्यामहे ? इत्येवं समालम्बनीकृत्यान्योऽप्यासेवते तमप्यालम्ब्यान्यः सेवते, इत्येव सातबहुलानां प्राणिनां परम्परया सर्वथा व्यवच्छेदः प्राप्नोति संयमतपसां, तद्व्यवच्छेदे च तीर्थव्यवच्छेदो, यश्च भगवत्तीर्थविलोपकारी स महाऽऽशातनाभागित्यनवस्थादोषभयान्न कदाचनाप्याधाकर्म्म सेवनीयं ॥ मिथ्यात्वदोष भावयति—

जो जहवायं न कुणइ मिच्छद्दिट्ठी तओ हु को अन्नो ? । वड्ढेइ य मिच्छत्तं परस्स संकं जणेमाणो ॥१८६॥

व्याख्या—इह यत् देशकालसंहननानुरूपं यथाशक्ति यथावदनुष्ठानं तत्सम्यक्त्वं, यत उक्तमाचारसूत्रे—"जं मोणंति पासहा तं सम्मंति पासहा, जं सम्मंति पासहा तं मोणंति पासहा" इति, ततो यो देशकालसंहननानुरूपं शक्त्यनिगूहनेन यथागमेऽभिहितं तथा न करोति ततः सकाशात्कोऽन्यो मिथ्यादृष्टिः ?, नैव कश्चित्, किन्तु स एव मिथ्यादृष्टीनां धुरि युज्यते, महामिथ्यादृष्टित्वात्, कथं तस्य मिथ्यादृष्टिता ? इत्यत आह—'वड्ढेइ' इत्यादि, चशब्दो हेतौ यस्मात्स यथावादमकुर्वन् परस्य शङ्कामुत्पादयति, यथा (तथाहि)—यदि यस्य वचनेऽभिधीयते तत्त्वं तर्हि किमयं तत्र जानानोऽपि तथा न करोति ?, तस्माद्वितथमेतत्प्रवचनोक्तमिति, एवं च परस्य शङ्कां जनयन् मिथ्यात्वं सन्तानेन वर्द्धयति, तथा च प्रवचनस्य व्यवच्छेदः, शेषास्तु मिथ्यादृष्टयो नैव प्रवचनस्य मालिन्यमापाद्य परम्परया व्यवच्छेदमापादयन्ति, ततः शेषमिथ्यादृष्ट्यपेक्षयाऽसौ यथावादमकुर्वन् महामिथ्यादृष्टिरिति ॥ अन्यच्च—

वड्ढेई तप्पसंगं गेही अ परस्स अप्पणो चेव । सजियंपि भिन्नदाढो न मुयइ निद्धंधसो पच्छा ॥ १८७ ॥

व्याख्या—साधुराधाकर्म्म गृह्णानः परस्य 'एकेन कयमकज्जं' इत्यादिरूपया पूर्वोक्तनीत्या 'तत्प्रसङ्गम्' आधाकर्म्मग्रहणप्रसङ्गं वर्द्धयति आत्मनोऽपि, तथाहि—सकृदपि येनाधाकर्म्म गृहीतं तर्हि तद्गतमनोज्ञरसास्वादलाम्पट्यतो भूयोऽपि तद्ग्रहणे प्रवर्त्तते, तत एवमेकदाऽप्याधाकर्म्म गृह्णन् परस्यात्मनश्च तत्प्रसङ्गं वर्द्धयति, तत्प्रसङ्गवृद्धौ च कालेन गच्छता परस्यात्मनश्च गृद्धिः—अत्यन्तमासक्तिः

१ सम्मौनमिति पश्यत तत्सम्यक्त्वमिति पश्यत यत्सम्यक्त्वमिति पश्यत तन्मौनमिति पश्यत ।

उपजायते, ततो विशिष्टविशिष्टतरमनोज्ञरसास्वादनेन विभवद्वस्तुको 'निद्धन्धसः' आगतसर्वपापपरिणामनाको भूत्वा प्रमादस्वयं परो वा 'सजीवमपि' सचेतनमपि पूवफलादिकं न मुञ्चति, तन्मोचने च दूरं दूरतरमपसर्पमपगतसर्वथाजिनवचनपरिणामो मिथ्यात्वमपि गच्छतीति ॥ सम्प्रति विराधनादोषं भावयति—

खद्धे निद्धे य सया सुत्ते हाणी तिगिच्छणे काया । पडियरगाणवि हाणी कुणइ किलेसं किलिस्संतो ॥ १८८ ॥

व्याख्या—आधाकर्म्म प्रायः प्रापूर्णकस्येव गोरसेण क्रियते, ततस्तत्स्वादु स्निग्धं च भवति, तस्मिंश्च 'खद्धे' प्रचुरे 'स्निग्धे' प्रभुक्ते भक्षिते 'रुजा' रोगो ज्वरविसूचिकादिरूपः प्रादुर्भवति, इयमात्मविराधना, ततो रुजापीडितस्य 'सूत्रे' सूत्रग्रहणमुपलक्षण मर्थस्य च हानि, तथा यदि चिकित्सां न कारयति तर्हि चिरकालसंयमपरिपालनभ्रंशः, अथ कारयति तर्हि चिकित्सने क्रियमाणे 'कायाः' तेजस्कायादयो विनाशमाविशन्ति, तथा च सति संयमविराधना, तथा 'प्रतिचारकाणामपि' परिपालकानामपि साधूनां वैयावृत्यव्यापृततया सूत्रार्थहानि, षट्कायोपमर्दकारणानुमोदनाभ्यां च संयमस्यापि हानिः, तथा प्रतिचारकास्तदुक्तं यावन्न सपारयन्ति तावत्सः 'क्लिश्यमानः' पीडां सोढुमशक्नुवन् तेभ्यः कुप्यति, कुप्यंश्च तेषामपि मनसि क्लेशमुत्पादयति, अथवा क्लिश्यमानो—दीर्घकालं क्लेशमनुभवन् प्रतिचारकाणामपि जागरणतः क्लेशं—रोगमुत्पादयति, ततस्तेषामपि चिकित्साविधौ षट्कायविराधना । तदेवं व्याख्याता सकलाऽपि 'आहाकम्मियनाम' इत्यादिका मूलद्वारगाथा, सम्प्रत्याधाकर्म्मण एवाकल्प्यविधिं विभणिषुः सम्बन्धमाह—

जह कम्मं तु अकप्पं तच्छिक्कं वाऽवि भायणठियं वा । परिहरण तस्सेव य गहियमदोसं च तह भणइ ॥ १८९ ॥

व्याख्या—यथा 'कर्म्म' आधाकर्म्म अकल्प्यम्, अभोज्यं यथा च तेनाधाकर्म्मणा स्पृष्टमकल्प्यं यथा च 'भाजनस्थितं'

यस्मिन् भाजने यदाधाकर्म्म प्रक्षिप्तं तस्मिन्नाधाकर्म्मपरित्यागानन्तरमकृतकल्पत्रयप्रक्षालने यत् क्षिप्तं शुद्धमशनादि तदपि यथा न कल्प्य यथा च तस्याधाकर्म्मणः परिहारो विध्यविधिरूपो यथा च गृहीतं सन्नल्पकमदोष भवति तथा गुरुर्भणति । अनेन यथैवागमे पिण्डविशुद्धिरमाणि तथैवाहमपि भणामीत्यावेदितं द्रष्टव्यम्, अनया च गाथया पञ्च द्वाराणि प्रतिपाद्यान्युक्तानि ॥ सम्प्रति तान्येव सविक्षेप प्रतिपादयन्नाह—

अब्भोज्जे गमणाइ य पुच्छा दव्वकुलदेसभावे य । एव जयंते छलणा विहुता तत्थिमे दोन्नि ॥ १९० ॥

व्याख्या—यथा साधूनामाधाकर्म्म तत्स्पृष्टं कल्पत्रयाप्रक्षालितभाजनस्थं वा अभोज्यं तथा भणनीयं, तथा अविधिपरिहारे गमनादिकाः कायक्लेशादिलक्षणा दोषा वक्तव्याः, तथा विधिपरिहारे कर्त्तव्ये यथा द्रव्यकुलदेशभावे पृच्छा कर्त्तव्या चशब्दाद्यथा च न कर्त्तव्या तथा वक्तव्यम्, एवं यतमाने भावच्छलनाया असम्भवो, यदि पुनरेवमपि यतमाने ' छलना ' अशुद्धभक्तादिग्रहणरूपा भवेत् ततस्तत्र दृष्टान्ताविमौ वक्तव्यौ । इह ' अभोज्ये ' इत्यनेन पूर्वगाथाया द्वारत्रय परामृष्टं ' गमणाइ य पुच्छा दव्वकुलदेसभावे य ' इत्यनेन तु परिहरणस्य विक्षेपो वक्तव्य उक्त., उत्तरार्द्धेन तु ' गहियमदोसं ' चेत्यस्य विक्षेपः । सम्प्रति प्रथमं द्वारमाधाकर्म्मणोऽकल्प्यतालक्षणं व्याचिख्यासुराह—

जह वंतं तु अभोज्जं भत्तं जइवि य सुसक्कयं आसि । एवमसंजमवमणे अणेसणिज्जं अभोज्जं तु ॥ १९१ ॥

व्याख्या—इह यद्यपि वमनकालात्पूर्वं ' भक्तम् ' ओदनादिकं ' सुसंस्कृतं ' शोभनद्रव्यसम्पर्कतोपस्कृतमासीत् तथापि यथा तद्वान्तमभोज्यम्, एवमसंयमवमने कृते साधोरप्यनेषणीयमभोज्यमेव, ' तुः ' एवकारार्थः, इयमत्र भावना—संयमप्रतिपत्तौ हि पूर्वमसंयमो

वान्ता, असयमरूपं चाधाकर्म, षट्कायोपमर्दनेन तस्य निष्पन्नत्वात्, न च वान्तमभ्यवहर्तुमुचितं विवेकिनाम्, अतः साधोरनेषणीयमभोज्यमिति । पुनरप्याधाकर्मण एवाभोज्यतां दृष्टान्तान्तरेण समर्थयमानो गाथाद्वयमाह—

मज्जारखइयमंसा मंसासिति कुणिमं सुणयवंतं । वन्नाइ अन्नउप्पाइयंपि किं तं भवे भोज्जं ? ॥ १९२ ॥

केई भणंति पहिए उद्दाणे मंसपेसि वोसिरणं । समारिय परिवेसण वारेइ सुओ करे घेत्तुं ॥ १९३ ॥

व्याख्या—चक्रपुरं नाम पुरं, तत्र उग्रतेजाः पदातिः, तस्य भार्या रुक्मिणी, अन्यदा च उग्रतेजसो ज्येष्ठभ्राता सोदासाभिधानः प्रत्यासन्नपुरात् प्राघूर्णकः समायातो, उग्रतेजसा च भोजनाय क्वापि मांसं क्रीत्वा रुक्मिण्यै समर्पयामासे, तस्याश्च रुक्मिण्या गृहव्यापारव्यापृतायास्तन्मांसं मार्जारोऽभक्षयत्, इतश्च सोदासोग्रतेजसोर्भोजनार्थमागमनवेला, ततः सा व्याकुलीबभूव, अत्रान्तरे च क्वापि कस्यापि मृतस्य कार्पटिकस्य शुना मांसं भक्षयित्वा तत्प्रत्यासन्नप्रदेशे तस्याः साक्षात्पश्यन्त्याः पुरतः कथमपि धावत्संक्षोभादिवशादुद्वमितं, ततः साऽचिन्तयत्—यदि नाम कुतोऽपि विपणेरन्यन्मांसं क्रीत्वा समानेष्यामि तर्हि महदुत्सूरं लगिष्यति, प्राप्ता च समीपं पतिज्येष्ठयोर्भोजनवेला, तस्मादेतदेव मांसं जलेन सम्यक् प्रक्षाल्य वेसवारेणोपस्करोमि, तथैव च कृतं, समागतौ सोदासोग्रतेजसौ उपविष्टौ च भोजनार्थं, परिवेषितं तयोस्तन्मांसं, ततो गन्धविशेषेणोग्रतेजसा विमृष्टं यथा वान्तमेतदिति, ततस्तेन साक्षेपं भ्रूक्षेपमुत्पाद्य रुक्मिणी पृष्टा, सा च साक्षेपभ्रूक्षेपदर्शनतो बिभ्यती पवनधुतद्रुमशाखेव कम्पमानवपुर्यथाऽवस्थितं कथितवती, ततः परित्यज्य तन्मांसं साक्षेपं निर्भर्त्स्य भूयोऽन्यन्मांसं पाचिता, इत्युक्तं । प्रथमगाथाक्षरयोजना त्वेवं—मार्जारेण खादितं—भक्षितं मांसं यस्याः सा मार्जारखादितमांसा मांसाशिन उग्रतेजसः स्त्री—महेला अन्यन्मांसमप्राप्नुवती श्ववान्तं कुणपं—मांसं गृहीतवती, तच्च वेसवारोपस्कारेण वर्णादिभिरन्यदिवोत्पादितमपि किं भवति

मोज्यं ?, नैव भवतीति माथा, एवमाधाकर्म्मापि संयमिनामभोज्यं । केचित्पुनरत्रैव कथानके एवमाहुः, तस्या रुक्मिण्या गृहे कोऽप्यती सारेण पीडितो पुष्पमनामा कार्पटिकः किञ्चिद्विविक्तं स्थानं याचितवान्, स चातीसारेण मांसखण्डानि व्युत्सृजति, ततः सोऽप्यासे माघू गेके समागते सति भर्त्रा च समानीते मांसे मार्जारेण च तस्मिन् भक्षिते रुक्मिणी भयाकुला समागता भोजनवेलेति भयभीता अन्य मां समप्राप्नुवती तान्येवातीसारव्युत्सृष्टानि मांसखण्डानि गृहीत्वा जलेन प्रक्षाल्य वेसवारेण चोपस्कृत्य भोजनायोपविष्टयो पतिश्वेपुत्रो परिवेषितवती, अथ च सा तानि मांसखण्डानि एवन्ती एवसपत्नीपुत्रेणोपवेमसो जातेन गुप्तमित्रेण दृष्टो, न च तदानीं तेन किमपि भयादुक्तं, ततो भोजनकाले तौ द्वावपि पितृपितृव्यौ तेन करे गृहीत्वा निवारितौ, यथा कार्पटिकातीसारसत्कान्यमूनि मांसखण्डानि तन्मा यूयं भिक्षस्व, तत पश्चात्सा सा दूर निर्भर्त्सयामासे, तत्यजे च तन्मांसं । द्वितीयगाथाक्षरयोजना त्वेवं—केचिद्भणन्ति 'पथिके' पथिकस्य 'उद्धाणे' अतीसारोत्थाने मांसपेशीव्युत्सर्जनं, ततस्तन्मांसपेशीरादाय तासां 'सम्भृत्य' वेसवारेणोपस्कृत्य परिवेषणे कृते सुत करेण गृहीत्वा तौ पितृपितृव्यौ भोजनाय वारयति स्म, ततो यथा पुरीषमांसमभोज्यं विवेकिनामेवमाधाकर्म्मापि साधूनामिति । किंच—

अविलाकरहीखीर ल्हसण पलंडू सुरा य गोमंसं । वेयसमएवि अमयं किंचि अभोज्जं अपिज्जं च ॥ १९४ ॥

व्याख्या—'अविला' करणी 'करभी' उष्ट्री तयोः क्षीरं, तथा लशुन पलाण्डु सुरा गोमांसं च वेदे यथायोगं वेदेषु च 'समयेषु' निर्द्धर्मप्रणीतेषु 'अमतम्' असम्मतं भोजने पाने च, तथा जिनशासनेऽपि किञ्चिदाधाकर्म्मिकादिरूपमभोज्यमपेयं च वेदितव्यं, इयमत्र भावना—पूर्वमिह संयमप्रतिपत्त्यावसंयममनेनाधाकर्म्मापि साधुभिर्वान्तं, पुरीषमिवोत्सृष्टं वा, न च वान्तं पुरीषं वा भोक्तुमुचितं विवेकिनामिति युक्तिसद्भावमोक्षप्रयुक्तमाधाकर्म्म, अथवा मा भूत् युक्तिः, केवलं वचनप्रामाण्यात् भोज्यमसेयं, तथा च मिथ्यात्वपोऽपि

षेषु यथायोगमन्येष्वपि समयेषु गोमांसादिकं करभीक्षीरादिकं चाभिधीयमानं वचनप्रामाण्याभ्युपगमवत्तयेति प्रतिपद्यन्ते, तथापि मिथ्या दृष्टयः स्वसमयप्रामाण्याभ्युपगमवत्तयेति प्रतिपन्नाः तत् साधुभिर्भगवति सर्वज्ञे प्रत्ययपदार्थप्रत्यक्षमानैर्निक्षेपतो भगवत्प्रणीते वचस्य-भिधीयमानमाधाकर्म्मादिकमभोज्यमपेयं च तथेति प्रतिपत्तव्यम् । सम्प्रति तत्स्पृष्टस्याकल्प्यतामाह—

वमिआइजुयावि वत्ती सपक्कफलसेहरा असुइनत्था । असुइस्स विप्पुसेणवि जह छिक्काओ अभोज्जाओ ॥ १९५ ॥

व्याख्या—यथा वर्णादियुतोऽपि 'वत्तिः' उपचारः 'सपक्वफलशेखरः' इह पक्वल-विलसोद् उच्यते फलं-नालिकेरादि तस्य रितः शेखर-शिखा यस्य स तथा, आस्तामनेवंविध इत्यपिशब्दार्थः, एवेनास्य माया प्रमुक्ता, स एवंविधोऽपि यदा अशुचौ पततः-पुरीषस्योपरि स्थापितः सन् अशुचेः 'विप्रुषाऽपि' लवेनापि, आस्तां स्वपक्षादिनेत्यपिशब्दार्थः, स्पृष्टो भवति तदा अभोज्यो भवति, एवं निर्लेपतया भोज्योऽप्याहार आधाकर्म्मावयवसंस्पृष्टतया साधूनामभोज्यो वेदितव्यः । भोजनस्थितस्याकल्प्यतां भावयति—

एमेव उज्झियंमिवि आहाकम्ममि अकयए कप्पे । होइ अभोज्जं भाणे जत्थ व सुद्धेऽवि तं पडियं ॥ १९६ ॥

व्याख्या—यथा आधाकर्म्मावयवेन संस्पृष्टमभोज्यम् एवं यस्मिन् भाजने तदाधाकर्म गृहीतं तस्मिन्नाधाकर्म्मण्युज्झितेऽपि 'अकृते कल्पे' वक्ष्यमाणप्रकारेण कल्पत्रयेणाप्रक्षालिते यद्वा यत्र भाजने पूर्वं शुद्धेऽपि भक्ते गृहीते आधाकर्म्म स्तोकमात्रं पतितं तस्मिन् भाजने पूर्वगृहीते शुद्धे आधाकर्म्मणि च सर्वात्मना त्यक्ते पश्चादकृतकल्पे—वक्ष्यमाणप्रकारेणाकृतकल्पत्रये यद् भूयः शुद्धमपि भक्षिष्यते तदभोज्यमवसेयं, न खलु लोकेऽपि यस्मिन् भाजने पुरीषं न्यपतत्तस्मिन्नशुचिपरित्यागानन्तरमप्रक्षालिते यद्वा यस्मिन् भाजने भक्तादिना पूर्णेऽपि तदुपरि पुरीषं निपतितं भवेत् तस्मिन् पूर्वपरिगृहीतभक्तादिपुरीषपरित्यागानन्तरमप्रक्षालिते भूयः प्रक्षिप्तपक्वान्नादिकं भोज्यं भवति, पुरी

पस्थानीयं च सयमिनामाधाकर्म्म, तवस्तस्मिन् सर्वात्मना परित्यक्तेऽपि पश्चादवचे कल्पमये भाजने यत्प्रक्षिप्यते तदभोज्यमवसेयम् ॥ सम्प्रति परिहरणं प्रतिपिपादयिषुरिदमाह—

वंतुच्चारसरिच्छं कम्मं सोउमवि कोविओ भीओ । परिहरइ सावि य दुहा विहिअविहीए य परिहरणा॥१९७॥

व्याख्या—वान्तसदृशमुच्चारसदृशं च आधाकर्म्म यतीन् प्रति प्रतिपाद्यमानं श्रुत्वा 'अपि' सम्भावने सम्भाव्यते एतन्नियमतः 'कोविदः' संसारविमुखमनस्तया पण्डितः अत एव 'भीतः' आधाकर्म्मपरिभोगतः संसारो भवतीत्याधाकर्म्मणस्तत्त्वतदाधाकर्म्म 'परिहरति' न गृह्णाति, परिहरणं च द्विधा—विधिनाऽविधिना च, सूत्रे च परिहरणशब्दस्य स्त्रीत्वेन निर्देशः प्राकृतत्वात्, प्राकृते हि लिङ्गं व्यभिचारि । तत्राविधिपरिहरणं विभणिषुः कथानकं गाथात्रयेणाह—

सालीओअणहत्थं दट्ठु भणइ अकोविओ देंति । कत्तोच्चउसि साली वणि जाणइ पुच्छ तं गतु॥ १९८ ॥

गंतूण आवणं सो वाणियग पुच्छए कओ साली ? । पच्चंते मगहाए गोब्बरगामो तहिं वयइ ॥ १९९ ॥

कम्मासकाएँ पह मोत्तुं कंटाहिसावया अविसिं । छायपि [वि]वज्जयंतो डज्झइ उण्हेण मुच्छाई ॥ २०० ॥

व्याख्या—शालिग्रामे ग्रामे ग्रामणीनामा वणिक्, तस्य भार्याऽपि ग्रामणीः, अन्यदा च वणिजि विपणिं गते भिक्षार्थमटन्नको विदः कोऽपि साधुस्तद्गृहं प्रविवेश, आनीतश्च कूरार्थया ग्रामण्या शाल्योदनः, साधुना चाधाकर्म्मदोषापनोदनाय मा पप्रच्छे, यथा—श्राविके ! कुतस्त्य एष शालिः ? इति, सा प्रत्युवाच—नाहं जाने वणिक् जानाति, ततो वणिजं विपणौ गत्वा पृच्छेति, तत एवमुक्तः सन्

स साधुस्त शाल्यासनमपराय वणिजं विपणौ गत्वा पृष्टवान्, वणिजाऽप्युक्त-मगधजनपदमत्यन्तवर्धिनो गोर्वरग्रामादागतः शालिरेष इति, ततः स तत्र गन्तुं मावर्धत, तत्रापि साधुनिमित्तं केनापि श्रावकेणाय पन्थाः कृतो भविष्यतीत्याधाकर्मशङ्कया पन्थानं विमुच्यो त्पथेन व्रजति, उत्पथेन च व्रजन्नहिकण्टकश्वापदादिभिरभिद्रूयते, नापि काञ्चन दिशं जानाति, तथा आधाकर्मशङ्कया वृक्षच्छायामपि परिहरन् मूर्ध्नि सूर्यकरनिकरप्रपातेन तप्यमानो मूर्च्छामगमत्, क्लेशं च महान्तं प्रापेति ।

इय अविहीपरिहरणा नाणाईण न होइ आभागी । दव्वकुलदेसभावे विहिपरिहरणा इमा तत्थ ॥ २०१ ॥

व्याख्या—' इति ' एवमुक्तेन प्रकारेणाविधिना परिहरणात् ज्ञानादीनामाभागी न भवति, तस्माद्विधिना परिहरणं कर्त्तव्यं, तत्र विधिपरिहरणम् ' इद ' वक्ष्यमाणं द्रव्यकुलदेशभावानाश्रित्य ' तत्र ' आधाकर्मणि विषये द्रष्टव्यम् । तत्र प्रथमतो द्रव्यादीन्येव गाथाद्वयेनाह—

ओयणसमिइमसत्तुगकुम्मासाई उ होंति दव्वाइं । बहुजणमप्पजणं वा कुलं तु देसो सुरट्ठाई ॥ २०२ ॥

आयरऽणायर भावे सय व अन्नेण वाऽनि दावणया । एएसिं तु पयाण चउपयतिपया व भयणा उ ॥ २०३ ॥

व्याख्या—' ओदनः ' शाल्यादिकूरः ' समितिमाः ' माण्डादिका सक्तवः कुल्माषाश्च प्रतीताः, आदिशब्दा मुद्गादिपरिग्रहः, अमूनि भवन्ति द्रव्याणि, कुलमल्पजनं बहुजनं वा, ' देशः ' सौराष्ट्रादिकः, भावे आदरोऽनादरो वा, एतावेव स्वरूपतो व्याख्यानयति—स्वयं वाऽन्येन वा—कर्मकरादिना यद् दापनं तौ यथासङ्ख्यमादरानादरौ, एतेषां च पदानां ' भजना ' विकल्पनो चतुष्पदा त्रिपदा वा स्यात्, किमुक्तं भवति ?—कदाचिच्चत्वार्यपि पदानि सम्भवन्ति कदाचित् त्रीणि, तत्र यदा चत्वार्यपि द्रव्यादीनि प्राप्यन्ते तदा चतु

यत्र, यत्र तु नादरो नाप्यनादरः केवलं भयपसम्भविता तत्र भावस्याभावात् निषेधेति ॥ साम्प्रतं यादृशेषु द्रव्यादिषु सत्सु पृच्छा कर्त्तव्या यादृशेषु(च) न कर्त्तव्या तान्याह—

अणुचियदेसं दव्वं कुलमप्पं आयरो य तो पुच्छा । बहुयंपि नत्थि पुच्छा सदेसदविए अभावेवि ॥ २०४ ॥

व्याख्या—यदा 'अणुचियदेसं' विवक्षितदेशासम्भवि द्रव्यं लभ्यते तदपि च प्रभूतम् एवम् 'आयरो य' इत्यत्र चशब्दा लभ्यते, एतेन द्रव्यदेशावुक्तौ, कुलमपि च 'अल्पम्' अल्पजनम्, अनेन कुलमुक्तं, आदरश्च प्रभूतः, एतेन भाव उक्तः, ततो भवति पृच्छा, आधाकर्म्मसम्भवात्, 'बहुकेऽपि च स्वदेशद्रव्ये' प्रभूतेऽपि च स्वदेशसम्भविनि लभ्यमाने द्रव्ये यथा मालवके मण्डकादौ नास्ति पृच्छा, यत्र हि देशे यद्द्रव्यमुत्पद्यते तत्र तत्प्रायः प्राचुर्येण जनैर्भुज्यत इति नास्ति तत्र बहुकेऽपि लभ्यमाने पृच्छा, आधाकर्म्मा सम्भवात्, परं तथापि कुलं महदपेक्षणीयम्, अन्यथाऽल्पजने प्रभूतेऽप्याधाकर्मेति शङ्का न निवर्त्तते, तथा 'अभावेऽपि' अनादरेऽपि नास्ति पृच्छा, यो ह्याधाकर्म्म कृत्वा ददाति स प्रायः आदरमपि कुर्यात्, तत आदराकरणेन ज्ञायते यथा नास्ति तदाधाकर्मेति न पृच्छा ॥ तदेवं यदा पृच्छा कर्त्तव्या यदा च न कर्त्तव्या तत्प्रतिपादितं, सम्प्रति पृच्छायां यदा तद् ग्राह्यं भवति यदा च न तदेतत्प्रतिपादयति—

गूढट्ठाए कयमिणमन्नोऽन्नमवेक्खए य सविलक्खं । वज्जंति गाढरुट्ठा का भे तत्तित्ति वा गिण्हे ॥ २०५ ॥

व्याख्या—इह या स्त्री भक्तं ददाति [illegible] पृष्टा सती यथावत्कथयति, यथा भगवन् ! तवार्थाय कृतमिदमशनादिकमिति, यदि पुनः भयेन मायाविकृतमं न्यपुकेनेत्यात्मो यदर्थमेतत्कृतं न कथयिष्यामीति, परं तावत् कथमिति सविलक्षं सर्वेऽपि मातृपाणि परस्परमपेक्षन्ते,

करोडोऽन्नेदमार्थं च हसन्ति, ततो यदा तथार्थोयेदं कृतमिति जल्पति यद्व 'सापलक्ष' सलज्जमन्योऽन्यमवेक्षन्ते चक्षुष्मात् हसन्ति वा तदा साधवस्तदेयमाधाकर्म्मेति परिज्ञाय वर्जयन्ति, यदा तु कस्यार्थायेदं कृतमिति पृष्टा सती गार्ह सत्यस्वरूपा स्पष्टा भवति, यथा भदन्त ! तव कः क्षतिः ? इति तदा नेदमाधाकर्म्मेति निःशङ्कं गृह्णीत ॥ सम्प्रति 'गरियमत्तोसं' चेत्यपयवं व्याचिख्यासुः परं प्रश्नयति—

गूढायारा न करेंति आयर पुच्छियावि न कहेंति । थोवंति व नो पुट्ठा त च असुद्धं कहं तत्थ ? ॥ २०६ ॥

व्याख्या—इह ये श्रावका श्राविकामातीय भक्तिपरवशगा गूढाचाराश्च ते नादरमतिशयेन कुर्वन्ति, मा भूत प्रतीष्यतीति, नापि पृष्टाः सन्तो यथावत्कथयन्ति, यथा तदार्थायेदं कृतमिति, अथवा स्तोकमिति कृत्वा ते साधुना न पृष्टाः, अथ च तत्र वस्तु 'अशुद्धम्' आधाकर्म्मदोषदुष्टम्, अतः कथं तत्र साधोः शुद्धिर्भविष्यति ? इति ॥ एवं परेणोक्ते गुरुराह—

आहाकम्मपरिणओ फासुयभोईवि बधओ होइ । सुद्धं गवेसमाणो आहाकम्मेवि सो सुद्धो ॥ २०७ ॥

व्याख्या—इह प्रासुकग्रहणेन एषणीयमुच्यते सामर्थ्यात्, तथाहि—साधूनामयं कल्पः—ग्लानादिप्रयोजनेऽपि प्रथमवस्तावदेषणीय मेषितव्य, तदभावेऽनेषणीयमपि श्रावकादिना कारयित्वा, श्रावकाभावे स्वयमपि कृत्वा भोक्तव्य, न तु कदाचनापि प्रासुकाभावेऽप्राप्त मिति, ततः कदाचिदप्यप्रासुकभोजनासम्भवे 'फासुयभोईवि' इति वाक्यमनुपपद्यमानमयत्प्रासुकशब्दमेषणीये वर्त्तयति, ततोऽयमर्थः—'प्रासुकभोज्यपि' एषणीयभोज्यपि यथाधाकर्म्मपरिणतस्तर्हि सोऽशुभकर्म्मणां बन्धको भवति, अशुभपरिणामस्यैव वस्तुस्थित्या बन्धकारणत्वात्, 'शुद्धम्' उद्गमादिदोषरहितं पुनर्गवेषयन् आधाकर्म्मण्यपि गृहीते भुक्ते च शुद्धो वेदितव्यः, शुद्धपरिणामयुक्तत्वात् । एतदेव कथानकाभ्यां भावयति—

सघुद्दिह सोउ एइ तुय कोइ भाइए पत्तो । दिन्नति देहि मज्झातिगाउ साउ तओ लग्गो ॥ २०८ ॥

व्याख्या—शतमुखं नाम पुरं, तत्र गुणचन्द्र श्रेष्ठी, चन्द्रिका तस्य भार्या, श्रेष्ठी च जिनप्रवचनानुरक्तो हिमगिरिशिखरानुकारि जिनमन्दिरं कारयित्वा तत्र युगादिजिनप्रतिमां प्रतिष्ठापितवान्, ततः सङ्घभोज्यं दापयितुमारब्धम् । इतश्च प्रत्यासन्ने कस्मिंश्चिद् ग्रामे कोऽपि साधुवेषविडम्बकः साधुर्वर्त्तते, तेन च जनपरम्परया शुश्रुवे यथा शतमुखपुरे गुणचन्द्रः श्रेष्ठी सङ्घभोज्यमद्य ददातीति, ततः स तद्ग्रहणाय सत्वरमाजगाम, सङ्घभक्तं च सर्वं दत्तं, तेन च श्रेष्ठी याचितो यथा मह्यं देहि, श्रेष्ठिना च चन्द्रिकाऽभ्यधायि, देहि साधवेऽस्मै भक्तमिति, सा प्रत्युवाच—दत्तं सर्वं न किमपीदानीं वर्त्तते, ततः श्रेष्ठिना सा पुनरप्यभाणि—देहि निजरसवतीमध्यात्परिपूर्णमस्मायिति, ततः सा शाल्योदनमोदकादिपरिपूर्णमदात्, साधुश्च सङ्घभक्तमिति बुद्ध्या परिगृह्य स्वोपाश्रये भुक्तवान्, ततः स शुद्धमपि भुञ्जान आधाकर्म्मग्रहणपरिणामवशादाधाकर्म्मपरिभोगजनितेन कर्म्मणा बद्ध । एवमन्योऽपि वेदितव्यः, सूत्रं सुगमं, नवरं 'देहि मज्झतिगाउ'त्ति भार्यया दत्तमित्युक्ते श्रेष्ठी भणति—देहि 'मम मध्यात्' मदीयभोजनमध्यात्, दत्ते च स्वादु मिष्टमिदं सङ्घभक्तमिति भुञ्जानो चिन्तयति, ततो 'लग्नः' आधाकर्म्मपरिभोगजनितकर्म्मणा बद्धः ॥ तदेवम् 'आधाकम्मपरिणओ' इत्यादि कथानकेन भावितं, सम्प्रति 'सुद्ध गवेसमाणो' इत्यादि कथानकेन भावयति—

मासियपारणगट्ठा गमणं आसन्नगामगे खमगे । सड्ढी पायसकरणं कयाइ अज्जेज्जिही खमओ ॥ २०९ ॥

खेल्लगमल्लगलेच्छारियाणि डिंभग निमच्छणं च कटणया । इंति समणत्ति पायस घयगुलजुय आवणट्ठाए ॥२१०॥

एगतमवक्कमणं जइ साहू हुज्ज होज्ज तिसोमि । तणुकोट्ठंमि अमुच्छा भुंचमि य केवल नाणं ॥ २११ ॥

व्याख्या—पोतनपुरं नाम नगरं, तत्र पञ्चभिः साधुशतैः परिवृता यथागमं विहरन्तो रत्नाकरनामानः सूरयः समाययुः, तस्याश्च साधुपञ्चशत्या मध्ये प्रियङ्करो नाम क्षपकः, स च मासमासपर्यन्ते पारणकं विदधाति, ततो मासक्षपणपर्यन्ते मा कोऽपि मदीयं पारणकम्-वधुन्याधाकर्मादिकं कार्षीदित्यतस्तत्र एव प्रत्यासन्ने ग्रामे पारणार्थं व्रजामीति चेतसि विचिन्त्य प्रत्यासन्ने कस्मिंश्चिद् ग्रामे जगाम । तत्र च यशोमतिर्नाम श्राविका, तया च तस्य क्षपकस्य मासक्षपणकं पारणकदिनं च जनपरम्परया श्रुतं, ततस्तया तस्मिन् पारणकदिने कदाचिदत्र स क्षपकोऽत्र पारणककरणाय समागच्छेदितिबुद्ध्या परमभक्तिवशतो विशिष्टशालितण्डुलैः पायसमपचयत, घृतगुडादीनि चोपबृंहद्द्रव्याणि प्रत्यासन्नीकृतानि, ततो मा साधु पायसमुत्तमं द्रव्यमिति कृत्वाऽऽधाकर्मशङ्कां कार्षीदिति मातृस्थानतो वस्त्रादिपत्रैः कृतेषु शरावाकारेषु भाजनेषु डिम्भयोग्या स्तोका स्तोका क्षैरेयी भक्षिता, भणिताश्च डिम्भा यथा रे बालकाः । यदा क्षपकः साधुरीदृशस्त्वादृशो वा समायाति तदा यूयं भणत—हे अम्ब ! प्रभूताऽस्माकं क्षैरेयी परिवेषिता ततो न शक्नुमो भोक्तुम्, एवं चोक्तेऽहं युष्माभिर्भर्त्सयिष्यामि, ततो यूयं भणत—किं दिने दिने पायसमुपस्क्रियते ?, एवं च बालकेषु शिक्षितेषु तस्मिन्नेव प्रस्तावे स क्षपको भिक्षामटन् कथमपि तस्या एव गृहे भ्रमतो जगाम, तदा सा यशोमतिरन्तःसमुल्लसत्परमभक्तिर्मा साधोः कोऽपि शङ्का भूदिति बहिरादरमकुर्वती यथास्वमास्ते, बालकाश्च यथाशिक्षितं भणितुं प्रवृत्ताः, तथैव च तया निर्भर्त्सिताः, ततः सत्येनानादरपरया क्षपकोऽपि तया भणितः, यथाऽमी मम बालकाः पायसमपि नैतेभ्यो रोचते, ततो यदि युष्मभ्यमपि रोचते तर्हि गृहीत क्षैरेयीं नो चेद् व्रजतेति, तत एवमुक्ते स क्षपकसाधुर्निःशङ्को भूत्वा पायसं प्रतिग्रहीतुमुद्यतः, सापि परमभक्तिमुद्वहन्ती परिपूर्णभाजनभरणं पायसं घृतगुडादिकं च दत्तवती, साधुश्च

मनसि निःशङ्को विशुद्धाध्यवसायः पायसं गृहीत्वा भोजनाय कस्यचित् वृक्षस्याधस्तात् गतवान्, गत्वा च यथाविधि ईर्यापथिकादि प्रतिक्रम्य स्वाध्यायं च कियन्तं कृत्वा चिन्तयामास, अहो ! लब्धमुत्कृष्टं मया पायसद्रव्यं घृतगुडादि च, ततो यदि कोऽपि साधुरागत्य संविभाग यति मां तर्हि भवामि संसारार्णवोत्तीर्णो, यतो निरन्तरं ये स्वाध्यायनिष्पन्नचेतसः प्रतिक्षणं परिभावयन्ति सकलमपि यथावस्थितवस्तुगत तम्, अत एव च दुःखरूपात् संसाराद्विमुक्तहृदयो मोक्षविधानैकतानाः यथाशक्ति गुर्वादिषु वैयावृत्त्योद्यताः ये वा परोपदेशमवणाः स्वय सम्यक् सपमानुष्ठानविधायिनस्तेषां संविभागे कृते सकल ज्ञानाद्युपष्टम्भ भवति, ज्ञानाद्युपष्टम्भे च मम महालाभः, शरीरकं पुनरिदम- सारं मायो निरुपयोगि च, ततो येन केन चोपष्टम्भं सुखेन वर्ततीत्येवं भुञ्जानोऽपि शरीरमूर्च्छारहितः प्रवर्द्धमानविशुद्धाध्यवसायो भोज- नानन्तरं केवलज्ञानमासादितवान् । सुगमं सुगमं नवरं ' सक्खुगमक्खुगलिच्छारियाणि ' त्ति महार्क—वराकं तथाक्षराणि यानि सक्खुकानि– पथ्यादिपक्कवानि भाजनानि वृत्तानीत्यर्थः, तानि केवलमरियाणि—विम्बकल्पोभ्यस्तोकस्तोकपायसप्रक्षेपणेन खराण्टितानीव खराण्टितानि कृतानि ' रुच्चणया ' इति अवज्ञया ' हन्दी 'त्यामन्त्रणे, भोः श्रमण ! यदि रोचते तर्हि गृहाणेति शेषः, ततः शरीरयापनाय घृतगुडयुत पायसं गृहीत्वैकान्तेऽप्रक्रमण, शेषं सुगमम् , एवमन्येषामपि भावतः शुद्ध गवेषयतामाधाकर्मण्यपि गृहीते भुक्ते वा न दोषः, भगवदाज्ञाऽऽराधनात् । तथा च भगवदाज्ञाराधनकृतमेवादोषं भगवदाज्ञाखण्डनकृतमेव च दोषं विभावयितुकामः कथानक रूपकचतुष्कमाह—

चन्दोदयं च सूरोदयं च रण्णो य दोन्नि उज्जाणा । तेसिं विवरियगमणे आणाकोवो तओ दण्डो ॥ २१२ ॥

पत्तल्वुमसालगया दच्छासु निवगणचित्तुम्बित्ता । उज्जाणपालएहिं गहिया य हया य वद्धा य ॥ २१४ ॥

सहस पइठा दिट्ठा इयरेहिं निवंगणचि तो वद्धा । नितस्स य अवरण्हे दसणमुमओ वहग्निसग्गा ॥ २१५ ॥

व्याख्या—चन्द्रानना नाम पुरी,तत्र चन्द्रायतसो राजा, तस्य त्रिलोकरेखाप्रमुखयोऽन्तःपुरिकाः,तस्य द्वे उद्याने,तद्यथा—एकं पूर्वस्यां दिशि सूर्योदयाभिधानं, द्वितीयं पश्चिमायां चन्द्रोदयाभिधानं, तत्र चान्यदा मासे वसन्तमासे कस्मिंश्चिद्दिने राजा निजान्तःपुरक्रीडाकौतुकार्थी जनानां पटहं दापितवान्,यथा भोः शृणुत जना ! प्रभाते राजा सूर्योदयोद्याने निजान्तःपुरिकाभिः सह स्वेच्छं विहरिष्यति, ततो मा तत्र कोऽपि यासीत् सर्वेऽपि तृणकाष्ठहारादयश्चन्द्रोदयं गच्छन्त्विति, एवं पटहे दापिते तस्य सूर्योदयोद्यानस्य रक्षणाय पदातीन्निरूपितवान्, यथा न तत्र कस्यापि प्रवेशो दातव्य इति, राजा च निशि चिन्तयामास, सूर्योदयमुद्यानं गच्छतामपि प्रभाते सूर्यः प्रत्युरसं भवति, ततः प्रतिनिवर्तमानानामपि मध्याह्ने, प्रत्युरसं च सूर्यो दुःखावह, तस्माच्चन्द्रोदयं गमिष्यामीति, एवं च चिन्तयित्वा प्रातस्तथैव कृतवान्, इतश्च पटहश्रवणानन्तरं केऽपि दुर्बुद्धयश्चिन्तयामासुर्यथा न कदाचिदपि वयं राजान्तःपुरिका दृष्टवन्तः, प्रातश्च राजा सूर्योदये सान्तःपुरः समागमिष्यति, अन्तःपुरिकाश्च यथेच्छं विहरिष्यन्ति, ततः पत्रकुडङ्गशालासु लीना केनाप्यलक्षिता वयं ताः परिभावयामः, एवं च चिन्तयित्वा ते तथैव कृतवन्तः, तत उद्यानरक्षकैः कथमपि ते शाखास्वन्तर्लीना दृष्टाः, ततो गृहीत्वा लकुटादिभिश्च हता रज्ज्वादिभिश्च बद्धाः, ये चान्ये तृणकाष्ठहारादयो जनास्ते सर्वेऽपि चन्द्रोदयं गताः, तैश्च सहसा प्रविष्टैः यथेच्छं राजान्तःपुरिकाः क्रीडन्त्यो दृष्टाः, ततस्तेऽपि राजपुरुषैर्बद्धाः, ततो नगराभिमुखमुद्यानान्निर्गच्छतो राज्ञ उद्यानपालकैः पुरुषैर्द्वयेऽपि बद्धा दर्शिताः, कथितश्च

सर्वोऽपि यथावस्थितो वृत्तान्तः, तत्र ये आज्ञाभङ्गकारिणस्ते विनाशिताः, इतरे मुक्ताः, सूत्रं सुगमं, नवरं 'सभो दंडो'त्ति दण्डो-मारणम्, एकस्मानर्थं रूपकत्रयं सूर्योदयमित्यादि, तत्र 'पच्चुरसं' प्रत्युरसम्-उरसः सम्मुख, 'नितस्स य'त्ति उद्यानादपराह्णे निर्यत' राज्ञ उभयेषां दर्शने, ततो यथाक्रमं वधविसर्गौ, एतेन यदुक्तम्-'अभोज्जे गमणाइ य' इत्यादिगाथायां 'दिट्ठंता वत्थिमा दोन्नि' तद्व्या- ख्यात, साम्प्रतं दार्ष्टान्तिके योजनामाह—

जह ते दसणकखी अपूरितइच्छा विणासिया रण्णा । विट्ठेऽवियरे मुक्का एमेव इहं समोयारो ॥ २१६ ॥

व्याख्या—यथा ते दुष्टचा दर्शनकाङ्क्षिणः अपूरितेच्छा अपि आज्ञाभङ्गकारिण इति राज्ञा विनाशिताः, 'इतरे' च तृणकाष्ठाहारा द्यचन्द्रोदयोद्यानगता दृष्टेऽपि तैरन्तःपुरे आज्ञाकारित्वान्मुक्ताः, एवमेव इहापि आधाकर्मविषये 'समवतारो' योजना कार्या, सा चैवम्- आधाकर्मभोजनपरिणामपरिणताः शुद्धमपि भुञ्जाना आज्ञाभङ्गकारित्वात्कर्मणा बध्यन्ते, साधुवेषविडम्बकसाधुवत्, शुद्धं गवेषयन्त आधाकर्मापि भुञ्जाना भगवदाज्ञाऽऽराधनात् न बध्यन्ते, भिक्षुनामिधसपक्षसाधुवदिति ॥ आधाकर्मभोगिनमेव भूयोऽपि निन्दति—

आहाकम्म भुजइ न पडिक्कमए य तस्स ठाणस्स । एमेव अडइ बोडो लुक्कविलुक्को जह कवोडो ॥ २१७ ॥

व्याख्या—य आधाकर्म भुङ्क्ते, न च तस्मात् 'स्थानात्' आधाकर्मपरिभोगरूपात् 'प्रतिक्रामति' मायश्चित्तग्रहणेन निवर्तते, स 'बोट' मुण्डो भिनाशामत्रे निष्फलं तस्य शिरोलुञ्चनादीति बोट इत्येवमधिक्षिपति, एवमेव निष्फलम् 'अटति' जगति परिभ्रमति, अविलेपमुपचारेण व्याख्यामाह—'लुक्कविलुक्को जह कवोडो' लुञ्चितविलुञ्चितो यथा 'कपोतः' पक्षिविशेषः, यथा तस्य लुञ्चनमर्चनं च न

धर्माय तथा साधोरप्याधाकर्म्मभोजिन इत्यर्थः, तत्र सामान्यतो लुञ्चन विच्छित्त्या विवरं वा लुञ्चनं विलुञ्चनम् ॥ सम्प्रत्याधाकर्म्मद्वारमु पसंजिहीर्षुरौद्देशिकं च द्वारं व्याचिख्यासुराह—

आहाकम्मद्दार भणियमियाणिं पुरा समुद्दिट्ठ । उद्देसियाति वोच्छं समासओ त दुहा होइ ॥ २१८ ॥

व्याख्या—भणितमाधाकर्म्मद्वारम्, इदानीं 'पुरा' पूर्वम् औद्देशिकमिति यद्द्वारं समुद्दिष्टं वक्ष्ये । तच्च समासतो द्विधा भवति, द्वैविध्यमाह—

ओहेण विभागेण य ओहे ठप्पं तु बारस विभागे । उद्दिट्ठ कडे कम्मे एक्केक्कि चउक्कओ भेओ ॥ २१९ ॥

व्याख्या—द्विविधमौद्देशिकं, तद्यथा—ओघेन विभागेन च, तत्र 'ओघः' सामान्यं 'विभागः' पृथक्करणम्, इयं चात्र भावना—नादत्तमिह किमपि लभ्यते ततः कतिपया भिक्षा दद्म इति बुद्ध्या कतिपयाधिकतण्डुलादिप्रक्षेपेण यन्निर्वृत्तमशनादि तदोघौद्देशिकम्, 'ओघेन' सामान्येन स्वपरपृथग्विभागकरणाभावरूपेणौद्देशिकमोघौद्देशिकमिति व्युत्पत्तेः, तथा वीवाहप्रकरणादिषु यदुद्धरितं तत् पृथ कृत्वा दानाय कल्पितं सत् विभागौद्देशिकं, विभागेन—स्वसत्ताया व्यपाये पृथक्करणेनौद्देशिक विभागौद्देशिकमिति व्युत्पत्तेः, तत्र यत् 'ओघे' ओघविषयमौद्देशिकं तस्याप्यं, नाम व्याख्येयं किन्त्वग्रे व्याख्यास्यते इति भावः, यत्तु 'विभागे' विभागविषयं तत् 'बारस'त्ति 'सूच नात्सूत्र'मिति न्यायात् द्वादशधा—द्वादशप्रकारं । द्वादशप्रकारतामेव सामान्यतः स्पष्टयति—'उद्दिट्ठ' इत्यादि, प्रथमतस्त्रिधा विभागौद्देशिकं, तद्यथा—उद्दिष्टं कृतं कर्म च, तत्र स्वार्थमेव निष्पन्नमशनादिकं भिक्षाचराणां दानाय यत् पृथक्कल्पितं तदुद्दिष्टं, यत्पुनरुद्धरितं सत् व्यञ्जनो-

दनादिकं भिक्षादानाय करम्भादिरूपतया कृतं तत्कृतमित्युच्यते, यत्पुनर्विनारम्भकरणादावुद्धरितं मोदकचूर्णादि तद्भूयोऽपि भिक्षाचराणां दानाय गुडपाकदानादिना मोदकादि कृतं तत्कर्मेत्यभिधीयते । एकैकस्मिंश्च उद्दिष्टादिके भेदे 'चतुष्कको' वक्ष्यमाणश्चतुःसङ्ख्यो भेदो भवति, त्रयश्चतुर्भिर्गुणिता द्वादश, ततो विभागौद्देशिकं द्वादशधा । सम्प्रत्योघौद्देशिकस्य पूर्वं स्थाप्यतया मुक्तस्य प्रथमतः सम्भवमाह—

जीयामु कहवि ओमे नियर्यं भिक्खावि कइवई देमो । हदि हु नत्थि अदिन्नं भुज्जइ अकयं न य फलेई ॥२२०॥

व्याख्या—इह दुर्भिक्षानन्तरं केचिद्गृहस्था एवं चिन्तयन्ति—'कथमपि' महता कष्टेन जीविताः 'अवमे' दुर्भिक्षे ततः 'नियत' प्रतिदिवसं कतिपया भिक्षा दद्मो यतः 'हु' निश्चितं 'हदी' गति स्वसम्बोधने नास्त्येतद् यदुत भवान्तरेऽदत्तमिह जन्मनि भुज्यते, नापीह भवेऽकृतं शुभं कर्म परलोके फलति, तस्मात्परलोकाय कतिपयभिक्षादानेन शुभं कर्मोपार्जयाम इत्योघौद्देशिकसम्भवः । सम्प्रत्योघौद्देशिकस्वरूपं कथयति—

सा उ अविसेसिय चिय मियम्मि भत्तम्मि तंडुले छुहइ । पासडीण गिहीण व जो एहिइ तस्स भिक्खट्ठा ॥२२१॥

व्याख्या—सा तु गृहनायिका योषित् प्रतिदिवसं यावत्प्रमाणं भक्तं पच्यते तावत्प्रमाण एव भक्ते पक्तुमारभ्यमाणे पाखण्डिनां गृहिणां वा मध्ये यः कोऽपि समागमिष्यति तस्य 'भिक्षार्थे' भिक्षादानार्थम् 'अविशेषितमेव' एतावत्स्वार्थमेतावच्च भिक्षादानार्थमित्येवं विभागरहितमेव तण्डुलान् अधिकतरान् प्रक्षिपति, एतदोघौद्देशिकम् । अत्र परस्य पूर्वपक्षमाशङ्क्योत्तरमाह—

छउमत्थोघुद्देसं कह थियाणाइ चोइए भणइ । उवउत्तो गुरु एवं गिहत्थसद्दाइचिट्ठाए ॥ २२२ ॥

व्याख्या—'छद्मस्थः' अकेवली कथमोघौद्देशिकं—पूर्वोक्तस्वरूपं विजानाति ?, न नैव छद्मस्थेन ज्ञातुं शक्यते, यथा नाम स्वार्थ मारभ्यमाणे पाके भिक्षादानाय कतिपयतण्डुलप्रक्षेप आसीदिति, एवं 'चोदिते' प्रेरणे कृते गुरुर्भणति—'एवं' वक्ष्यमाणप्रकारेण गृहस्थत्र शब्दचेष्टायामुपयुक्तो—दत्तावधानो जानातीति । एतदेव भावयति—

दिन्नाउ ताउ पञ्चवि रेहाउ करेइ देइ व गणंति । देहि इओ मा य इओ अवणेह य एत्तिया भिक्खा ॥ २२३ ॥

व्याख्या—यदि नाम भिक्षादानसङ्कल्पतः प्रथमत एवाधिकतण्डुलप्रक्षेपः कृतो भवेत् तर्हि माप एवं गृहस्थानां चेष्टाविशेषा भवेयुः, यथा दत्तास्ताः पञ्चापि भिक्षाः, इयमत्र भावना—क्वापि गृहे भिक्षार्थं प्रविष्टाय साधवे तत्स्वामी निजभार्यया भिक्षां दापयति, सा च साधोः शृण्वत एवेत्थं प्रत्युत्तरं ददाति—यथा वाः प्रतिदिवसं सङ्कल्पिता पञ्चापि भिक्षा अन्यभिक्षाचरेभ्यो दत्ता इति, यद्वा—भिक्षां ददती दत्तभिक्षापरिगणनाय भित्त्यादिषु रेखाः करोति, अथवा प्रथमेयं भिक्षा द्वितीयेयं भिक्षेत्येवं गणयन्ती ददाति, यदि वा काचित् कस्या अपि सम्मुखमेवं भणति—यथाऽस्मादुद्दिष्टभक्तपिण्डिकादेर्मा देहि, मा च इत इति, अथवा प्रथमतः साधौ विवक्षिते गृहे भिक्षार्थं प्रविष्टे काचित्कस्या सम्मुखमेवमाह—'अपनय' पृथक्कुरु विवक्षितात् स्थानादेतावतीर्भिक्षा भिक्षाचरेभ्यो दानायेति, तत एवमुल्लापश्रवणे रेखा कर्षणादिदर्शने च छद्मस्थेनाप्योघौद्देशिकं ज्ञातुं शक्यते, ज्ञात्वा च परिह्रियते, ततो न कश्चिद्दोषः । अत्र चायं, वृद्धसम्प्रदायः—सङ्कल्पितासु दत्तासु भिक्षासु पृथक्कृतासु वा शेषमशनादिकं कल्प्यमशेषमिति । इहोपयुक्तः सन् शुद्धमशुद्धं वाऽऽहारं ज्ञातुं शक्नोति, नानुपयुक्तः, ततो गोचरविषयां सामान्यत उपयुक्ततां प्रतिपादयति—

सद्दाइएसु साहू मुच्छं न करेज्ज गोयरगओ य । एसणजुत्तो होज्जा गोणीवच्छो गवत्तिव्व ॥ २२४ ॥

व्याख्या—इह साधुः 'गोचरगतः' भिक्षार्थं प्रविष्टः सन् 'शब्दादिषु' शब्दरूपरसादिषु मूर्च्छां न कुर्यात्, किन्त्वेषणायुक्त उद्गमादिदोषगवेषणाभियुक्तो भवेत्, यथा गोवत्सः 'गवत्तिव्व'त्ति गोभक्त इव ॥ गोवत्सदृष्टान्तमेव गाथाद्वयेन भावयति—

ऊसर मंडणवग्गा न पाणिय वच्छए न वा चारिं । वणियागम अवरण्हे वच्छगरडण ससंटणया ॥ २२५ ॥

पंचविहविसयसोक्खक्खणी वहू समहियं गिह त तु । न गणेइ गोणिवच्छो मुच्छिय गढिओ गवच्चमि ॥ २२६ ॥

व्याख्या—गुणालयं नाम नगरं, तत्र सागरदत्तो नाम श्रेष्ठी तस्य भार्या श्रीमती नाम्ना, श्रेष्ठिना च पूर्वतरं जीर्णमन्दिरं मङ्क्त्वा नवानवरं मन्दिरं कारयामासे, तस्य च चत्वारस्तनयाः, तद्यथा—गुणचन्द्रो गुणसेनो गुणचूडो गुणशेखरश्च, एतेषां च तनयानां क्रमेण चतस्र इमा वध्वः, तद्यथा—प्रियङ्गुलतिका प्रियङ्गुरुचिका प्रियङ्गुसुन्दरी प्रियङ्गुसारिका च, कालेन च गच्छता श्रेष्ठिनो भार्या पर गत्वमुपजगाम, तत श्रेष्ठिना प्रियङ्गुस्थविरेष सर्वगृहव्यक्तो निरोपिता, एते च सयस्सा गोर्विषयते, तत्र गौर्दिवसे बहिर्गत्वा चरति, वत्सस्तु गृह एव बद्धोऽवतिष्ठते, तस्मै च चारिं पानीयं च चतस्रोऽपि वध्वो यथायोगं प्रयच्छन्ति । अन्यदा च गुणचन्द्रप्रियङ्गुलतिकापुत्रस्य गुणसागरस्य विवाहदिवस उपतस्थे, ततस्ताः सर्वा अपि वध्वस्तस्मिन् दिने सविशेषमाभरणविभूषिताः स्वपरमण्डनादिकृत्यव्यापृता अभूवन्, ततो वत्सस्तासां विस्मृति गतो, न कयाचिदपि तस्मै पानीयादि ढौकितं, ततो मध्याह्ने श्रेष्ठी यत्र प्रदेशे वत्सो वर्तते तत्र कथमपि समागतः, वत्सोऽपि च श्रेष्ठिनमायान्तं पश्यन्नारटितुमारब्धवान्, ततो ज्ञातं श्रेष्ठिना—यथाऽद्यापि वत्सो बुभुक्षितस्तृषितश्चेति, ततः कुपितेन तेन ताः सर्वा अपि पुत्रवध्वो निर्भर्त्सयामासिरे, ततस्त्वरितं प्रियङ्गुलतिका अम्बा च यथायोग्यं चारिं पानीयं च गृहीत्वा वत्साभिमुखं चचाल,

यस्तम तामिः सुरसुन्दरीभिरिव समलङ्कृतमपि सादर्शं गृहं नावलोकते, नापि ताः सरागदृष्ट्याऽपूः परिभावयति, किन्तु तामेव केवलां यदि पानीयं वा समानीयमाने सम्यक् परिभावयति । सूत्र सुगमं, नवरं 'पञ्चविह' इत्यादि, पञ्चविधविषयसौख्यस्य स्तनप इव स्तनपो या मध्यस्तामि 'समधिकम्' अतिशयेन रमणीयतया अधिकतरं तद्रूपं 'न गणयति' न दृष्ट्या परिभावयति, नापि ता वधूः, एवं साधु रपि भिक्षार्थमन्न रमणीया रदणीरवलोकयेत्, नापि गीतादिषु चित्तं निपधीयात्, किन्तु भिक्षामाआनयनदानाद्युपयुक्तो भवेत्, तथा च सति शास्यति शुद्धमशुद्धं वा भिक्षादिकम् । तथा चाह—

गमणागमणुक्खेवे भासिय सोयाइइंदियाउत्तो । एसणमणेसणं वा तह जाणइ तम्मणो समणो ॥ २२७ ॥

व्याख्या—'गमन' साधोर्भिक्षादानार्थं भिक्षानयनाय दात्र्या व्रजनम् 'आगमन' भिक्षां गृहीत्वा साधोरभिमुखं चलनम् 'उत्क्षेपः' भाजनादीनामूर्ध्वमुत्पाटनम्, उपलक्षणमेतत्, तेन निक्षेपपरिग्रहः, ततो गमनादिपदानां समाहारो द्वन्द्वः तस्मिन्, तथा 'भाषितेषु' जल्पितेषु देहि भिक्षामस्मै साधवे इत्यादिरूपेषु श्रोत्रादिभिरिन्द्रियैरुपयुक्तः, तथा वत्स इव 'तन्मनाः' स्वयोग्यभक्तपानीयपरिभावनमनाः सन् श्रमण एषणामनेषणां वा सम्यग् जानाति, ततो न कश्चिद्दोषः । उक्तमोघौद्देशिकं, सम्प्रति विभागौद्देशिकं विभणिषु प्रथमतस्तावत्तस्य सम्भवमाह—

महईए सखडीए उव्वरियं कूरवंजणाईयं । पउरं दट्ठूण गिही भणइ इमं देहि पुण्णट्ठा ॥ २२८ ॥

व्याख्या—इह सङ्खडिर्नाम विवाहादिकं प्रकरणं, सङ्खण्ड्यन्ते—व्यापाद्यन्ते प्राणिनोऽस्यामिति सङ्खडिरिति व्युत्पत्तेः, तस्यां सङ्खड्यां यदुद्धरितं 'कूरव्यञ्जनादिकं' शाल्योदनदध्यादिकं प्रचुरं, तद्दृष्ट्वा गृही भणति स्वकुटुम्बव्यतिकरकं मानुषं—यथेदं देहि पुण्यार्थं भिक्षाच

रेभ्य । तत्र यदा पर्यासितं तथैव ददाति तदा तदुद्दिष्टं, यदा तु तदेव करम्बादिकं करोति तदा तत्कृतं,यदा तु मोदकादिचूर्णं भूयोऽपि गुडपाकदानादिना मोदकादि करोति तदा तत्कर्म, एवं विभागौद्देशिकस्य सम्भव । तथा चाह भाष्यकृत्—

तत्थ विभागुद्देसियमेव समवइ पुव्वमुद्दिट्ठं । सीसगणहियट्ठाए तं चेव विभागओ भणइ ॥ ३२ ॥ (भा० )

व्याख्या—यथोद्धरिते मधुरकूरादौ 'एवं' पूर्वोक्तेन प्रकारेण विभागौद्देशिकं पूर्वमुद्दिष्टं सम्भवति । सम्प्रति तदेव विभागौद्देशिकं विभागतो भेदेन शिष्यगणहितार्थं ग्रन्थकारो भणति—

उद्देसिय समुद्देसिय च आएसिय समाएसं । एय कडे य कम्मे एक्केक्कि चउक्कओ भेओ ॥ २२९ ॥

व्याख्या—'उद्दिष्टे' विभागौद्देशिकं चतुर्धा, तद्यथा—औद्देशिकं समुद्देशिकमादेशं समादेशं च, एवं कृते च कर्मणि च एकैकस्मिन् 'चतुष्क' चतुःसङ्ख्यो भेदो इह, सर्वसङ्ख्यया द्वादशधा विभागौद्देशिकम् ॥ सम्प्रत्यौद्देशिकादिकं व्याचिख्यासुराह—

जावंतियमुद्देसं पासंडीणं भवे समुद्देसं । समणाणं आएसं निग्गंथाणं समाएसं ॥ २३० ॥

व्याख्या—इह यत् उद्दिष्टं कृतं कर्म वा यावन्तः केऽपि भिक्षाचराः समागमिष्यन्ति पाखण्डिनो गृहस्था वा तेभ्यः सर्वेभ्योऽपि दातव्यमिति सङ्कल्पितं भवति तदा तदौद्देशिकमुच्यते, पाखण्डिनां चेयत्वेन कल्पितं समुद्देशं, श्रमणानामादेशं, निर्ग्रन्थानां समादेशं । सम्प्रत्यमीषामेव द्वादशानां भेदानामवान्तरभेदानाह—

छिन्नमछिन्नं दुविहं दव्वे खेत्ते य काल भावे य । निप्फाइयनिप्फन्नं नायव्वं जं जहिं कमइ ॥ २३१ ।

व्याख्या—तदिदमुद्देशादिकं प्रत्येकं द्विधा, तद्यथा—छिन्नमच्छिन्नं च, छिन्नं नियमितम् अच्छिन्नमनियमितं, पुनरपि छिन्नमच्छिन्नं च चतुर्धा, तद्यथा—द्रव्ये क्षेत्रे काले भावे च, एवं यथा तदिदमौद्देशिकादि प्रत्येकमष्टधा तथा निष्पादितानिष्पन्नमिति निष्पादितेन—गृहिणा स्वार्थं कृतेन निष्पन्नं यत् करम्बादि मोदकादि वा तन्निष्पादितनिष्पन्नमित्युच्यते, ततो यन्निष्पादितनिष्पन्नं यत्र कृते कर्मणि वा 'क्रामति' गच्छे, यथा यदि करम्बादि तर्हि कृते अथ मोदकादि तर्हि कर्मणि, तत्प्रत्येकमौद्देशिकादिभेदभिन्न छिन्नमच्छिन्नं चेत्यादिना प्रकारेणाष्टधा ज्ञातव्यम् ॥ साम्प्रतममुमेव गाथार्थं व्याचिख्यासुः प्रथमतो द्रव्याद्यच्छिन्नं व्याख्याति—

भत्तुव्वरियं खलु सखडीएँ तद्दिवसमन्नदिवसे वा । अतो बहिं च सव्वं सव्वदिण देहि अच्छिन्नं ॥ २३२ ॥

व्याख्या—यत् सङ्खड्यां भक्तमुद्धरितं प्रायः प्राप्यते इति सङ्खडिग्रहणम्, अन्यथा अन्यत्राऽपि यथासम्भवं द्रष्टव्यं, तद्दिवस मिति 'व्यत्ययाऽप्यासा'मिति प्राकृतलक्षणवशात् सप्तम्यर्थे प्रथमा, ततोऽयमर्थः—यस्मिन् दिवसे सङ्खडिः तस्मिन्नेव दिवसे, यद्वा—अन्य स्मिन् दिवसे गृहनायको भार्यादिना दापयति, यथा यदन्तर्बहिश्च यच्च यदि', अनेन क्षेत्राच्छिन्नमुक्तं, तत् सर्वं—समस्तम्, अनेन द्रव्या च्छिन्नमुक्तं 'सर्वदिनं' सकलमपि दिनं यावद्, उपलक्षणमेतत् तेन कर्मरूपं मोदकादि प्रभूतान्यपि दिनानि यावदिति द्रष्टव्यम्, अनेन कालाच्छिन्नमुक्तम्, अच्छिन्नम्—अनवरतं देहि, भावाच्छिन्नं तु स्वयमभ्यूह्यं, तच्चैवं—यदि तव रोचते यदि वा न रोचते तथाप्यवश्यं दात व्यमिति । सम्प्रति द्रव्यादिच्छिन्नमाह—

देहि इमं मा सेसं अतो बाहिरगयं च एगयरं । जाव अमुगत्ति वेला अमुगं वेलं च आरब्भ ॥ २३३ ॥

व्याख्या—इदं शाल्योदनादिकमुद्धरितं देहि मा 'शेषं' कोद्रवकूरादि, अनेन द्रव्यच्छिन्नमुक्त, तत्रापि च शाल्योदनादिकमन्तर्व्य परिवर्तं बहिर्व्यवस्थित वा पक्वरं न शेषम्, अनेन क्षेत्रच्छिन्नमुक्त, तथाऽमुकस्या वेलाया आरभ्य यावदमुका वेला, यथा प्रहराद्यारभ्य यावत्प्रहरद्वय तावदेहि, अनेन कालच्छिन्नमुक्त, भावच्छिन्न तु स्वयमभ्यूह्य, तथैव—यावत्तव रोचते तावदेहि मा स्वरुचिमतिक्रम्यापि। सम्प्रत्युद्दिष्टमधिकृत्य कल्प्याकल्प्यविधिमाह—

द व्वाईछिन्नपि हु जइ भणई आरओऽवि मा देह। नो कप्पइ छिन्नपि हु अच्छिन्नकड परिहरति ॥ २३४ ॥

व्याख्या—इह यद् द्रव्यक्षेत्रादिभिः पृथग्निर्धारित तदतिरिच्य शेष समस्तमपि कल्पते, तस्य दानार्थं सङ्कल्पितत्वाभावात्, केवलं द्रव्यादिच्छिन्नमपि-द्रव्यक्षेत्रादिभिः पृथग्निर्धारितमपि 'हु' निश्चितं यदि गृहस्वामी भाषते यथ—देयस्य वस्तुनो नियतादवधेरर्वागपि भणति, यथा मा इत ऊर्ध्वं कस्मायपि देहीति, यथा मध्यदूर्ध्वं यावत्पूर्वं किञ्चिदातुं निरोपितं, ततो दानपरिणामाभावादर्वागेव निषेधति—'मा इत ऊर्ध्वं दद्या'दिति तदा तच्छिन्नमपि कल्पते, तस्य सम्प्रत्यात्मीयसत्ताकीकृतत्वात्, यत्पुनरच्छिन्नकृतमच्छिन्नम्—अनिर्धारितं कृतं सर्वथै वतारिहरन्ति, अकल्प्यत्वात्, इत्यमेव भगवदाज्ञाभिधुम्भणात्, यदा तच्छिन्नमपि पश्चाद्दानपरिणामाभावादर्वागेवात्मार्थीकृतं भवति तदा तत्कल्पते। सम्प्रति सम्प्रदानविभागमधिकृत्य कल्प्याकल्प्यविधिमाह—

अमुगाणति व दिज्जउ अमुकाणं भित्ति एत्थ उ विभासा। अत्थ जईण विसिट्ठो निद्देसो त परिहरंति ॥ २३५ ॥

व्याख्या—अमुकेभ्यो दद्यात् माऽमुकेभ्य इत्येवं सम्प्रदानविशेषविषये सङ्कल्पे कृते विभाषा द्रष्टव्या, कदाचित्कल्पते कदाचिन्न,

तत्र यदा कल्पते यदा च न तदाह—'जत्थे'त्यादि, यत्र देये वस्तुनि यतीनामप्यविशेषेण निर्देशो भवति, यथा ये केचन गृहस्था अगृहस्था वा भिक्षाचरा यदि वा ये केचित्पाखण्डिनो यदि वा ये केचन श्रमणास्तेभ्यो दातव्यमिति तत्परिहरन्ति, यत्र तु यतीनामेव विशेषेण निर्देशो यथा यतिभ्यो दातव्यमिति तत्परिहरन्त्येव नात्र कश्चित्सन्देह इति तत्पृथग्विशेषेण नोक्तं, यदि पुनर्गृहस्थेभ्य एव दीयतां, यदि वा चरकादिभ्य एव पाखण्डिभ्यो न श्रमणेभ्यस्तदा कल्पते, अपि च—

सविसेसतं जो सुणइ कप्पए तस्स सेसए ठवणा । संकलिय साहण वा करेंति असुए इमा मेरा ॥ २३६ ॥

व्याख्या—यद्यप्यौद्देशिकं जातं वर्त्तते केवलं तथापीदमेवोद्दिश्यमानं वर्त्तते, यथा इदं देहि मा शेषमित्यादि, तत्सन्दिश्यमानम् यतिभ्यो दानाय वचनेन सङ्कल्प्यमानं यः साधुः शृणोति तस्य तत्कल्पते सदैव, दोषाभावात्, तदपि च उद्दिष्टौद्देशिकादि द्रष्टव्यं, न कृतं कर्म च, यत उक्तं मूलटीकायाम्—"अत्र चायं विधिः—संदिस्संत जो सुणइ साहू तस्सेव सेसय पडिय, न य कडकम्माइं, तं कप्पए तदैव दोषाभावा"दिति । यस्तु सन्दिश्यमानं न शृणोति तस्य न कल्पते, कुतः? इत्याह—'ठवण'त्ति स्थापनादोषात्, स च निर्गतः सन्नन्येभ्यः साधुभ्यो निवेदयति, यथा चाह—'सङ्कलिय'त्यादि 'असुते' शेषसाधुभिरनाकर्णिते इयं पूर्वपुरुषाचीर्णा मर्यादा, यदुत सङ्कलिकया एकः सङ्घाटकोऽन्यस्मै कथयति सोऽप्यन्यस्मायित्येवंरूपया 'साहण' कथनं करोति, यावन्तो यदि साधवो वसतिमायातास्त दैकस्थानस्थानमिति सूचनार्थं, स सर्वेभ्यो निवेदयति, यथा माऽस्मिन् गृहे ग्राहिष्ठ, अनेषणा वर्त्तत इति । एवमपि यैः सङ्घाटकै रूपमपि न ज्ञातं भवति तेषां परिज्ञानोपायमाह—

मा एयं देहि इमं पुट्ठे सिट्ठंमि त परिहरंति । जं दिन्नं त दिन्नं मा संपइ देहि गेण्हंति ॥ २३७ ॥

व्याख्या—साधुनिमित्त कुतोऽपि स्थानात् भिक्षामानयन्ती कयाचिभिषिध्यते—मैवदेहि, किन्त्विदं विवक्षितभाजनस्य देहि, तत एवं कृत निषिधिते साधुः पृच्छति—किमेवमिषिध्यते ?, किंमा इद दाप्यसे ? इति, तत सा माह—इदमेव दानाय कावेपर्त, नेदमिति। तत एवं 'शिष्ट' कथिते साधवस्तत्परिहरन्ति, यदि पुनर्यदत्त सदर्थं मा क्षेप सम्प्रति दद्यादिति निषिध्यात्मार्थीकृतमौद्देशिकं भवति तदा तत्कल्पत इविकृत्वा गृह्णन्ति, वदेवमुक्तमुद्दिष्टौद्देशिकं। सम्प्रति कृतौद्देशिकस्य सम्भवहेतून स्वरूप च प्रतिपादयति—

रसमायणहेउ वा मा कुच्छिहिई सुह व दाहामि। दहिमाई आयत्त करेइ कूर कढ एय ॥ २३८ ॥

मा काहाति अवण्ण परिक्कट्टलिय व विज्जाइ सुह तु। त्रियडेण फाणिएण व निद्धेण सम तु वट्टति ॥२३९॥

व्याख्या—'रसेन' दध्यादिना स्वच्छमिदं भाजन तस्मादेतेन दध्यादिना यदुद्धरितं शाल्योदनादि तत् करम्भीकृत्य रिक्तमिदं भाजन करोमि येनान्यत्प्रयोजनमनेन क्रियते इति रसभाजनहेतो, यद्वा—इत दध्यादिनाऽमिश्रितं कोथिष्यति, न च कुथित पाखण्डधा दिभ्यो दातु शक्यते, यद्वा—दध्यादिसम्मिश्रमेकेनैव प्रयासेन सुखं दीयते, इत्यादिना कारणजातेन 'दध्यादायत्त' दध्यादिसम्मिश्रं करोति 'कूरम्' ओदनम्, एतत् कृतं ज्ञातव्यं, तथा यदि भिन्नभिन्नमोदककाशोकवर्त्यादिचूर्णीदास्यामि ततो मे पाखण्डपादयः 'अवर्णम्' अश्लाघ्यं करिष्यन्ति, यद्वा—'परिक्कट्टलितम्' एकत्र पिण्डीकृतं सुखेन नीयते, अन्यथा क्रमेण मोदककाशोकवर्त्यादिचूर्णीः स्वस्वस्थाना दानीयानीय दाने भूयान् गमनागमनप्रयासो भवति, अपान्तराले वा सा चूर्णिहस्तात् सरित्वा पतति, ततो 'विकटेन' मद्येन देशविशेषापे क्षमेतत्, यद्वा—'फाणितेन' कक्काद्विना यद्वा 'स्निग्धेन' घृतादिना मोदकचूर्णादि सर्व 'वर्तयति' पिण्डतया प्रवर्तन्ति। अत्र द्वयोरपि गाथयोः गाथाभ्यां भक्तपानेन उक्ता, गाथाद्वाभ्यां च स्वरूपम्। सम्प्रति कर्मौद्देशिकस्य सम्भवहेतून् स्वरूपं चातिदेशेनाह—

एमेव य कम्ममिऽवि उण्हवणे नवरि तत्थ नाणत्त । ताविय विलीणएण मोयगचुण्णीपुणाकरण ॥ २४० ॥

व्याख्या—यथा कृतस्य सम्भवः स्वरूपं प्रोक्तम् एवं कर्म्मण्यपि द्रष्टव्यं, नवरं तत्र कर्म्मणि 'उष्णापने' उष्णीकरणे 'नानात्वं' विशेषः, तथाहि—'तापितविलीनेन' तापितेन विलीनेन च गुडादिना मोदकचूर्ण्णाः पुनर्मोदकत्वेन करणं नान्यथा, तथा तुवर्यादि भक्तमपि रात्र्युषित द्वितीयदिने भूयः सस्वरापादनेन कर्मतया निष्पाद्यमानं नाग्निमन्तरेण निष्पाद्यते ततोऽवश्यं कर्म्मण्युष्णापने नाना त्वम् । सम्प्रत्यत्रैव कल्प्याकल्प्यविधिमाह—

अमुगति पुणो रद्धं दाहमकप्पं तमारओ कप्पं । खेत्ते अंतो बाहिं काले सुद्धव्व परेव्व वा ॥ २४१ ॥

व्याख्या—भिक्षार्थं प्रविष्टं साधु प्रति यदि गृहस्थो भणति—यथाऽन्यस्मिन् गृहे विहृत्य व्यावर्त्तमानेन त्वया भूयोऽपि मद्गृहे समा गन्तव्यं, यतोऽहम् 'अमुकं' मोदकचूर्ण्णादि भूयोऽपि राद्धं गुडपाकविधानेन मोदकादि कृत्वा दास्यामि, एवमुक्ते तथाकृत्वा चेद् ददाति तर्हि तन्न कल्पते, कर्म्मौद्देशिकत्वात्, 'आरात्' भूयः पाकारम्भात्प्राक् पुनः कल्प्यं, दोषाभावात्, तथा क्षेत्रेऽन्तर्बहिर्वा काले श्वस्तनं परतरदिनभवं वाऽकल्प्यमारतः कल्प्यम्, इयमत्र भावना—यद् गृहस्थान्तर्बहिर्वा मोदकचूर्णादिकं मोदकादितयोपस्करिष्यामि कालविषयायां यद्यश्वः परतरे वा दिने भूयोऽपि पक्ष्यामि तत्तुभ्यं दास्यामीत्युक्ते तथैव चेत्कृत्वा ददाति तदा न कल्पते, भूयोऽपि पाकात्, आरतस्त्वसंसक्त कल्पते । तथा चाह—

ज जह व कय दाह त कप्पइ आरओ तहा अकय । कयपाकमणिट्ठचि ठियंपि जावच्चियं मोत्तु ॥२४२॥

व्याख्या—यत् सामान्यतो द्रव्यं यद्वा—यथा क्षेत्रनिर्द्धारणेन वा भूयोऽपि कृतं दास्यामीत्युक्ते तथैव कृतं चेद्ददाति न कल्पते, तथाऽकृतं तु भूयोऽपि पाकादारतः कल्पते, यत्तु निर्द्धारितक्षेत्रकालव्यतिरेकेण पच्यते तत्र दातुं सङ्कल्पितमिति कल्पते, यत्तु क्षेत्रका लनिर्द्धारणमविनाक्षिप्तत्र सामान्यतो भूयोऽपि पक्त्वा दास्यामीति सङ्कल्पित तदन्तर्गृहीवो श्वस्तने परतरदिने वा न कल्पते। अथ कर्म्मौद्देशिक कृतपाकमात्मार्थीकृतमपि यावदर्थिक मुक्त्वा शेषमनिष्ट—नानुज्ञात तीर्थकरगणधरैः, यावदर्थिकं त्वात्मार्थीकृत कल्पते। अ याऽऽधाकर्म्मिककर्म्मौद्देशिकयो कः परस्पर प्रतिविशेष ?, उच्यते, यत् प्रथमत एव साध्वर्थं निष्पादित तदाधाकर्म्म, यत् प्रथमत सद् भूयोऽपि पाककरणेन संस्क्रियते तत्कर्म्मौद्देशिकमिति। उक्तमौद्देशिकद्वार, सम्प्रति पूतिद्वारं वक्तव्यं—पूतिश्चतुर्द्धा, तद्यथा—नामपूतिः स्थापनापूतिर्द्रव्यपूतिर्भावपूतिश्च, तत्र नामस्थापने सुगमत्वादनादृत्य द्रव्यभावपूती प्रतिपादयति—

पूईकम्मं दुविहं दव्वे भावे य होइ नायव्वं। दव्वम्मि छगणधम्मिय भावम्मि य बायर सुहुम ॥ २४३ ॥

व्याख्या—'पूतिकर्म्म' पूतीकरणं द्विधा, तद्यथा—'द्रव्ये' द्रव्यविषयं 'भावे' भावविषयं, तत्र द्रव्ये 'छगणधार्मिकः' गोमयो पलक्षितो धार्मिको दृष्टान्त'। भावविषय पुनर्द्विधा—बादर सूक्ष्मं च, इह यत् द्रव्यस्य पूतिकरण तत् द्रव्यपूतिः, येन पुनर्द्रव्येण भावस्य पूतिकरणं तद् द्रव्यमप्युपचारात् भावपूतिः, ततो वक्ष्यमाणमुपकरणादि भावपूतित्वेनाभिधीयमानं न विरुध्यते। तत्र प्रथमतो द्रव्यपूति प्रतिपादयन्नाह—

गंधाइगुणसमिद्धं जं दव्वं असुइगंधदव्वजुयं। पूइत्ति परिहरिज्जइ तं जाणसु दव्वपूइत्ति ॥ २४४ ॥

व्याख्या—इह यद् पूर्वं स्वरूपतो 'गन्धादिगुणविशिष्टं' सुरभिगन्धादिगुणविशिष्टमपि, अपिशब्द सामर्थ्याद्गम्यते, पश्चादशुचि गन्धद्रव्यसुक्तं सद् पूतिरिति परिहियते तद्रव्यं जानीहि द्रव्यपूतिरिति । अत्रार्थे गाथाद्वयेनोदाहरणमाह—

गोट्ठिनिउत्तो धम्मी सड्डाएँ आसन्नगोट्ठिमघाए । समियसुरवल्लमीसं अजिन्न सन्ना महिसिपोहो ॥ २४५ ॥

संजायलिच्चमच्चे गोट्ठिगगघोव्वि वल्लवणिआयो । उक्खणिय अन्न छगणेण लिंपण वुच्चपूई उ ॥ २४६ ॥

व्याख्या—समिल्लं नाम पुरं, तत्र बहिरुद्याने सभाकल्पितेऽकुल्लिकायां माणिभद्रो नाम यक्षः, अन्यदा च तस्मिन् पुरे शीतलका शिवमशिवमुपवस्ये, ततः कैश्चित्तस्य यक्षस्योपयाचितकमिदं यदस्मादशिवाद्वयं निस्तरामस्ततस्तवैकं वर्षमष्टम्यादिपूपापनिकां करिष्यामः, ततो निस्तीर्णाः कथमपि तस्मादशिवात्, जातश्च तेषां चेतसि चमत्कारो यथा नूनमय समातिशायी यक्ष इति, ततो देवशर्माभिधो भाट कमदानेन पूजाकरको मम्ने, यथा वर्षमेकं यावदष्टम्यादिषु भावरेण यक्षसभां गोमयेनोपलिम्पेः, येन तत्र पवित्रीभूतायां वयमागत्यो पापनिकां कुर्मः, तथैव तन प्रविश्य, ततः कदाचिदष्टम्युपापनिका भविष्यतीति कृत्वा सभोपलेपनार्थमनुद्गत एव सूर्ये कस्यापि कुटुम्बिनो गोवाटके छगणग्रहणाय प्राविक्षत्, तत्र च केनापि कर्मकरेण रात्रौ मण्डकवल्लसुरापानव्यवहारतो जाताजीर्णेन पश्चिमरात्रीभागे तस्मिन्नेव गोवाटके क्वचित्प्रदेशे दुर्गन्धमजीर्णं पुरीषं व्युत्सर्ज्य तस्य चोपरि कथमपि महिषी समागत्य छगणपोहं मुक्तवती, ततस्तेन स्थगितं तदजीर्णं पुरीषं देवशर्मणा न ज्ञातमिति देवशर्मा तं छगणपोहं सकलमपि तथैव गृहीत्वा तेन सभामुपलिप्तवान्, उपापनिकाकारिणश्च जना नानाविधमोदकादिकं भोजनमानीय यावद् भोजनार्थं तत्रोपविशन्ति तावत्तेषामतीव दुरभिगन्धः समायातः, ततः पृष्टो देवशर्मा, यथा कुतो ऽयमशुभगन्धः समायातः? इति, तेनोक्तं—न जाने, ततस्तैः सम्यक् परिभावयद्भिः सभालेपनामध्ये वल्लाद्यवयवा ददृशिरे सुरागन्धश्च निर्यातः,

ततो मण्डे यदुपलेपनमध्ये पुरीषमवतिष्ठते इति, ततः सर्वं भोजनमशुचीकिकृत्वा परित्यक्तम्, उपलेपनं च समूलमुत्खातम्, अन्येन च गोमयेन समोपलेपिता, भोजनादिकं चान्यत् पक्त्वा भुक्तमिति । सूत्रं सुगमं, नवरं 'धर्मी' धार्मिकः, 'सामिय'त्ति मण्डकाः 'समुद्दा' पुरीषम्, अत्र यदुपलेपनं यत्र तत्र न्यस्तं भोजनादिकं तत्सर्वं द्रव्यपूतिः ॥ उक्ता द्रव्यपूतिः, अथ भावपूतिमाह—

उग्गमकोडिअवयवमित्तेणवि मीसियं सुसुद्धंपि । सुद्धंपि कुणइ चरणं पूइं तं भावओ पूइं ॥ २४७ ॥

व्याख्या—'उद्गमस्य' उद्गमदोषजातस्य या कोटयोऽत्र विभागा आधाकर्मादिरूपा भेदा इत्यर्थः, ताश्च द्विधा—विशोधिकोटयः अविशोध्याश्च, तत्राविशोधयो ग्राह्याः, तासामविशोधिरूपाणामुद्गमकोटीनामवयवमात्रेणापि मिश्रितमशनादिकं स्वरूपतः 'सुशुद्धमपि' उद्गमादिदोषरहितमपि सत् यत् भुज्यमानं चरणं 'शुद्धमपि' निरतिचारमपि पूति करोति, तदशनादिकं भावपूतिः । 'उग्गमकोडी' इत्युक्त, ततस्ता एवोद्गमकोटीरभिधित्सुराह—

आहाकम्मुद्देसिय मीसं तह बायरा य पाहुडिया । पूई अज्झोयरओ उग्गमकोडी भवे एसा ॥ २४८ ॥

व्याख्या—आधाकर्म सकलं तथा औद्देशिकं यावदर्थिकं मुक्त्वा शेषं कर्मौद्देशिकं 'मिश्रं' पाखण्डिसाधुमिश्रमात्रं बादरा च प्राभृतिका 'पूतिः' भावपूतिः अध्यवपूरकश्चोत्तरभेदद्वयात्मकः, एषा भवति उद्गमकोटिरविशोधिकोटिरूपा, तदेवं भावपूतिं स्वरूपत उपदर्श्य सम्प्रति भेदत आह—

बायर सुहुमं भावे उ पूइयं सुहुममुवरि वोच्छामि । उवगरण भत्तपाणे दुविहं पुण बायरं पूइं ॥ २४९ ॥

व्याख्या—'भावे' भावविषया पूतिर्द्विधा, तद्यथा—बादरा सूक्ष्मा च, सूक्ष्मे च नपुंसकनिर्देशः प्राकृतत्वात्, तत्र सूक्ष्मां भावपूतिमुपरि वक्ष्ये, बादरा पुनर्द्विधा, तद्यथा 'उपकरणे' उपकरणविषया 'भक्तपाने' भक्तपानविषया, तत्र भक्तपानपूतिं सामान्यतो व्याचिख्यासुराह—

चुल्लुक्खलिया डोए दव्वीछूढे य मीसग पूइ । डाए लोणे हिंगू सकामण फोडणे धूमे ॥ २५० ॥

व्याख्या—'चुल्ली' प्रतीता, 'उखा' स्थाली 'डोयः' दारुहस्तकः, महाभ्रुक इत्यर्थः, 'दर्व्वी' कणीयान् दारुहस्तकः, एतानि च सर्वाण्याधाकर्म्मादिरूपाणि द्रष्टव्यानि, सर्वत्रापि च तृतीयार्थे सप्तमी, ततोऽयमर्थः—एतैः सम्मिश्र शुद्धमपि भक्तपानादि तत् पूतिः, तत्र चुल्लुखाभ्यां मिश्रिताभ्यां कृत्वा रन्धनेन यद्वा तत्र स्थापनेन, तथा 'डायं' शाकं लवणं हिङ्गु च प्रतीतम्, एतैराधाकर्मिकैः सम्मिश्रं पूतिः, तथा 'संक्रामणस्फोटनधूमे' इति, तत्र संक्रामणम्—आधाकर्म्मभक्तादिखरण्टिते स्थाल्यादौ शुद्धस्याशनादेः पचन मोचनं वा, यद्वा दारुहस्तेनाधाकर्म्मणाऽन्यत्र स्थाल्यां सञ्चारणं, स्फोटनम्—आधाकर्म्मणा राजिकादिना संस्कारकरणं धूम—हिङ्ग्वा दिसत्को व्यार' ॥ एनामेव गाथां व्याचिख्यासुः प्रथमत उपकरणपूर्ति व्याख्यानयति—

सिज्झंतस्सुवयार दिज्जतस्स व करेइ ज दव्वं । त उवकरण चुल्ली उक्खा दव्वी य डोयाई ॥ २५१ ॥

व्याख्या—यच्चुल्ल्यादिकं सिद्ध्यतोऽन्नस्य, यद्वा यद्दर्व्यादिकं दीयमानस्य भक्तस्योपकारं करोति तच्चुल्ल्यादिकं दर्व्यादिकं च 'उपकरणम्' इत्युच्यते, उपक्रियते अनेनेत्युपकरणमिति व्युत्पत्तेः । तत्र चुल्लुखयोः स्थितमशनादिकमाश्रित्य कल्प्याकल्प्यविधिमाह—

नस्य पूतित्वं माननीय, तत्र चुल्ह्युखानिषये कल्प्याकल्प्यविधिरनन्तरमेवोक्तो दारुहस्तके चाधाकर्मणि पूतिरूपे वा स्वयोगेन स्थास्यां परिपक्वे स्थाल्यां स्थितमशनादि कल्पते, न तु तेन सम्मिश्रमिति । सम्प्रति 'दर्व्वी छूढे य' इति व्याचिख्यासुराह—

दव्वीछूढेत्ति ज वुत्त, कम्मदव्वीऐं ज दए । कम्मं घट्टिय सुद्ध तु, घट्टए छारपूइय ॥ २५४ ॥

व्याख्या—'दर्व्वी छूढे' इति यत् प्रागुक्तं, तस्यायमर्थः—'कर्मदर्व्या' आधाकर्मिकदर्व्या यत् शुद्धमप्यशनादिकं घट्टयित्वा ददाति तत् 'आहारपूतिः' भक्तपूतिः । सा चेयं स्थाल्याः सकाशान्निष्काशिता यदि स्थाल्याः सत्कं कल्पते, यदा या मूलाधाकर्मिकी दर्व्वी, केवल शुद्धयाऽपि दर्व्या यदि पूर्वमाधाकर्मिकं 'घट्टयित्वा' चालयित्वा पश्चादाधाकर्मावयवसंश्लिष्टतया यदपरं शुद्धमपि भक्तादिकं घट्टयति घट्टयित्वा च ददाति तदप्याहारपूति । अस्यां च दर्व्यां स्थाल्या निष्काशितायामपि पाश्चात्य स्थालीभक्तं न कल्पते, आधाकर्मावयवमिश्रितत्वात् । 'डाए' इत्याद्युत्तरार्द्धं व्याचिख्यासुराह—

अत्तट्ठिय आयाणे डाय लोणं च कम्म हिंगुं वा । त भत्तपाणपूई फोडण अन्न व ज छुहइ ॥ २५५ ॥

सक्काभेउं कम्मं सिद्ध ज किंचि तत्थ छूढं वा । अगारधूमि थाली वेसण हेट्ठा मुणीहि धूमो ॥ २५६ ॥

व्याख्या—आत्मार्थम् 'आदाने' तक्रादिपाकारम्भकरणरूपे सति यदाधाकर्मिकं 'डायं' शाक यदिवा लवण यद्वा हिङ्गु अन्यद्वा स्फोटनं राजिकाजीरकादि तत् तक्रादिकं तेन सम्मिश्रं भक्तपानपूतिः, एतेन 'डाए लोणे हिंगू फोडण' इति व्याख्यातं । तथा यस्यां स्थाल्यां तदाधाकर्म तदन्यत्र सक्रमय्य-प्रतिक्षिप्य तस्यामेव स्थाल्यामकृतकल्पत्रयायां यदात्मार्थं सिद्धं किञ्चित् यद्वा तत्र प्रक्षिप्तं तदपि भक्तपान-

पूतिः, अनेन 'संक्रमणं'ति व्याख्यातं, तथा 'अङ्गारेषु' निर्धूमाग्निरूपेषु 'वेसने' वेसनग्रहणमुपलक्षणं तेन वेसनहिङ्गुजीरकादौ प्रक्षिप्ते सति यो धूम उच्छ्वसति स वेसनाङ्गारधूम इति ज्ञातव्यं, पूर्वगाथायां धूम इत्यस्य पदस्यायमर्थो भावनीय इत्यर्थः । वेसनशब्दस्य च व्यस्तः सम्बन्ध आर्षत्वात्, अङ्गारादीनां च मध्ये एकं द्वे त्रीणि वाऽऽधाकर्मिकाणि ग्राह्याणि, अनेन च सूत्रेण या व्याख्या स्याच्छी तस्मादिक सा सर्वापि पूतिः ॥ उक्ता बादरपूति, अथ सूक्ष्मपूतिमाह—

इंधणधूमेगंधेअवयवमाईहिं सुहुमपूई उ । सुंदरमेयं पूई चोयग भणिए गुरू भणइ ॥ २५७ ॥

व्याख्या—भकारद्वयस्य छन्दोऽर्थत्वादादिशब्दस्य व्यत्ययान्मकारस्य चालाक्षणिकत्वादेवं निर्देशो ग्राह्यः—'इन्धनधूमग न्धावयवे' इति, इन्धनग्रहणं चोपलक्षणं, ततोऽङ्गारा अपि गृह्यन्ते, आदिशब्देन च बाष्पपरिग्रहः, ततोऽयमर्थः—इन्धनाङ्गारावयवधूमगन्ध बाष्पैराधाकर्मसम्बन्धिभिः सम्मिश्रं यत् शुद्धमशनादिकं तत् सूक्ष्मपूतिः । एषा च किल सूक्ष्मपूतिर्न आगमे निषिध्यते, तत्रचोदक आह—'सुन्दरं' युक्तमेतां पूतिं वर्जयितुं, तत्किं नागमे निषिध्यते ?, एवं परेणोक्ते गुरुर्भणति—

इंधनधूमेगंधेअवयवमाई न पूइय होइ । जेसिं तु एस पूई सोही नवि विज्जए तेसिं ॥ २५८ ॥

व्याख्या—अत्रापि पदयोजना प्राग्वत्, ततोऽयमर्थः—इन्धनाङ्गारावयवधूमगन्धबाष्पैराधाकर्मसम्बन्धिभिरिदं पूतिर्न भवति, येषां तु मतेन पूतिर्भवति तेषां मतेन साधोः शुद्धिः सर्वथा न विद्यते । एतदेव भावयति—

इंधनअगणीअवयव धूमो बप्फो य अन्नगंधो य । सव्वं फुसंति लोयं भन्नइ सव्वं तओ पूई ॥ २५९ ॥

व्याख्या—इन्धनाग्न्यवयवा सूक्ष्मा ये धूमेन सहोद्वमाना गच्छन्ति, तथा धूमो बाष्पोऽष्माम्भश्च, एते सर्वेऽपि मसरन्तः किल सकलमपि लोकं स्पृशन्ति, तत्पुद्गलानां सकलमपि लोके यावद्गमनसम्भवात्, ततस्तथाभिप्रायेण सर्वमपि पूतिरापद्यते, तथा च सति साधोः कथं शुद्धिः ? इति । अत्र परः प्रागुक्तविरोधं दर्शयन् स्वपक्षं समर्थयति—

नणु सुहुमपूइयस्सा पुव्वुद्दिट्ठस्सऽसंभवो एवं । इंधणधूमाईहिं तम्हा पूइत्ति सिद्धमिणं ॥ २९० ॥

व्याख्या—ननु यदीन्धनाग्न्यवयवादिभिः पूतिर्न भवेत्, एवं सति तर्हि पूर्वोद्दिष्टस्य 'बायरं च बायरं सुहुमं' इत्येवमुक्तस्य सूक्ष्मपूतेरसम्भव प्राप्नोति, अन्यस्य सूक्ष्मपूतेरभावात्, तस्मात्सिद्धमिदं यदुत इन्धनधूमादिभिः सम्मिश्रं पूतिः सूक्ष्मपूतिरिति । अत्र गुरुराह

चोयग इंधणमाईहिं चउहिवी सुहुमपूइय होइ । पन्नवणामित्तमियं परिहरणा नत्थि एयस्स ॥ २९१ ॥

व्याख्या—'हे चोदक !' प्रेरक ! 'इन्धनादिभिः' इन्धनाग्न्यवयवधूमबाष्पगन्धैश्चतुर्भिरपि स्पृष्टं सूक्ष्मपूतिर्भवति, नात्र कश्चिद्विवादः, एतामेव च सूक्ष्मपूतिमधिकृत्य प्रागुक्तं 'बायरं च बायरं सुहुमं' इति, केवलमिदं सूक्ष्मपूतित्वेन भणनं प्रज्ञापनामात्रं, परिहरणं पुनस्तस्याः—सूक्ष्मपूतेर्नास्ति, अशक्यत्वात् ॥ एतदेव भावयति—

सज्झमसज्झं कज्जं सज्झं साहिज्जए न उ असज्झं । जो उ असज्झं साहइ किलिस्सइ न तं च साहेई ॥२९२॥

व्याख्या—इह द्विविधं कार्यं—साध्यमसाध्यं च शक्यमशक्यं चेत्यर्थः, तत्र साध्यं साध्यते न त्वसाध्यं, यस्त्वसाध्यं युष्मादृशः साधयति स नियमात् क्लिश्यते, न च तत्कार्यं साधयति, अविद्यमानोपायत्वात्, एषोऽपि चानन्तरोक्तः सूक्ष्मपूतिरशक्यपरिहारः, ततो न परिह्रियते । सम्प्रति परो 'बायरं सुहुमं'ति समर्थयमानोऽपरं सूक्ष्मपूतिं तस्य परिहरणं च शक्यं प्रतिपादयति—

आहाकम्मियमायणपप्फोडण काय अकयए कप्पे । गहिय तु सुहुमपूई धोवणमाईहि परिहरणा ॥ २१३ ॥

व्याख्या—यत्र भाजने गृहीतमाधाकर्म्म तस्मिन् भाजने आधाकर्मपरित्यागानन्तरं 'प्रस्फोटन कृत्वा' हस्तेनास्फालनादिना सर्वानाधाकर्मावयवानपसार्य अकृते 'कल्पे' कल्पत्रये यद् गृहीतं तत्सूक्ष्मपूतिर्भवति, कतिपयोद्धरितसूक्ष्माधाकर्मावयवमिश्रणसम्भवात्, तस्य च सूक्ष्मपूतेः परिहरणं धावनादिभिः, किमुक्तं भवति ?—पात्रस्याधाकर्मिकपरित्यागानन्तरं कल्पत्रयधावनेन प्रक्षालनं क्रियते तर्हि सूक्ष्मपूतिर्न भवति, तत एवं सूक्ष्मपूते परिहरणमपि ग्रन्थे, तस्मादिदमेव¹ सूक्ष्मपूतिस्वरूपमुच्यतामिति भावः, तदेतदयुक्तं, यत इयं बादरपूतिरेव, तथाहि—गृहीतोऽस्ति तस्याधाकर्मणः सत्कैः स्थूलैः सिक्थाद्यवयवैः, । तन्निमित्तं सत्कथं स सूक्ष्मपूतिः ? । किञ्च—

धोयपि निरावयव न होइ आहम्म कम्मगहणंमि । न य अदव्वा उ गुणा भणइ सुद्धी कओ एव ? ॥ २१४ ॥

व्याख्या—कदाचित् 'कर्मग्रहणे' आधाकर्मिकग्रहणे सति तत्परित्यागानन्तरं पश्चात् 'धौतमपि' प्रक्षालितमपि पात्रं सर्वथा न निरवयवं भवति, पश्चादपि गन्धस्योपलभ्यमानत्वात्, अथ गन्ध एव केवल उपलभ्यते न तु तदवयवः कश्चिदस्तीति ब्रूषे, तत आह—न न 'अद्रव्या' द्रव्यरहिता 'गुणा' गन्धादयः सम्भवन्ति, ततो गन्धोपलम्भादवश्यं तत्र धौतेऽपि केचन सूक्ष्मा अवयवा द्रष्टव्याः, ततो भण्यते—'एवमपि' अपिरत्र सामर्थ्याल्लभ्यते प्रयत्नपरिरक्षितप्रकारेणापि कुतः सूक्ष्मपूतेः 'शुद्धिः' परिहारो ?, नैव कथञ्चन इति भावः, तस्मात्सूत्रोक्त एव सूक्ष्मपूतिः, तस्य च प्रज्ञापनामात्रं, न तु परिहरणं कर्तुं शक्यमिति स्थितं । ननु यदि स परमार्थतः सूक्ष्मपूतिस्त तस्यापरिहारे नियमादशुद्धिः प्राप्नोति, सोऽपि च सूक्ष्मपूतिः सकलक्षोभ्यापीष्यते, गन्धादिपत्रलाभो प्रक्रमेण तत्कलोक्यापनसम्भ

चत्, ततो यत्र तत्र वा आध्याधाकर्मसम्भवे सर्वेषामपि साधूनामशुद्धिः प्राप्नोतीति, नैष दोषो, धान्यादिपुद्गलानां चरणभ्रंशापादनसामर्थ्यायोगात्, न चैतदनुपपन्नं, लोकेऽपि तथा दर्शनात्, तथाहि—

लोएवि असुइगंधा विपरिणया दूरओ न दूसंति। नय मारंति परिणया दूरगयाओ(भवि) विसावयवा ॥ २९५ ॥

व्याख्या—लोकेऽपि 'अशुचिगन्धाः' अशुचिसत्का गन्धपुद्गला दूरत आगता विपरिणताः सन्तः स्पृष्टा अपि 'न दुष्यन्ति' न स्पृष्टिदोषमशुचिसंसर्जनरूपं लोकप्रसिद्धं जनयन्ति, न च विषावयवा अपि दूरगताः सन्तः 'परिणताः' पर्यायान्तरमापन्ना मारयन्ति, तथाऽऽध्याधाकर्मेण समन्विनो गन्धादिपुद्गला दूरत समागच्छन्तो विपरिणता न चरणप्राणान् विनाशयितुमीशा, नाप्याधाकर्मसंस्पर्शलक्षणं दोषं जनयन्तीति। तदेवमिन्धनाद्यवयवापेक्षया यः सूक्ष्मपूतिस्तमपरिहार्यं प्रतिपाद्य सम्प्रति लेपद्रव्यपूतिं परिहार्यं प्रतिपादयति—

सेसेहि उ दव्वेहिं जावइय फुसइ तत्तियं पूई। लेवेहिं तिहि उ पूई कप्पइ कप्पे कए तिगुणे ॥ २९६ ॥

व्याख्या—'शेषैः' इन्धनाद्यवयवव्यतिरिक्तैः शाकलवणादिभिर्यावत्स्थाल्यादिपरिमितं द्रव्यं स्पृष्टं भवति तावत्प्रमाणं पूतिः, तथा त्रिभिर्लेपैः पूतिः, इयमत्र भावना—स्थाल्यां किलाधाकर्म राद्धं, ततस्तस्या अपनीतम्, अपनीते च तस्मिन् या पाश्चात्या खरण्टिः सा एको लेपः, ततस्तस्यामेव स्थाल्यामकृतकल्पत्रयायां शुद्धं राद्धं पूतिः, एवं वारत्रयमन्यदपि राद्धं पूतिः, चतुर्थे तु वारे राद्धं न पूतिः, अथात्मयोगेन यदि गृहस्था तस्या स्थाल्याः निःशेषावयवापगमाय कल्पत्रयं ददाति तर्हि का वार्ता ?, तत आह—कल्पते तस्यां स्थाल्यां शुद्धमशनादि राद्धं, यदि 'कल्पे' प्रक्षालने 'त्रिगुणे' त्रिसङ्ख्ये कृते सति राध्यते, न शेषकालम्। एतदेव भावयति—

इंधणमाइ मोत्तुं चउरो सेसाणि होंति दव्वाइं । तेसिं पुण परिमाणं तयप्पमाणाउ आरब्भ ॥ २९७ ॥

व्याख्या—इन्धनावयवादीनि चत्वारि पूर्वोक्तानि मुक्त्वा शेषाणि 'द्रव्याणि' अशनादीनि पूतिकरणभवनानि ज्ञातव्यानि, तेषां च शुद्धाशनादिपूतिकरणविषये परिमाणं स्तनप्रमाणादारभ्य ग्राह्यम्, इयमत्र भावना—चुल्लकादीनामाधाकर्मणां गन्धादिचतुष्टयं परिहृत्य शेषं लगवलनमात्रमप्याधाय कृत्वा यद्दर्शते तेन स्पृष्टं शुद्धमप्यशनादि पूतिर्भवतीति । सम्प्रति शास्त्रेषु साधुशब्दं भाषितस्य पूतिविषयस्य कस्याकल्प्यविधिमाह—

पढमदिवसम्मि कम्मं तिन्नि उ दिवसाणि पूइयं होइ । पूईसु तिसु न कप्पइ कप्पइ तइओ जया कप्पो ॥ २९८ ॥

व्याख्या—यः यस्मिन् दिने यत्र गृहे कृतमाधाकर्म तत्र तस्मिन् दिने 'कर्म' आधाकर्म व्यक्तमेवेत्, शेषाणि तु त्रीणि दिनानि पूतिर्भवति, तद्गृहं पूतिदोषवद्भवतीत्यर्थः, तत्र च 'पूतिषु' पूतिदोषवत्सु त्रिषु दिनेषु आधाकर्मदिने च सर्वसङ्ख्यया चत्वारि दिनानि यावत् कल्पते, साधुपात्रे च पूतिभूते तदा शुद्धमशनादि प्रतीतुं कल्पते यदा तृतीयः कल्पो दत्तो भवति, न शेषकाले, पूतिदोषसम्भवात् । सम्प्रत्याधाकर्म पूतिं च वैविक्त्येन प्रतिपादयन्नुपसंहरति—

समणकडाहाकम्मं समणाणं जं कडेण मीसं तु । आहार उवहि वसही सव्वं तं पूइयं होइ ॥ २९९ ॥

व्याख्या—श्रमणानामर्थाय कृतमाहारोपधिवसत्यादिकं यत् तत्सर्वमाधाकर्म, यत्पुनः श्रमणानामर्थाय कृतेनाधाकर्मणा मिश्रमाहारादि तत्सर्वं पूतिर्भवति । सम्प्रति पतिज्ञाभोगमाह—

सड्ढस थेयदिवसेसु संखडी आसि संथभत्तं वा । पुच्छित्तु निउणपुच्छं सलोवासो यऽगारीणं ॥ २७० ॥

व्याख्या—इह प्रथमत आगतेन श्राद्धगृहे यथाविध किमपि सङ्खड्यादि चिह्नमुपलभ्य पूतिदोषसंक्षयमात्रे श्राद्धस्य पार्श्वे उपक्रमणमेवत् श्राविकायेम पार्श्वे निपुणपृच्छ प्रष्टव्यं, यथा—युष्माकं गृहे ' स्तोकदिवसेषु ' स्तोकदिवसमध्ये, प्रभूतदिवसातिक्रमेण पूतिदोषो न सम्भवतीति स्तोकदिवसग्रहण, ' सङ्खडि ' जीवाद्युपमर्दनरूपा सङ्खडिर्भक्तं वा दत्तमासीत् ?, सङ्खड्यां वा साधुनिमित्तं किमपि कृतं मासन् ?, ततस्तद्दिनादर्वाग् दिनत्रयं पूतिरितिकृत्वा परिहर्तव्यं, चतुर्थादिषु [illegible] दिनेषु परिभोगम्, अथवा कापि प्रश्नमन्तरेणाप्यगारिणीनां संलापात् पूतिरपूतिर्वेति ज्ञातव्यं, ता हि अपृष्टा एवान्योन्यमुद्दिश्य कथयन्ति, यथाऽस्माकं श्वः परश्वो वा दिने सङ्खभक्तं दत्तमासीत्, यद्वा— सङ्खडिः सङ्खड्यां च [illegible] साध्वर्थं प्रभूतमशनादिकमिति, तत एवं तासां सलापानाकर्ण्य पूत्यपूती ज्ञात्वा परिहारग्रहणे कार्ये, उक्तं पूतिद्वारं । सम्प्रति मिश्रजातद्वारमाह—

मीसज्जायं जावंतिय च पासडिसाहुमीसं च । सहस्संतरं न कप्पइ कप्पइ कप्पे कए तिगुणे ॥ २७१ ॥

व्याख्या—मिश्रजातं त्रिधा, तद्यथा—यावदर्थिकं पाखण्डिमिश्रं साधुमिश्रं च, तत्र यावन्तः केचन गृहस्था अगृहस्था वा भिक्षाचराः समागमिष्यन्ति तेषामपि भविष्यति कुटुम्बे चेति बुद्ध्या सामान्येन भिक्षाचरयोग्यं कुटुम्बयोग्य चैकत्र मिलितं यत्पच्यते तद् यावदर्थिकं मिश्रजातं । यत्तु केवलपाखण्डियोग्यमात्मयोग्य चैकत्र पच्यते तत्पाखण्डिमिश्रं । यत्पुनः केवलसाधुयोग्यमात्मयोग्यं चैकत्र पच्यते तत्साधुमिश्रं । श्रमणानां पाखण्डिष्वन्तर्भावविवक्षणात् श्रमणमिश्रं पृथग्नोक्तम् । एतच्च मिश्रजातं ' सहस्रान्तरमपि ' सहस्रान्तरे गतमपि— येन तत्कृतं तेनान्यस्मै दत्तं तेनाप्यन्यस्मै यावत्सहस्रतमाय दत्तं, ततोऽपि परं यदि साधवे ददाति तथापि न कल्पते । भाजनशुद्धौ

विधिमाह—येन भाजनेन तन्मिश्रं गृहीतं तस्मिन् भाजने मिश्रपरित्यागानन्तरं 'कल्पे' प्रक्षालने त्रिगुणे कृतेऽन्यत् शुद्धं ग्रहीतुं कल्पते, नान्यथा । एतामेव गाथां भाष्यकृद्व्याचिख्यासुः प्रथमतो मिश्रजातस्य सम्भवमाह—

दुग्गासे त समइच्छिउ व अद्धाणसीसए जत्ता । सड्ढी बहुभिक्खयरे मीसज्जायं करे कोई ॥ ३३ ॥ ( भा० )

व्याख्या—दुःखेन ग्रासो यत्र तद् दुर्ग्रासं-दुर्भिक्षं तस्मिन् भिक्षाचरसत्त्वानुकम्पया, यद्वा तद् दुर्भिक्षं समतिक्रान्तः कश्चिद् बुभुक्षा कष्ट महत्परिवाय यदि वा 'अध्वशीर्षके' कान्ताराविनिर्गमरूपे प्रवेशरूपे खिन्नभिक्षाचरानुकम्पया यद्वा 'यात्रायां' तीर्थयात्रादिरूपे उत्सवविशेषे दानश्रद्धया कोऽपि 'श्राद्धी' श्रद्धावान् बहून् भिक्षाचरानुपलभ्य 'मिश्रजातं' पूर्वोक्तशब्दार्थं करोति । सम्प्रति यावदर्थिकस्य मिश्रजातस्य परिज्ञानोपायमाह—

जावतट्ठा सिद्ध नेयं त देह कामिय जइण । बहुसु व अपहुप्पते भणाइ अन्नंपि रंधेह ॥ २७२ ॥

व्याख्या—काचित् किमपि साधवे ददती कयाचिन्मतिषिध्यते—नेदं दीयमानं यावदर्थं सिद्धं—यावन्तः केचनापि भिक्षाचराः समागमिष्यन्ति तेषामर्थाय सिद्धं, किन्तु विवक्षितं, तस्मादेतेभ्यो यतिभ्य' कामितं यावद्दुहन्ति तावत्प्रमाणं, यद्वा प्रचुरेषु भिक्षाचरेषु समागच्छत्सु अप्रेतनप्रमाणे राध्यमाने 'अप्रभवति' अपूर्यमाणे गृहनायको भणति—नैतावता राद्धेन सरिष्यति ततोऽन्यदप्यधिकं प्रक्षिप्य राध्नुहि, एवं श्रुते यावदर्थिकं मिश्रं परिज्ञायते, ज्ञात्वा च परिहर्तव्यमिति । सम्प्रति पाखण्डिमिश्रसाधुमिश्रे प्रतिपादयति—

अचट्ठा रधंते पासंडीणपि बिइयओ भणइ । निग्गंथ [illegible] ते ॥ २७३ ॥

व्याख्या—'आत्मार्थे' कुटुम्बार्थं गृहिण्या 'राध्यमाने' पच्यमाने गृहनायको यावदर्थिकमिश्रप्रथमकगृहनायकापेक्षया द्वितीयो भणति, यथा पाखण्डिनामप्यर्थायाधिकं प्रक्षिप। तथाऽऽत्मार्थमेव राध्यमाने तृतीयो गृहनायको ब्रूते, यथा—निर्ग्रन्थानामर्थायाधिकं प्रक्षिपेति। तत एवं श्रुते पाखण्डिमिश्रसाधुमिश्रयोरपि परिज्ञानं भवति। सम्प्रति यदुक्तमेतत् 'मिश्रजातं पुरुषसहस्रान्तरगतमपि न कल्पते' इति, तद् दृष्टान्तेन भावयति—

विसघाइय विसियासी मरइ तमन्नोवि खाइउं मरइ। इय पारपरमरणे अणुमरइ सहस्ससो जाव ॥ २७४ ॥

व्याख्या—इह कोऽपि वेष्कैन विषेण घातितः, तस्य पिशितं योऽश्नाति सोऽपि म्रियते, तस्यापि मांसं यो भक्षयति सोऽपि म्रियते, एवं परम्परया मरणे तावद् 'अनु' पश्चात्पश्चात्यो म्रियते, यावत्ते म्रियमाणाः सङ्ख्यया सहस्रशो भवन्ति। इत्थं सहस्रवेधकस्य विषस्य प्रभावः यत्सहस्रान्तरगतमपि मारयतीति भावः।

एव मीसज्जाय चरणप्पं हणइ साहु सुविसुद्धं। तम्हा त नो कप्पइ पुरिससहस्संतरगयपि ॥ २७५ ॥

व्याख्या—'एवं' सहस्रवेधकविषमिव यावदर्थिकपाखण्डिसाधुविषयं मिश्रजातमप्येकेनान्यस्मै दत्तं तेनाप्यन्यस्मायित्येवं परम्परया पुरुषसहस्रान्तरगतमपि साधोः सुविशुद्धं चरणात्मानं हन्ति, तस्मान्न कल्पते साधूनां सहस्रान्तरगतमपि मिश्रं। सम्प्रति साधुविषयं विधिमाह—

निच्छोडिए करीसेण यावि उव्वट्टिए तओ कप्पा। सुक्काविचा गिण्हइ अन्न चउत्थे असुक्केऽवि ॥ २७६ ॥

व्याख्या—मिश्रे कथमपि गृहीते पश्चात्तस्मिस्त्यक्ते सति भाजने 'निच्छोटिते' अङ्गुल्यादिना निरवयवे कृते यद्वा 'करीषेण'

शुष्कगोमयरूपेण उद्वर्तिते पश्चात् भयः कल्पा दीयन्ते, तत आतपे तद् भाजनं शोषयित्वा पश्चात्तस्मिन्नभ्यते—शुद्धं गृह्णाति, नान्यथा, पूति-दोषसम्भवात्, अन्ये तु सूरय आहुः—चतुर्थे कल्पे दत्ते सति अशुष्केऽपि, गृह्णन्ति, नास्ति कश्चिद्दोषः, अयं च प्रक्षालनविधिः सर्वत्राप्यशो-धिकोटिप्रभवे वेदितव्यः, उक्तं मिश्रद्वारम् । अथ स्थापनाद्वारमाह—

सट्ठाणपरट्ठाणे दुविह ठविय तु होइ नायव्वं । खीराइ परंपरए हत्थगय घरंतरं जाव ॥ २७७ ॥

व्याख्या—स्थापितं साधुनिमित्तं घृतभक्तादि, तच द्विधा, तद्यथा—स्वस्थाने परस्थाने च, तत्र स्वस्थानं चुल्ल्यवचुल्ल्यादि, परस्थानं छब्बकादि, एकैकं द्विधा—अनन्तरं परम्परं च, तत्र यस्य साधुनिमित्तं स्थापितस्य ततो विकारान्तरं न भविष्यति यथा घृतादे-स्तदनन्तरस्थापितं । क्षीरादिकं तु परम्परके परम्परास्थापितं, तथाहि—क्षीरं स्थापितं सदपि भवति, दध्यपि भूत्वा नवनीतं, नवनीतं भूत्वा घृतं, ततो यदैव साधुनिमित्तं क्षीरं धृत्वा घृतीकृत्य ददाति तदा तद् क्षीरं परम्परास्थापितं भवति, एवमन्यदपीक्षुरसादिकं द्रष्टव्यं, तथा पङ्क्तिस्थिते गृहत्रये उपयोगावकाशसम्भवे सति हस्तगतासु तिसृषु भिक्षास्वेकः साधुरेकां भिक्षां सम्यगुपयोगेन परिभावयन् गृह्णाति, द्वितीयस्तु द्वयोर्गृहयोर्हस्तगते द्वे भिक्षे परिभावयति, ततो गृहत्रयात्परतो यावद्गृहान्तरं न भवति तावत्र तस्य स्थापनादोषः, गृहान्तरे तु साधुनिमित्तं हस्तगता भिक्षा स्थापना, तत्रोपयोगासम्भवात् । एतेमामेव गाथां भाष्यकृद्व्याचिख्यासुः प्रथमतः स्वस्थानमाह—

चुल्ली अवचुल्ली वा ठाणसठाणं तु भायणं पिढरे । सट्ठाणट्ठाणमि य भायणठाणे य चउभंगा ॥३४॥ (भा०)

व्याख्या—द्विविधं स्थानं, तद्यथा—स्थानस्वस्थानं भाजनस्वस्थानं च, तत्र स्थानरूपं स्वस्थानं चुल्ली अवचुल्ली वा, चुल्ली अव—च मादवचुल्लो, तमनन्तरादित्वात्तत्पुरुषस्य पूर्वनिपातोऽनुक्तता च, तत्र 'चुल्ली' प्रतीता, 'अवचुल्ल' अवचुल्लकः यत्पार्श्व स्थितं तद् मन्के पच्यते

स्वस्थानं 'पिठर' स्थाली, तत्र स्थानस्वस्थाने भाजनस्वस्थाने च चत्वारो भङ्गाः, तद्यथा—
तत्र पूर्वो स्थानरूप स्वस्थान, भाजनरूप तु स्वस्थानं 'पिठर' स्थाली, तत्र चुल्ल्यवचुल्लाभ्यामन्यत्र चुल्ल्यां स्थापितं पिठरे च १, चुल्ल्यां स्थापितं न पिठरे छब्बकादौ स्थापितत्वात् २, न चुल्ल्यां किन्तु पिठरे, तच चुल्ल्यवचुल्लाभ्यामन्यत्र गृहेऽन्तरे स्थापितं द्रव्य ३, न चुल्ल्यां न पिठरे चुल्ल्यवचुल्लाभ्यामन्यत्र छब्बकादौ स्थापितमित्यर्थः ४ । साम्प्रतं परस्थानमाह—

छब्बगवारगमाई होइ परट्ठाणमो वऽणेगविहं । सट्ठाणे पिढरे छब्बगे य एमेव दूरे य ॥ २७८ ॥

व्याख्या—छब्बकवारकादिकमनेकविधं भाजनं परस्थानं भवति द्रव्यं, तत्र 'छब्बकं' पटलिकादिरूपं, 'वारकः' कर्कुरिः, आदि शब्दात्कभाजनवर्गचुल्ल्यवचुल्लयगृहैकदेशकभाजनपरिग्रहः, अत्रापि स्वस्थानपरस्थानापेक्षया चतुर्भङ्गी, तद्यथा—स्वस्थाने स्वस्थाने, स्वस्थाने परस्थाने, परस्थाने स्वस्थाने, परस्थाने परस्थाने । एनामेव चतुर्भङ्गीं दर्शयति—'सट्ठाण' इत्यादि, अत्र 'सट्ठाणे पिढरे छब्बगे य' इत्यनेन भङ्गद्वयं सूचितं, स्वस्थानस्य पिठरछब्बकाभ्यां प्रत्येकमभिसम्बन्धात्, तद्यथा—स्वस्थाने चुल्ल्यादौ पिठरे च, तथा स्वस्थाने चुल्ल्यादौ छब्बके च परस्थाने, 'एमेव दूरे य'त्ति इह दूरं चुल्ल्यवचुल्लाभ्यामन्यत्गृहैकदेशान्तरं, तत्रापि तदपेक्षयाऽपि एवमेव भङ्गद्वयं द्रष्टव्यं, तद्यथा—भाजनरूपे स्वस्थाने पिठरे परस्थानेऽन्यत्र गृहैकदेशान्तरे, तथा परस्थानेऽन्यत्र गृहैकदेशान्तरे परस्थाने छब्बगादाविति सर्वसङ्ख्यया चत्वारो भङ्गाः । तदेवं मूलगाथायाः सट्ठाणेत्यादिपूर्वार्द्धं व्याख्यातम् । अथ 'खीराइ परंपरए' इति व्याचिख्यासुराह—

एक्केक्कं तं दुविहं अणंतरपरंपरे य नायव्वं । अविकारिकयं दव्वं तं चेव अणंतरं होइ ॥ २७९ ॥

व्याख्या—यत्साधुनिमित्तं स्थापितमेकैकं स्वस्थानगतं परस्थानगतं च द्विविधं ज्ञातव्यं, तद्यथा—'अनन्तरे' अन्तराभावे, विकार रूपव्यवधानाभावे इत्यर्थः, 'परम्परके' विकारपरम्परायामित्यर्थः, तत्र यत् कर्म स्वयोगेनाविकारि भूयोऽसम्भविविकारं घृतगुडादि कृतं

न हि तस्य भूयोऽपि विकारः सम्भवति तत्साधुनिमित्तं स्थापितमनन्तरम्—अनन्तरस्थापितं, उपलक्षणमेतत्, तेन क्षीरादिकमपि यस्मिन् दिने साधुनिमित्त स्थापित यदि तस्मिन्नेव दिने ददाति तर्हि तदपि दध्यादिरूप विकारान्तरमनापद्यमानमनन्तरस्थापित द्रष्टव्य, तदेव तु क्षीर साधुनिमित्त पूर्वं सदध्यादिरूपतया परिकर्म्यमाणं परम्परास्थापित भवति, एवमिक्षुरसादिकमपि तस्मिन्नेव दिने स्थापित दीयमान-मनन्तरस्थापितं, कक्कपादिरूपतया तु परिकर्म्यमाणं परम्परास्थापितमिति । सम्प्रति विकारीतराणि द्रव्याणि प्रतिपादयति—

उच्छुक्खीराईय विगारि अविगारि घयगुलाईय । परियावज्जणदोसा ओयणदहिमाइय वावि ॥ २८० ॥

व्याख्या—इक्षुक्षीरादिकं विकारि तस्य कक्कपादिदध्यादिविकारसम्भवात्, घृतगुडादिकं त्वविकारि तस्य भूयोऽपि विकारा-सम्भवात्, तथा 'ओदनदध्यादिकमपि' करम्बादिरूपं विकारि, कुत इत्याह—पर्यापवर्जनदोषात्, करम्बादिकं हि क्रियमाण निय-मात् पर्यापद्यते—कोथमायातीत्यर्थः, ततस्तदपि विकारि द्रव्यं । तदेवं विकारीतराणि द्रव्याण्यभिहितानि, सम्प्रति क्षीरादिकं परम्परा स्थापितं भावयति—

उग्गहुपरिसाय अन्न लहूं पओयणे वेत्थी । रिणमीया य अगारी वहिहिचि वाह सुए ठवणा ॥ २८१ ॥

नवणीय मथुतक्कं व जाव असहिया य गिण्हति । सेसूणा जाव घय कुसणपि य उचिय काल ॥ २८२ ॥

व्याख्या—'उग्गह'त्ति केनापि साधुना कस्याश्चिदगारिण्याः सकाशे क्षीरमभ्यर्थितं, ततस्तया प्रतिभातं—क्षणान्तरे दास्यामि, साधुना चान्यमान्यत् क्षीरं लब्ध, ततः पूर्वमभ्यर्थितयाऽगारिण्या दुग्धसम्पत्तौ सत्यां साधुं प्रति प्रत्यपादि—गृहाण भगवन्निदं दुग्धमिति,

साधुना चोक्त—स्तम्भमन्यत्र मया दुग्धं, ततो यदि भूयोऽपि प्रयोजनं भविष्यति तर्हि 'घेत्थो'गृहीष्यामि, एवमुक्ते साऽगारिणी भणती तेन स्वयं नोपभुङ्क्ते, किन्त्वेवं चिन्तयामास—'श्वः' कल्ये दधि कृत्वा दास्यामीति, तत एवं चिन्तयित्वा स्थापयति, ततो द्वितीयदिने दधि जातं तदपि साधुना न गृहीतं, ततो नवनीतं तक्रं च जात, नवनीतमपि घृतं कृतं, इह क्षीरादिकं सकलमपि स्थापनादोषयुक्तत्वात् साधूनां न कल्पते, यद्वा क्षीरादिकं यावन्नवनीतं यस्तु तक्रं वा यावदेतानि सर्वाण्यप्यात्मार्थीकृतानि मा गृहीयात् साधुः कुटुम्बे भविष्यतीत्ये ममात्मसात्कृतानि साधवो गृह्णन्ति । घृतं स्वात्मार्थीकृतमपि तेजस्कायाऽम्पाशाधाकर्मेति न कल्पते, घृत च स्थापितं सत् यावत् पश्चे यावद्देशोना पूर्वकोटी, तथाहि—पूर्वकोट्यायुषा केनापि साधुना वर्षाष्टकप्रमाणेन कस्याश्चित्पूर्वकोट्यायुषोऽगारिण्याः पार्श्वे घृतं ययाचे, तयोक्तं—क्षणान्तरे दास्यामि, साधुना चान्यत्र घृतं लब्ध, ततः सा श्रमणीतेव तावद् घृतं धृतवती यावत् साधोरायुः, ततो मृते साधौ तदन्यत्रोपयुक्तमिति नास्ति स्थापना, इह वर्षाष्टकस्याधः पूर्वकोट्युपरि च चारित्रं न भवति, चारित्रिणं चाधिकृत्य स्थापनादोषः, ततो देशोना पूर्वकोटीत्युक्तम् । एवं गुडादेरप्यविनाशिनो द्रव्यस्य यथायोगं स्थापनाकालपरिमाणं द्रष्टव्यं । 'कुथितमपि'त्ति कुथितमपि कस्मादिरूपतया कृतमपि यावन्तं कालमविनाशि तावत्कालं तस्य स्थापना द्रष्टव्या, परतस्तु कुथितत्वादुज्झ्यते एवेति भावः ॥ यदेवं क्षीरादिक परम्परास्थापितमुक्त, साम्प्रतमिक्षुरसादिकमपि परम्परास्थापितमाह—

रस कक्कब पिंडगुल मच्छंडिय खंडसक्कराण च । होइ परपरठवणा अणत्थ य जुज्जए जत्थ ॥ २८३ ॥

व्याख्या—इह केनापि साधुना किमपि प्रयोजनमुद्दिश्य कोऽपीक्षुरसं याचितः, स च भविष्यवचन्-क्षणान्तरे दास्यामि, साधुना चान्यत्रेक्षुरसो लब्धः, पूर्वमभ्यर्थितश्च श्रमणीव इव तमिक्षुरसं क्वाथं करोति यावत् शर्करोति, एषां चेक्षुरसकक्कवादीनामुत्तरोत्तरपिण्ड

उत्क्रमादिपर्यायापादनपुरस्सरं ध्रियमाणानां स्थापना परम्परास्थापना, एवमन्यत्रापि ग्रामान्तरे यत्रैव परम्परया स्थापना क्रियते तत्र पर म्परास्थापना द्रष्टव्या । यावच्च स्थापितस्य नाधाकर्मसम्भवस्तावदासार्थिकं कल्पते, क्षपणाकारम्भं तु न कल्पते । सम्प्रति 'हत्थगय घरं भाव' इति व्याचिख्यासुराह—

भिक्खागाही एगत्थ कुणइ बिइओ उ दोसु उवओगं । तेण पर उक्खित्ता पाहुडिया होइ ठवणा उ ॥ २८४ ॥

व्याख्या—भिक्षाग्राही एकत्रोपयोगं करोति, द्वितीयस्तु द्वयोर्गृहयोः, तत्र त्रिषु गृहेषूपयोगसम्भवे स्थापनादोषो न भवति, परं उत्क्षिप्तं साध्वर्थमुत्पाट्य भिक्षा प्राभृतिका स्थापना भवति ॥ उक्तं स्थापनाद्वारं, सम्प्रति प्राभृतिकाद्वारमभिधित्सुराह—

पाहुडियावि हु दुविहा बायर सुहुमा य होइ नायव्वा । ओसक्कणमुस्सक्कण कव्वट्ठीए समोसरणे ॥ २८५ ॥

व्याख्या—द्विविधा प्राभृतिका, तद्यथा—बादरा सूक्ष्मा च, एकैकापि द्विधा, तद्यथा—अवष्वष्कणेनोत्ष्वष्कणेन च, सूत्रे चाच विभक्तिलोपः प्राकृतत्वात्, तत्र 'अवष्वष्कणं' स्वयोगमलयानियतकालावधेरर्वाक्करणम् 'उत्ष्वष्कणं' परतः करणं, तत्र बादरप्राभृतिका विषयमाह—'कल्पस्थीए समोसरणे' इह समयपरिभाषया कल्पस्थी कथ्यते दारिका भण्यते तस्याः सत्कस्य, उपलक्षणमेतत्, पुत्रादेश्च उत्कस्य वीवाहस्यावष्वष्कणमुत्ष्वष्कणं वा 'समवसरणे' साधुसमुदायविषये, इयमत्र भावना—साधुसमुदायं यथाविहारक्रममायातं दृष्ट्वा कोऽपि श्रावकश्चिन्तयति, यथा—ज्योतिर्विन्निरूपितेऽ विवाहदिने यदि विवाहः क्रियते ततोऽर्वागेव यथाविहृतमितो विहारक्रमेण गमि ष्यति ततो न किमपि मदीयं विवाहसम्भवं मोदकादिकं वस्त्रपात्रादि वोपकरिष्यते, तत एवं चिन्तयित्वाऽर्वाग् विवाहं करोति, यदि वा भूयान् दुर्भिक्षमितो यथाविहारक्रमपागमनं भूयते यीवाहस्य तदागमनादर्वाक् ततो न किमपि तेषां मदीयमुपकरिष्यतीति, तत

भक्तादि सा बादरा प्राभृतिका ॥

एवं विचिन्त्य परतो वीवारं करोति, इदं च विनाऽऽस्यावनयनकरणमुत्सर्पणं वा कृत्वा यदुपस्क्रियते भक्तादि सा बादरा प्राभृतिका ॥

सम्प्रत्युपसर्पणरूपां सूक्ष्मप्राभृतिकां भाष्यकृद्गाथाद्वयेनाह—

कत्तामि ताव पेलु तो ते देहामि पुत्त ! मा रोव । तं जइ सुणेइ साहू न गच्छए तत्थ आरंभो ॥ ३५ ॥ (भा०)

अत्तह उट्ठिया वा तुज्झवि देमित्ति किंपि परिहरति । किह वाणि न उट्ठिहिसी ? साहुपभावेण लब्भामो ॥३६॥ (भा०)

व्याख्या—काचित्कर्तनं कुर्वती भोजनं याचमानं बालकं प्रति वदति-कृणन्मि तावदिदं 'पेलु' रूतपूणिकां, कृन्तामीति 'कथु' 'तेग्ने' इत्यस्य रौप्यादिकस्य प्रयोगः, ततः पश्चात् 'ते' तुभ्यं दास्यामीति मा रोदीः, अत्रान्तरे च साधुरागतो यदि शृणोति तर्हि तत्र गृहे न गच्छति, न तत्र भिक्षां गृह्णातीत्यर्थः, मा भूत्साधुनिमित्त आरम्भो बालकभोजनदानवदनन्तरहस्तधावनादिरूपः, सा हि साध्वर्थं सुरियता सती बालकस्यापि भोजनं प्रदाति, ततो हस्तधावनादिनाऽप्कायादिकं च विनाशयति, इह रूतपूणिकाकर्तनसमाप्त्यनन्तरं दाव्यतया बालकाय प्रतिज्ञाते भोजने साधुनिमित्तमर्वागुत्थानेन यदर्वागेव बालकस्य भोजनदानं तदवसर्पणम्, अथवा गृहस्था कर्तनं कुर्वती भोजनं याचमानं पुत्रं प्रति वदति-'अन्यार्थम्' अन्येन प्रयोजनेनोत्थिता सती 'तथापि' तुभ्यमपि किमपि खादिमादि दास्यामि, अत्रान्तरे च साधुरागत एवं श्रुते परिहरति, अथवा तथाभूतप्रत्यावचनानाकर्णनेऽपि साधौ समागते बालको जननीं वदति-कथमिदानीं नोत्थास्यसि ?, समागतो ननु साधुस्ततोऽवश्यमुत्थातव्यं त्वया, तथा च सति साधुप्रभावेण वयमपि लप्स्यामहे, तत एवं बालकवचनं श्रुत्वा तथा दीयमानं परिहरति, मा भूदवसर्पणरूपसूक्ष्मप्राभृतिकादोषः । सम्प्रत्युत्सर्पणरूपां सूक्ष्मप्राभृतिकां गाथाद्वयेनाह—

मा ताव भ्रख पुत्तय! परिवाडीए इहेहि सो साहू । एयस्स उट्ठिया ते बाह सोउं विवज्जेइ ॥ २८६ ॥

अहवा—अगुलियाए घेत्तु कड्ढइ कप्पट्ठओ घर जत्तो । किंति कहिए न गच्छइ पाहुडिया एस सुहुमा उ ॥ २८७ ॥

व्याख्या—इह काचिद्गृहस्था भोजन याचमानं पुत्र मतिपादयति—हे पुत्रक! मा तावज्जल्प—वार वारं जल्प, इह परिपाट्या साधुरा गमिष्यति तस्वस्स्यार्थमुत्थिता सती 'ते' तुभ्यं दास्यामि, अत्रान्तरे च साधुरागत इदं वचः श्रुत्वा विवर्जयति, मा भूदुत्सर्प्पणरूपसूक्ष्मप्राभृतिकादोषः, अत्रावाग् विघसितस्य भोजनदानस्य साधुभिक्षादानेन सम परतः करणमुत्सर्प्पणम् , अथवा मातृकने जनन्योक्ते वाक्येन श्रुते सति स 'कप्पट्ठओ' बालकस्त साधुमङ्गुल्या गृहीत्वा यतो निजगृहं ततः समाकर्षति, ततः साधुस्तं बालकं पृच्छति—यथा किं मामाकर्षसि ?, ततः स यथावस्थितं कथयति, बालकत्वेन ऋजुत्वात् , ततः कथिते तत्र न गच्छति, मा भूदुत्सर्प्पणरूपसूक्ष्मप्राभृतिकादोषसम्पर्कः, एषा सर्वाऽप्यनन्तरोक्ता सूक्ष्मप्राभृतिका । सम्प्रति 'जम्बूद्वीप समोसरणे' इत्यवयवं व्याचिख्यासुः प्रथमतोऽवष्वष्कणरूपां बादरप्राभृतिकामाह—

पुत्तस्स विवाहदिण ओसरणे अइच्छिए मुणिय सड्ढी । ओसक्कतोसरणे संखडिपाहेणगववहा ॥ २८८ ॥

व्याख्या—पुत्रस्य, उपलक्षणमेतत् पुत्रिकादेश्च, विवाहदिने ज्योतिर्विदा 'अवसरणे' साधुसमुदाये यथाविहारक्रममतिक्रान्ते अन्यत्र गते सत्युपदिश्यमानं श्रुत्वा श्राद्धी विवाहमवष्वष्कते, अर्वाग्दिनं दृष्ट्वा विवाह करोति, किमर्थम् ?, इत्याह—'समवसरणे' षष्ठी सप्तम्योरर्थे प्रत्यभेदात्समवसरणस्य—साधुसमुदायस्य विवाहरूपायां संखड्यां मरेणकं—मोदकादि द्रव्यं—वस्त्रकम्पनादि तदर्थ—तद्दानार्थं, भावना च प्रथमगाथायामेव कृता ॥ उत्सर्प्पणरूपां बादरप्राभृतिकामाह—

अप्पत्तमि य ठविय ओसरणे होहिइत्ति उस्सक्कण ।

व्याख्या—स्थापितं विवाहदिनं किलामासे—यथाविहारक्रममनागते 'अवसरणे' साधुसमुदायरूपे भविष्यति, ततो न किमपि यदीयं विवाहसत्कं साधूनामुपकरिष्यतीतिकृत्वा विवाहस्योत्सर्पणं करोति, साधुसमागमकाल एव करोतीत्यर्थः । उक्ता बादरा प्राभृतिका । साम्प्रतं द्विविधाया अवष्वष्कणोत्सर्पणरूपायाः कर्तारं प्रतिपादयति—

त पागडमियरं वा करेइ उज्जू अणुज्जू वा ॥ २८९ ॥

व्याख्या—'ताम्' अवष्वष्कणोत्ष्वष्कणरूपां द्विविधामपि ऋजुः प्रकटं करोति, सकलजननिवेदनेन करोति, अनृजुरितरत्—प्रच्छन्नं, यथा न कोऽपि जानातीति भावः, तत्र यदि प्रकटं करोति तर्हि तां जनपरम्परात एव ज्ञात्वा परिहरन्ति, अथाप्रकटं तर्हि निपुणं शोधयित्वा वर्जयन्ति, निपुणशोधनेऽपि यदि कथमपि न परिज्ञानं भवति तदा न कश्चिद्दोषः, परिणामस्य शुद्धत्वात् ॥ अथ किमर्थं बादरम् ष्वष्कणादिकं करोति ?, तत्राह—

मगलहेउं पुन्नट्ठया व ओसक्कियं दुहा पगयं । उस्सक्कियंपि किंति य पुट्ठे सिट्ठे विवज्जंति ॥ २९० ॥

व्याख्या—'प्रकृतं' विवाहादिकं 'द्विधा' द्वाभ्यां प्रकाराभ्यामवष्वष्कितं भवति, तद्यथा—'मङ्गलहेतोः' वीवाहे गृहस्य साधुचरणैः स्पर्शनं तेभ्यो दानं च मङ्गलायेतिकृत्वा, यद्वा—पुण्यार्थम्, एवमुत्ष्वष्कितमपि द्विधा, ततो निपुणपृष्ठं किमिदम् ? इति पृष्टे गृहस्थेन च यथावस्थिते कथिते तद्विवाहसत्कं परिहरन्ति, मा भूदादरभावृत्तिकादोषानुषङ्ग इति । ये तु न परिहरन्ति तेषां दोषमाह—

पाहुडिभत्त भुंजइ न पडिक्कमए अ तस्स ठाणस्स । एमेव अडइ बोडो लुक्खविलुक्खो जह कवोडो ॥ २९१ ॥

व्याख्या—यः प्राभृतिकाभक्त भुङ्क्ते न च तस्मात् प्राभृतिकापरिभोगरूपात् स्थानात्प्रतिक्रामति स 'बोडः' मुण्ड एवमेव-निष्फ लमटति यथा रुक्षविरुक्षः कपोतः । उक्तं प्राभृतिकाद्वारम्, अथ प्रादुष्करणद्वारं विभणिषुः प्रथमतस्तत्सम्भवं गाथापञ्चकेनाह—

लोयविरलुत्तमंग तवोकिस जल्लखउरियसरीर । जुगमेत्तंतरदिट्ठिं अतुरियचवल सगिहमिंत ॥ २९२ ॥

दट्ठूण य अणगार सड्ढी संवेगमागया काइ । विपुलन्नपाण घेत्तूण निग्गया निग्गओ सोऽवि ॥ २९३ ॥

नीयदुवारंमि घरे न सुज्झई एसणंति काऊण । नीहमिए अगारी अच्छइ विलिया व गहिएणं ॥ २९४ ॥

चरणकरणालसंमि य असंमि य आगए गहिय पुच्छा । इहलोग परलोग कहेइ चइउं इमं लोगं ॥ २९५ ॥

नीयदुवारंमि घरे भिक्खं निच्छंति एसणासमिया । जं पुच्छसि मज्झ कहं कप्पइ लिंगोवजीवीऽहं ॥ २९६ ॥

साहुगुणेसणकहणं आउट्टा तंमि तिण्णइ तहेव । कुक्कुडि चरंति एए वयं तु चिन्नव्वया धीओ ॥ २९७ ॥

व्याख्या—क्वचित् श्राविका 'अनगारं' साधुमेकाकिविहारिणं लोचविरलोत्तमाङ्गम्, अत्रोत्तमाङ्गशब्देनोत्तमाङ्गस्थाः केशा उच्यन्ते, तपोऽग्नपर्यः—स्तोकेन विरलोत्तमाङ्गेऽत्र तपःकृशं मलकल्लुषितशरीरं युगमात्रान्तरन्यस्तदृष्टिम् अत्वरितमचपलं स्वगृहमागच्छन्तं संवेगमागता, ततो प्रचुरं विपुलं भक्तं पानं च गृहीत्वा प्रागण्यादिनिर्गता सोऽपि च साधुर्नीचद्वारोऽस्मिन् घरे न शुध्यति एषे

रयणपईवे जोई न कप्पइ पगासणा सुविहियाणं । अत्तट्ठि अपरिभुत्त कप्पइ कप्पं अकाऊणं ॥ २९९ ॥

व्याख्या—प्रादुष्करणं द्विधा, तद्यथा—प्रकटकरणं प्रकाशकरणं च, तत्र 'प्रकटकरणम्' अन्धकारादपसार्य बहिः प्रकाशे स्थापनं, 'प्रकाशकरणं' स्थानस्थितस्यैव भित्तिरन्ध्रकरणादिना प्रकटीकरणम्, एतदेवाह—तत्र प्रकटकरणमन्धकारादन्यत्र सङ्क्रामणेन प्रकाशकरणं, 'कुड्डदारपाए' इत्यादि, अत्र सर्वत्रापि तृतीयार्थे सप्तमी, कुड्यस्य द्वारपातेन—रन्ध्रकरणेन, यदिवा कुड्येन मूलत एव छिन्नेन येन कुड्येन कुट्यैकदेशेन वाऽन्धकारमासीत् तेन मूलत एवापनीतेनेत्यर्थः, चशब्दादन्यस्य द्वारस्य करणेन चेत्यादिपरिग्रहः, तथा 'रत्नेन' पद्मरागादिना 'प्रदीपेन' प्रतीतेन 'ज्योतिषा' ज्वलता वैश्वानरेण तथैव प्रकाशना सुविहितानां न कल्पते, किमुक्तं भवति ?—प्रकाशकरणेन प्रकटकरणेन च यदीयते भक्तादि तत्साधूनां न कल्पते, तत्रैवापवादमाह—'अत्तट्ठि'त्ति आत्मार्थीकृतं तदपि कल्पते, नवरं ज्योतिःप्रदीपौ वर्जयेत्, ताभ्यां प्रकाशितमात्मार्थीकृतमपि न कल्पते, तेजस्कायप्रदीप्तसंस्पर्शनात्, साधुपात्रमाश्रित्य विधिमाह—इह भस्मसात्कारादिना प्रादुष्करणदोषाभावात् कथमपि भक्तं पानं वा गृहीतं तत्स्वतः अपरिभुक्तम् उपलक्षणमेतत् अर्द्धभुक्तमपि परित्याज्यो द्वरितसिक्थपुञ्छनादिना स्वाभिन्नेऽपि तस्मिन् पात्रे 'कल्पं' जलमसाञ्चनरूपमकृत्वाप्यन्यत् शुद्धं प्रतीतं कल्पते । एतदेव गाथाद्वयं विवरीषुः प्रथमतश्चुल्लीसङ्क्रमणमाश्रित्य प्रकटकरणं स्पष्टयति—

सचारिमा य चुल्ली बर्हि च चुल्ली पुरा कया तेसिं । ताहि रधंति कयाई उवरही पूई य पाओ य ॥ ३०० ॥

व्याख्या—इह त्रिधा चुल्ली, तद्यथा—एका सञ्चारिमा या गृहाभ्यन्तरवर्तिन्यपि बहिरानेतुं शक्यते, चशब्दात्साऽप्याधाकर्मिकी

…त्या, द्वितीया चरितेन तेषां साधूनां निमित्तं शुद्धी पुरा कृता आसीत्, यच्चेदानीं या साधुनिमित्त परिशुद्धी कृता वेदितव्या, च तृतीया। ततो यदि कराचित्तम तिसृणां शुद्धीनामन्यतमस्यां गृहस्था राध्यन्ति ततो द्वौ दोषौ, तद्यथा—उपकरणप्राविः प्रादुष्करणं च, यदा च शुद्ध्याः पृथक्कृतं तदेवं यस्तु तदा प्रादुष्करणरूप एवैकः केवलो दोषः, पूतिदोषस्तूत्तीर्णः, यदा शुद्धयोऽपि शुद्धास्तदापि प्रादुष्करणरूप एवैको दोषः। यदर्थं प्रादुष्करण गृहस्था कृतवती तं भिक्षार्थे गृहमागच्छन्तं दृष्ट्वा यच्छुस्वेन भाषते तदाह—

नेच्छह तमिसम्मि तओ बाहिरचुल्लीएँ साहु सिद्धण्णे। इय सोउ परिहरए पुट्ठे सिट्ठम्मिवि तहेव ॥ ३०१ ॥

व्याख्या—हे साधो! त्वं 'तमिस्रे' अन्धकारे भिक्षां नेच्छसि ततो बहिश्चुल्ल्यां सिद्धं पक्वम् 'अन्न'मिति अस्माभिर्भक्तमिति श्रुत्वा तया दीयमानं परिहरति, प्रादुष्करणदोषदुष्टत्वात्, तथा प्रादुष्करणशङ्कायां किमर्थमयमाहारोऽद्य गृहस्य बहिस्तात्पक्वः?, इत्येवं पृष्टे तया ऋजुतया यथावस्थिते कथिते तथैव परिहरति, एतेनाद्यगाथायां 'संक्रमण' इत्यवयवो व्याख्यातः। नन्वयं सङ्क्रामणकृत आहारः केनापि प्रकारेण कल्पते? किं वा न? इति, उच्यते, आत्मार्थीकृतः कल्पते, कथमस्यात्मार्थीकरणसम्भव? इति चेदत आह—

मच्छियघम्मा अंतो बाहिं पवाय पगासमासन्न। इय अत्तट्ठियगहण पागडकरणे विभासेयं ॥ ३०२ ॥

व्याख्या—सार्वर्थं पूर्वं बहिश्चुल्ल्यादि कृत्वा काचिदेवं चिन्तयति—गृहस्यान्तर्मक्षिका घर्मश्च, उपलक्षणमेतत्, तेनान्धकारं दूरं च पाकस्थानाद्भोजनस्थानमित्यादिपरिग्रहः, बहिस्तु प्रवातं तेन मक्षिकादयो न भवन्ति, तथा प्रकाशमासन्नं च पाकस्थानाद्भोजनस्थानं, ततो यथमभेदात्मनिमित्तमपि सदैव पक्ष्याम इत्येवमात्मार्थीकृते ग्रहणं, कल्पते इति भावः। इयं प्रकटकरणे कल्प्याकल्प्यविषया विभाषा, सम्प्रति प्रकाशकरणं स्पष्टयन् 'कुड्डदारपाए' इत्यादि व्याचिख्यासुराह—

रयणपईवे जोई न कप्पइ पगासणा सुविहियाणं । अत्तट्ठि अपरिभुत्त कप्पइ कप्पं अकाऊणं ॥ २९९ ॥

व्याख्या—प्रादुष्करणं द्विधा, तद्यथा–प्रकटकरणं प्रकाशकरणं च, तत्र 'प्रकटकरणम्' अन्धकारादपसार्य बहिः प्रकाशे स्थापनं, 'प्रकाशकरणं' स्थानस्थितस्यैव भित्तिच्छिद्रकरणादिना प्रकटीकरणम्, एतदेवाह—तत्र प्रकटकरणमन्धकारादन्यत्र सङ्क्रामणेन प्रकाशकरण, 'कुड्डदारपाए' इत्यादि, अत्र सर्वत्रापि तृतीयार्थे सप्तमी, कुड्यस्य द्वारपातेन—द्वारकरणेन, पश्चिमा कुड्येन मूलत एव छिन्नेन येन कुड्येन कुड्यैकदेशेन वाऽन्धकारमासीत् तेन मूलत एवापनीतेनेत्यर्थः, चशब्दादन्यस्य द्वारस्य करणेन चेत्यादिपरिग्रहः, तथा 'रत्नेन' पद्मरागादिना 'प्रदीपेन' प्रतीतेन 'ज्योतिषा' व्यक्तया वैश्वानरेण तथैव प्रकाशना सुविहितानां न कल्पते, किमुक्तं भवति ?–प्रकाशकरणेन प्रकटकरणेन च यदीयते भक्तादि तत्संयतानां न कल्पते, तत्रैवापवादमाह—'अत्तट्ठि 'त्ति आत्मार्थीकृत तदपि कल्पते, नवरं ज्योतिःप्रदीपौ वर्जयेत्, ताभ्यां प्रकाशितमात्मार्थीकृतमपि न कल्पते, तेजस्कायदीप्तिसंस्पर्शनात्, साधुपात्रमाश्रित्य विधिमाह—इह सहसाकारादिना प्रादुष्करणदोषाघ्रात कथमपि भक्तं पानं वा गृहीतं ततस्तत् अपरिभुक्तम् उपलक्षणमेतत् भर्द्धभुक्तमपि परित्याज्यो द्वरितसित्थकुसुमादिना स्वरक्षितेऽपि तस्मिन् पात्रे 'कल्प' जलप्रक्षालनरूपमकृत्वाप्यन्यत् शुद्ध ग्रहीतु कल्पते । एतदेव गाथाद्वय विवरीषुः प्रथमतश्चुल्लीसङ्क्रमणमाश्रित्य प्रकटकरणं व्याख्याति—

सच्चारिमा य चुल्ली बहिं व चुल्ली पुरा कया तेसिं । तहि रधति कयाई उभही पूई य पाओ य ॥ ३०० ॥

व्याख्या—इह त्रिधा चुल्ली, तद्यथा—एका सञ्चारिमा या गृहाभ्यन्तरवर्तिन्यपि बहिरानेतुं शक्यते. पश्चाद्दात्साऽप्याधाकर्मिकी

प्रथमा, द्वितीया मरिचेन तेषां साधूनां निमित्तं शुद्धी पुरा कृता आसीत्, पश्चात्पेदानीं या साधुनिमित्तं बहिःशुद्धी कृता चेदितव्या, सा च तृतीया। ततो यदि कदाचित्तत्र तिसृणां शुद्धीनामन्यतमस्यां गृहस्थी राध्यन्ति ततो द्वौ दोषौ, तद्यथा—उपकरणप्रतिः प्रादुष्करणं च, यदा च शुद्ध्याः पृथक्कृतं तदेवं यस्तु यदा प्रादुष्करणरूप एवैकः केवलो दोषः, प्रतिदोषस्तूत्तीर्णः, यदा शुद्धयोऽपि शुद्धास्तदापि प्रादुष्करणरूप एवैको दोषः। यदर्थं प्रादुष्करणं गृहस्था कृतवती तं भिक्षार्थे गृहमागच्छन्तं दृष्ट्वा यथाकुतेन भाषते तदाह—

नेच्छइ तमिसम्मि तओ बाहिरचुल्लीएँ साहु सिद्धण्णे। इय सोउ परिहरए पुट्ठे सिट्ठम्मि तहेव ॥ ३०१ ॥

व्याख्या—हे साधो! त्वं 'तमिस्रे' अन्धकारे भिक्षां नेच्छसि ततो बहिश्चुल्ल्यां सिद्धं पक्वम् 'भक्त'मिति अस्माभिर्भक्तमिति श्रुत्वा तया दीयमानं परिहरति, प्रादुष्करणदोषदुष्टत्वात्, तथा प्रादुष्करणशङ्कायां किमर्थमयमाहारोऽद्य गृहस्य बहिस्तात्पक्वः?, इत्येवं पृष्टे तया ऋजुतया यथावस्थिते कथिते तथैव परिहरति, एतेनाद्यगाथायां 'सङ्क्रमण' इत्यस्यतो व्याख्यातः। नन्वयं सङ्क्रामणकृत आहारः केनापि प्रकारेण कल्पते? किं वा न? इति, उच्यते, आत्मार्थीकृतः कल्पते, कथमस्यात्मार्थीकरणसम्भव? इति चेदत आह—

मच्छियघम्मा अतो बाहिं पवाय पगासमासन्नं। इय अत्तट्ठियगहणं पागडकरणे विभासेयं ॥ ३०२ ॥

व्याख्या—साध्वर्थं पूर्वं बहिश्चुल्ल्यादि कृत्वा काचिदेवं चिन्तयति—गृहस्यान्तर्मक्षिका घर्मश्च, उपलक्षणमेतत्, केनापकारं दूरं च पाकस्थानाद्भोजनस्थानमित्यादिपरिग्रहः, बहिश्च प्रवातं तेन मक्षिकादयो न भवन्ति, तथा प्रकाशमासन्नं च पाकस्थानाद्भोजनस्थानं, ततो प्रथममेवात्मनिमित्तमपि सदैव पक्ष्याम इत्येवमात्मार्थीकृते ग्रहणं, कल्पते इति भावः। इयं प्रकटकरणे कल्प्याकल्प्यविषया विभाषा, सम्प्रति प्रकाशकरणं स्पष्टयन् 'कुड्डदारपाए' इत्यादि व्याचिख्यासुराह—

कुड्डस्स कुणइ छिड्डं दार वड्ढेइ कुणइ अन्न वा । अवणेइ छायण वा ठावइ रयण व दिप्पंत ॥ २०३ ॥
जोइ पईवे कुणइ व तहेव कहणं तु पुच्छ तुट्ठे वा । अच्चट्ठिए उ गहण जोइ पईवे उ वज्जित्ता ॥ २०४ ॥

व्याख्या—प्रकाशकरणार्थं कुड्यस्य छिद्रं करोति, यद्वा द्वारं लघु सत् 'वर्द्धयति' बृहत्तरं करोति, यद्वाऽन्यद्द्वितीयं द्वारं करोति, अथवा गृहस्योपरितनं छादनं स्फेटयति, यद्वा दीप्यमान रत्नं स्थापयति, यद्वा—ज्योतिः प्रदीपं वा करोति, तथैवानन्तरोक्तेन प्रकारेण स्वयमेव यद्वा पृष्टे सति प्रादुष्करणे कथिते प्रभक्तादि प्रादुष्करणदोषदुष्टं तत् साधूनां न कल्पते। यदि पुनः प्राक्तनेन प्रकारेणात्मार्थीकरोति तदा ग्रहणं कल्पते इति भावः । ज्योतिःप्रदीपाभ्यां प्रकाशमात्मार्थीकृतमपि न कल्पते, तेजस्कायसंस्पर्शात् । सम्प्रति 'अपरिसुद्धं कप्पइ कयं अकाऊणं' इति व्याचिख्यासुराह—

पागडपयासकरणे कयंमि सहसा व अहवऽणाभोगा । गहिय विगिंचिऊण गेण्हइ अन्न अकयकप्पे ॥ २०५ ॥

व्याख्या—प्रकटकरणे प्रकाशकरणे वा कृते सति यत् सहसाऽनाभोगतो वा गृहीत तत् 'विगिंचिऊण' परिष्ठाप्य तस्मिन् पात्रे तस्मिन् उक्तं प्रादुष्करणद्वारम्, अथ क्रीतद्वारमाह—

कीयगडपि य दुविहं दव्वे भावे य दुविहमेक्केक्क । आयकियं च परकियं परदव्वं तिविह चित्ताई ॥ २०६ ॥

व्याख्या—क्रयणं क्रीतं तेन कृतं-निष्पादितं क्रीतकृतं, क्रीतमित्यर्थः, तदपि प्रास्तां प्रादुष्करणमित्यपिशब्दार्थः 'द्विविधं' द्वि

कारं, तद्यथा—'दव्वे भावे य' अत्र तृतीयार्थे सप्तमी, ततोऽयमर्थः—द्रव्येण क्रीत भावेन च क्रीतमित्यर्थः, पुनरप्येकैकं द्रव्यक्रीतं भावक्रीतं च प्रत्येकं द्विधा, तद्यथा—आत्मक्रीतं परक्रीतं च, आत्मद्रव्यक्रीतमात्मभावक्रीतं च परद्रव्यक्रीतं परभावक्रीतं चेत्यर्थः, तत्रात्मना—स्वयमेव द्रव्येणोज्जयन्तमगवत्प्रतिमाशेषादिरूपेण प्रदानतः परमावर्ज्य भक्तादि गृह्यते तदात्मद्रव्यक्रीतं, यत्पुनरात्मना स्वयमेव भक्ताद्यर्थं धर्मकथादिना परमावर्ज्य भक्तादि ततो गृह्यते तदात्मभावक्रीतं, तथा यत् परेण साधुनिमित्तं द्रव्येण क्रीतं तत्परद्रव्यक्रीतं, यत्पुनः परेण साध्वर्थं निजविज्ञानप्रदर्शनेनापरमावर्ज्य ततो गृहीतं तत्परभावक्रीतं, तत्र 'विचित्रा सूत्रगति'रिति प्रथमतः परद्रव्यक्रीतस्य स्वरूपमाह—परद्रव्यं—परस्यसत्कं द्रव्यं त्रिविधं, तद्यथा—'चित्तादि' सचित्तमचित्तं मिश्रं च, तेन परेण साध्वर्थं यत्क्रीतं तत्परद्रव्यक्रीतम् ॥ उक्तं परद्रव्यक्रीतं, सम्प्रति शेष भेदत्रयं सामान्यतः कथयति—

आयकिय पुण दुविहं दव्वे भावे य दव्व चुन्नाई । भावंमि परस्सट्ठा अहवावी अप्पणा चेव ॥ ३०७ ॥

व्याख्या—आत्मक्रीतं पुनर्द्विविधं, तद्यथा—'दव्वे भावे य' इति अत्रापि तृतीयार्थे सप्तमी, ततोऽयमर्थः—आत्मनाऽपि क्रीतं द्विधा, तद्यथा—द्रव्येण भावेन च, तत्र द्रव्येण—चूर्णादिना वक्ष्यमाणेन, भावेन पुनः परस्य—साधोरर्थाय पश्चिनविज्ञानप्रदर्शनादिनोपार्ज्यते तत्परभावक्रीतं, परभावक्रीतमित्यर्थः, अथवा भावेन यदात्मना स्वयमेवाहारार्थं धर्मकथादिना परमावर्ज्य ततो गृह्यते तदात्मक्रीतम्, आत्मभावक्रीतमित्यर्थः । तदेवं सामान्यतस्त्रयोऽपि भेदा उक्ताः, सम्प्रत्यात्मद्रव्यक्रीतं सप्रपञ्चं विभणिषुरिदमाह—

निम्मल्लगंधगुलिया वन्नय पोत्ताइ आयकय दव्वे । गेलन्ने उड्डाहो पउणे चडुगारि अहिगरणं ॥ ३०८ ॥

व्याख्या—'निर्माल्यं' तीर्थोदिगतसमगावमविमानोपा 'गन्धाः' पटवासादयः 'गुलिका' मुखे मक्षेपकस्य स्वरूपपरावर्तादिकारिका गुटिका 'वर्णकः' चन्दनं 'पोतानि' लघुवासकयोग्यानि वस्त्रखण्डानि, आदिशब्दात्स्नपनादिपरिग्रहः, एतानि कार्ये कारणोपचारादाहद्रव्यक्रीतानि, किमुक्तं भवति?—निर्माल्यादिप्रदानेन परमात्मव्यं यततो भक्तादि गृह्यते तदात्मद्रव्यक्रीतमिति। अत्र दोषानाह—'गेलन्ने' इत्यादि, निर्माल्यप्रदानानन्तरं यदि कथमपि दैवयोगतो म्लानता भवति तर्हि 'प्रवचनस्योड्डाहः' साधुनाऽहं ग्लानी कृत इत्यादि प्रजल्पनतः शासनस्य मालिन्योत्पत्तेः, अथ कथमपि 'प्रगुणः' नीरोगो भवति तर्हि स सर्वदा सर्वजनसमक्षं चाटुकारी भवति, यथाऽहं साधुना प्रगुणीकृतोऽतिशयी चासौ साधुः सकलभावव्युत्पन्नः परिवनिरत इत्यादि समक्षं परोक्षं वा सदैव प्रशंसां करोति, तथा च सत्यधिकरणं-भूयस्तस्याधिकरणप्रवृत्तिः, तादृशीं हि तस्य प्रशंसामाकर्ण्यान्योऽन्याः समागत्य तं साधुं निर्माल्यगन्धादि याचते, तत्स्वप्रार्थनापरवशाः अधिकरणमपि समारभते। सम्प्रति परभावक्रीतं विवृण्वन्नाह—

वइयाइ मखमाई परभावकय तु संजयट्ठाए। उप्पायणा निमंतण कीडगडं अभिहडे ठविए॥ ३०९॥

व्याख्या—'व्रजिका' लघुगोकुलम्, उपलक्षणमेतत्, तेन पत्तनादिपरिग्रहः, तत्र व्रजिकादौ 'मङ्खादिः' मङ्खः—केदारको यः पटमुपदर्श्य लोकमावर्जयति, आदिशब्दात्तथाविधान्यपरिग्रहः, भक्तिवशात् संयतार्थं यत् घृतदुग्धादेरुत्पादनं करोति कृत्वा च निमन्त्रयति तत्परभावक्रीतं, परेण—मङ्खादिना संयतार्थं भावेन—स्वपटप्रदर्शनादिरूपेण क्रीतं परभावक्रीतम्, इत्थंभूते च परभावक्रीते त्रयो दोषाः, एकं तावत्क्रीतं, द्वितीयमन्यस्मादन्यस्माद्गृहादानीतमित्यभ्याहृतम्, आनीयानीय चैकत्र साधुनिमित्तं स्थाप्यत इति स्थापितं, तस्मादेतदपि साधूनां न कल्पते। एतदेव गाथाद्वयेन स्पष्टयन्नाह—

सागारि मख छवण पडिसेहो पुच्छ यहु गँए वासे। कयरिं दिसिं गमिस्सह? अमुइ तहिं सथव कुणइ ॥ ३१० ॥

दिज्जंते पडिसेहो कज्जे घेत्य निमतण जइण। पुव्वगय आगएसुं संछुहई एगगेहम्मि ॥ ३११ ॥

व्याख्या—शालिग्रामो नाम ग्रामः, तत्र देवशर्माभिधानो मङ्खः, तस्य च गृहैकदेशे कदाचित् केचित् साधवो वर्षाकालमवस्थिताः, स च मङ्खस्तेषां साधूनामनुष्ठानमरक्तद्विष्टत्वं चोपलभ्यातीव भक्तिपरीतो बभूव, प्रतिदिवसं च भक्तादिना निमन्त्रयति, साधवश्च शय्यातरपिण्डोऽयमिति प्रतिषेधन्ति, ततः स चिन्तयामास—यद्येते मम गृहे भक्तादि न गृह्णन्ति यदि पुनरन्यत्र दापयिष्यामि तथापि न ग्रहीष्यन्ति, तस्माद्वर्षाकालमनन्तरं यत्रामी गमिष्यन्ति तत्राग्रे गत्वा कथमप्येतेभ्यो दापयामीति, ततः स्तोकशेषे वर्षाकाले साधवस्तेन पप्रच्छिरे—यथा भगवन्! वर्षाकालानन्तरं कस्यां दिशि गन्तव्यम्?, ते च यथार्थं कथयामासुः—यथाऽमुकस्यां दिशि, ततः स तस्यामेव दिशि क्वचिद्गोकुले निजपटमुपदर्श्य वचनकौशलेन लोकमावर्जितवान्, लोकश्च तस्मै घृतदुग्धादिकं दातुं प्रावर्तिष्ट, ततः स बभाण—यदा पात्रे (याचे) तदा दातव्यमिति, साधवश्च वर्षाकालानन्तरं यथाविहारक्रमं तत्राजग्मुः, तेन चात्मानमज्ञापयता पूर्वमविशिष्टघृतदुग्धादिकं प्रविश्य याचित्वैकत्र च गृहे संमील्य मुक्तं, ततः साधवो निमन्त्रिताः, तैश्च यथाशक्ति छद्मस्थदृष्ट्या परिभावितं, परं न लक्षितं, ततः शुद्धमितिकृत्वा गृहीतं, न च तेषां तथा गृह्णतां कश्चिद्दोषः, यथाशक्ति परिभावनेन भगवदाज्ञाया आराधितत्वात्, यदि पुनरित्थंभूतं कथमपि ज्ञायते तर्हि नियमतः परिहर्तव्यं, क्रीताभ्याहृतस्थापनारूपदोषत्रयसद्भावादिति। सूत्रं सुगमं, नवरं 'सागारिकः' शय्यातरः 'संस्तवः' परिचयः, निजपटप्रदर्शनेन लोकावर्जनमिति तात्पर्यार्थः। तदेवमुक्तं परभावक्रीतं, सम्प्रत्यात्मभावक्रीतं स्पष्टयन्नाह—

धम्मकह वाय खमण निमित्त आयावणे सुयट्ठाणे। जाई कुल गण कम्मे सिप्पम्मि य भावकीयं तु ॥ ३१२ ॥

व्याख्या—धर्मकथादिषु भावक्रीतं भवति, इयमत्र भावना—यत् परधिवान्नर्जनार्थं धर्मकथां वादं 'क्षपणं' षष्ठाष्टमादिरूपं तपो निमित्तमाख्यानं वा करोति, यद्वा—श्रुतस्थानमाचार्योऽहमित्यादिकं कथयति, यद्विवा जातिं कुलं गणं शिल्पं कर्म वा परेभ्य प्रकटयति, इत्थं च परमावर्ज्य यत्ततो भक्तादि गृह्णाति तदात्मभावक्रीतं, यदा तु दुःखक्षयार्थं कर्मक्षयार्थं च धर्मकथादिकं यथायोगं करोति तदा स प्रवचनप्रभावकतया महानिर्जराभाग् भवति, उक्तं च—"पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य। विज्जा सिद्धो य कई अट्ठेव पभावगा भणिया ॥ १ ॥" सम्प्रति धर्मकथारूपं प्रथमं द्वारं प्रपञ्चयितुमाह—

धम्मकहाअक्खित्ते धम्मकहाउट्टियाण वा गिण्हे। कहइंति साहवो च्चिय तुमं व कहिं पुच्छिए तुसिणी ॥ २१२ ॥

व्याख्या—आहारार्थं धर्मकथां कथयता यदा ते श्रोतारो धर्मकथया सम्यगाक्षिप्ता भवन्ति तदा तेषां पार्श्वे याचते, ते हि तदा सन्तोऽभ्यर्थिता न तिष्ठन्ति, यद्वा—धर्मकथात उत्थितानां सतां तेषां पार्श्वे गृह्णाति तदात्मभावक्रीतम्, आत्मना—स्वयमेव स्वरूपेण क्रीतमात्मभावक्रयमिति, यद्वा—धर्मकथाकथकः कोऽपि प्रसिद्धो वर्तते, तदनुरूपाकारश्च विवक्षितः साधुः, ततस्तं न्ति—यः 'कथी' धर्मकथाकथकः श्रूयते, स किं त्वम्? इति, ततः स भक्तादिलोभादेवं वक्ति—यथा साधव एव प्रायो धर्मकथा ..., यद्विवा तूष्णीं—मौनेनावतिष्ठते, ततस्ते श्रावका जानन्ते—यथा स एवायं, केवलं गम्भीरत्वादात्मानं न साक्षाद्वचसा वा प्रभूततरं तस्मै प्रयच्छन्ति, तच्च तेभ्यः प्रभूततरं लभ्यमानमात्मभावक्रीतम्, आत्मना—स्वयमेव भावेन—स्वय यकः सोऽहं कथक इति ज्ञापनलक्षणेन क्रीतमितिकृत्वा। अथवा—

---

१ प्रवचनी धर्मकथी वादी नैमित्तिकः तपस्वी च। विद्यावान् सिद्धश्च कविरष्टावेव प्रभावका भणिताः ॥ १ ॥

किं वा कहिज्ज छारा दगसोयरिआ व अहव ऽगारत्था । किं छगलगगलवलया मुंडकुडुंबीव किं कहए? ॥ २१४ ॥

व्याख्या—यो जगति निपुणो धर्मकथाकथकः भूयते स किं त्वम् ? इति पृष्ट एवमुपरमाह—किं 'क्षाराः' क्षारावगुण्ठितवपुषः कथयेयुः ?, नैव ते कथयन्ति, किं वा दकशौकरिका ? दकं–जलं तस्य निरन्तर विनाशकतया शौकरिका इव पापर्द्धिकारिण इव वा दकशौकरिकाः–सांख्यपाः, किं वा 'अगारस्थाः' गृहस्था शास्त्राध्ययनाध्यापनविकलाः ?, यद्वा किं छागलकस्य–पशोर्गलं–ग्रीवां वलयन्ति–मोटयन्ति ये ते छागलकगलवलकाः, यदि वा किं मुण्डाः सन्तो ये कुडुम्बिन शौद्धोदनीयास्ते कथयेयुः ?, नैव ते कथयन्ति, किन्तु यतय एव, तत एवमुक्ते भावकाश्चिन्तयन्ति–नूनं स एवायं धर्मकथाकथक इत्यादि तदेव शेषं द्रष्टव्यं । तदेवं धर्मकथाद्वारं व्याख्याय शेषाण्यतिदेशेन व्याख्याति—

एमेव वाइ खमए निमित्तमायावगम्मि य विभासा । सुयठाणं गणिमाई अहवा वाणायरियमाई ॥ २१५ ॥

व्याख्या—यथा धर्मकथाकथके विभाषा–भावना कृता 'एवमेव' अनेनैव प्रकारेण 'वादिनि' क्षपके निमित्तके आतापके च विभाषा कर्त्तव्या, यथा वादेनाक्षिप्तं याचते, यद्वा–ये वादिन भूयन्ते ते किं यूयम् ? इति प्रश्ने भावो यतय एव वादिनो भवन्तीति ब्रूते, यद्वा–मौनेनावतिष्ठते, यद्वा—किं भस्मावगुण्ठितवपुषः ?, किं वा दकशौकरिका यदि वा भिक्षुजातीया यद्वा शौद्धोदनीया वादमेवं वदन्, नैव ते वदन्ति किन्तु यतयः, एवमुक्ते ते एवं परिजानते–यथा स एवासौ, ततो विशिष्टमाहारादिकं तस्मै वितरन्ति, तच तथा प्रभूतं लभ्य मानमात्ममानप्रत्ययसेयं । तथा श्रुतस्थानं–गण्यादि, तत्र 'गणित्वम्' आचार्यत्वम् आदिशब्दात् उपाध्यायत्वादिपरिग्रहः, यद्वा वाचना

चार्यत्वं, भाविशब्दात् मवर्त्तकत्वादिपरिग्रहः, तत्र मत्कार्यर्षमाचार्या वयमुपाध्याया वयमित्यादि जनेभ्यः मकाशयति येन जना आचार्यत्वादिकमवगम्य मभूततरं वितरन्ति, यद्वा—ये आचार्या महाविद्वांसः श्रूयन्ते ते किं यूयम्? इत्यादि तथैव भावनीय, जात्यादिकं स्वेव दर्यं कथयति येन समानं जात्यादिकमुत्कृष्टं च शिल्पादि ज्ञात्वा मभूतं मयच्छन्ति, तत्र तथा मभूतं लभ्यमानमात्मभावकीर्त । तदेवमुक्तं क्रीतद्वारं, सम्प्रति मामित्यद्वारमाह—

पामिच्चंपि य दुविहं लोइय लोगुत्तरं समासेण । लोइय सज्झिलगाई लोगुत्तर वत्थमाईसु ॥ ३१६ ॥

व्याख्या—मामित्यमपि समासेन 'द्विविधं' द्विमकारं, तद्यथा—लौकिकं लोकोत्तरं च, तत्र लोके भवं लौकिकं, तच्च साधुविषय 'सज्झिलगाई' सज्झिलगा—भगिनी, आदिशब्दाद्भ्रात्रादिपरिग्रहः तस्मिन्, किमुक्तं भवति?—भगिन्यादिभिः क्रियमाणं द्रव्यमिति, अत्र च भगिनीशब्देन कथानकं सूचितं, तदग्रे स्वयमेव वक्ष्यति, लोकोत्तरं मामित्यं 'वस्त्रादिषु' वस्त्रादिविषयं साधूनामेव परस्परमवसेयम् । इह 'लौकिकं भगिन्यादौ' इत्युक्तं, तत्र भगिन्युदाहरणमेव गाथात्रयेण मकटयति—

सुयअभिगमनाय विही बहि पुच्छा एग जीवइ ससा ते । पविसण पाग निवारण उच्छिदण तेल्ल जइदाण ॥३१७॥

अपरिमिय नेहवुड्डी दासत्त सो य आगओ पुच्छा । दासत्तकहण मा रुय अचिरा मोएमि एचाहे ॥ ३१८॥

भिक्खवग्गसमारंभे कहणाउट्टो कहिंति वसहिंचि । संविग्ग आहरण त्रिसज्जु कहणा कड्वया उ ॥ ३१९ ॥

व्याख्या—कोशलाविषये कोऽपि ग्रामस्तत्र देवराजो नाम कुटुम्बी, सारिकाभिधा तस्य भार्या, तस्याश्च सम्मतममुखाः सुताः

परमभावकं, यथा तस्मिन्नेव ग्रामे शिवदेवो नाम श्रेष्ठी, तस्य भार्य-
सुताः, सम्मतिप्रभृतयश्च प्रभूता दारिकाः, तच्च सकलमपि कुटुम्बं परमभावकं, यथा तस्मिन्नेव ग्रामे शिवदेवो नाम श्रेष्ठी, तस्य भार्य-
शिष्य, अन्यदा च समुद्रघोषाभिधा सूरयः समागच्छन्, तेषां समीपे जिनप्रणीतं धर्ममाकर्ण्य जातसंवेगः सम्मतो दीक्षां गृहीतवान्,
कालक्रमेण च गुरुचरणमध्यदृष्टोऽपि गीतार्थः समजनि । स चान्यदा चिन्तयामास—यदि मदीयः कोऽपि प्रव्रज्यां गृह्णाति ततः शोभनं
भवति, इदमेव हि वास्तिवकमुपकारकरणं यत्संसारार्णवादुद्धरणमिति, तत एवं चिन्तयित्वा गुरूनापृच्छ्य निजबन्धुग्रामे समागमत्, तत्र च
यतिः प्रदेशे कमपि परिणतवयसं पृष्टवान् पुरुष—यथाऽत्र देवराजाभिधस्य कुटुम्बिनः सत्कः कोऽपि विद्यते ? इति, स आह—मृते सर्वे
ऽपि तस्य कुटुम्बे केवलमेका सम्मत्यभिधा विधवा पुत्रिका जीवतीति, ततः स तस्या गृहे जगाम, सा च भ्रातरमायान्तं दृष्ट्वा मनसि बहु
मानमुद्वहन्ती वन्दित्वा कश्चित्कालं पर्युपास्य च तस्मिन्निवमाकारे पक्तुमुपतस्थे, साधुश्च तां निवारितवान्—यथा न कल्पतेऽस्माकमस्य
निमित्तं किमपि कृतमिति, ततो भिक्षावेलायां सा दुर्गतत्वेनान्यत्र कुत्रचिदपि तैलमात्रमप्यलभमाना कथमपि शिवदेवाभिधस्य वणिजो विप-
णेस्तैलपलिकाद्वयं दिने दिने द्विगुणवृद्धिरूपेण कालान्तरेण समानीय भ्रात्रे दत्तवती, भ्राता च तं वृत्तान्तमजानता शुद्धमिति ज्ञात्वा गृहीत-
वान्, सा च तद्दिनं भ्रातुः सकाशे धर्मं श्रुतवती, तेन न पानीयानयनादिना तत्तैलपलिकाद्वयं प्रवेशयितुं प्रभावितवती, द्वितीये च दिने
भ्राता (यथा) विहारक्रमं गतः, ततस्तस्मिन्नपि दिने तद्वियोगजशोकाकीर्णमानसतया न तत्तैलपलिकाद्वयं द्विगुणीभूतं प्रवेशयितुं शक्तवती, तृतीये
च दिने कर्षद्वयमूल्ये जाते तथाविधभूतत्वात् प्रवेशयितुं शक्ता, अपि च भोजनमपि पानीयानयनादिना कर्तव्यं, ततो भोजनायेव पर्याप्तौ
सकलमपि दिनं जगामेति न क्षणं प्रवेशयितुं शक्नोति, ततो दिने दिने द्विगुणवृद्ध्या प्रवर्द्धमानमृणमपरिमितघटप्रमाणं जातं, ततः श्रेष्ठिना
सा भणिता—यथा मम तैलं देहि यद्वा मे दासी भव, ततः सा तैलं दातुमसमर्था सती दासत्वं प्रतिपेदे, कियत्सु च वर्षेष्वतिक्रान्तेषु भूयो

ऽपि सम्मताभिप्राय साधुस्तस्मिन्नेव ग्रामे यथाविहारक्रममागमत्, सा च भगिनी स्वगृहे न दृष्टा, तत आगता सती पप्रच्छे, तया च प्राचीनः सर्वोऽपि व्यतिकरस्तस्मै न्यवेदि यावदहमस्मै शिवदेवगृहे जातमिति, निवेद्य च स्वदुःखं रोदितुं प्रवृत्ता, ततः साधुरवोचत्—मा रोदीः अचिरादहं त्वां मोचयिष्यामि, ततस्तस्या मोचनोपायं चिन्तयन् प्रथमतः शिवदेवस्यैव गृहे प्रविवेश, श्रेष्ठिना च तस्य भिक्षादानार्थं जलेन हस्तौ प्रक्षालयितुं लग्ना, तां च साधुर्निवारयामास, यथेयमस्माकं न कल्पते भिक्षेति, ततः समीपदेशवर्ती श्रेष्ठी प्रोवाच—कोऽत्र दोषः ?, ततः साधुः अप्कायविराधनादीन् दोषान् यथागमं सविस्तरमचीकथत् ततः स आवृत्तो भणति यथा भगवन् ! कुत्र युष्माकं वसतिर्येन तत्रागता वयं धर्मं शृणुमः तत साधुरवादीत्—नास्ति मेऽद्यापि प्रतिश्रयः, ततस्तेन निजगृहैकदेशे वसतिर्दायि, प्रतिदिनं च धर्मं शृणोति, सम्यक्त्वमणुव्रतानि च प्रतिपन्नानि, साधुश्च कथाचनापि वासुदेवादिपूर्वपुरुषाचीर्णाननेकानभिग्रहान् व्यावर्णयामास, यथा वासुदेवेनायमभिग्रहो जगृहे—यदि मदीयः पुत्रोऽपि प्रव्रज्यां जिघृक्षति ततोऽहं न निवारयामीत्यादि, एवं च श्रुत्वा शिवदेवोऽप्यभिग्रहं गृहीतवान्—यदि भगवन् ! मदीयोऽपि कोऽपि प्रव्रज्यां प्रतिपद्यते ततोऽहं न निवारयामीति, अत्रान्तरे च शिवदेवस्य तनयो ज्येष्ठः सा च साधुभगिनी सम्प्रवृत्तौ प्रव्रज्यां ग्रहीतुमुपतस्थे, श्रेष्ठिना च तौ द्वावपि विसर्जितौ, ततः प्रव्रज्यां प्रतिपन्नाविति । सुगमं द्वारगमं, केवलं 'श्रुताधिगमजातविधिः' श्रुताधिगमात् जातो विधिः—क्रियाविधिर्येन स तथा, अत्राह—नन्वेतत्स्वामित्वं साधुना विशेषतो ग्रहीतव्यं, परम्परया प्रव्रज्याकारणत्वात्, अत आह—'कइवया उ' एवंविधा गीतार्था विशिष्टश्रुतविशेषो देशनाविधिनिपुणाः कतिपया एव भवन्ति, न भूयांसः, कतिपयानामेव च प्रव्रज्यापरिणामः, ततः स्वामित्वं सोपायेन । उक्ता देशविषये स्वामित्वे दोषपक्षाः, सम्प्रत्यतिदेशेन वस्त्रादिविषये दोषानभिधित्सुराह—

एए चेव य दोसा सविसेसयरा उ वत्थपाएसु । लोइयपामिच्चेसुं लोगुत्तरिया इमे अन्ने ॥ ३२० ॥

मृताः, सम्मतिमभृत्यम ममूसा दारिकाः, तथ सकलमपि कुटुम्बं परमधावक, तया धात्मभव प्राप ... ... ...
मिया, मन्यदा च समुद्रघोषाभिधाः सूरयः समागच्छन्, तेषां समीपे जिनमणीतं धर्ममाकर्ण्य जातसंवेगः सम्मतो दीक्षां गृहीतवान्,
क्रमक्रमेण च गुरुचरणप्रसादतोऽजनि गीतार्थः सम्मतिः। स चान्यदा चिन्तयामास—यदि मदीयः कोऽपि प्रव्रज्यां गृह्णाति तदा शोभनं
भवति, इदमेव हि वात्सिल्यमुपकारकरणं यत्संसारार्णवादुत्तारणमिति, तत एवं चिन्तयित्वा गुरूनापृच्छय निजबन्धुग्रामे समागमत्, तत्र च
यतिः मवेशे कमपि परिणतवयसं पृष्टवान् पुरुषं—यदत्र देवराजाभिधस्य कुटुम्बिनः सत्कः कोऽपि विद्यते? इति, स आह—मृतं सर्व
मपि तस्य कुटुम्बं केवलमेका सम्मत्यभिधा विधवा पुत्रिका जीवतीति, ततः स तस्या गृहे जगाम, सा च भ्रातरमायान्तं दृष्ट्वा मनसि बहु
मानमुद्वहन्ती वन्दित्वा कञ्चित्कालं पर्युपास्य च तन्निमित्तमाहारं कर्तुमुपचक्रमे, साधुश्च तां निवारितवान्—यथा न कल्पतेऽस्माकमस्य
निमित्तं किमपि कृतमिति, ततो भिक्षावेलायां सा दुर्गतत्वेनान्यत्र क्वचिदपि तैलमात्रमप्यलभमाना कथमपि शिवदेवाभिधस्य वणिजो विप-
णेस्तैलपलिकाद्वयं दिने दिने द्विगुणवृद्धिरूपेण कलान्तरेण समानीय भ्रात्रे दत्तवती, भ्राता च तं वृत्तान्तमजानता शुद्धमिति ज्ञात्वा प्रति-
जगृहे, सा च तदिन भ्रातुः सकाशे धर्मं श्रुतवती, तेन न पानीयानयनादिना तत्तैलपलिकाद्वयं प्रवेशयितुं प्रपारितवती, द्वितीये च दिने
भ्राता (यथा) विहारक्रमं गतः, ततस्तस्मिन्नपि दिने तद्वियोगशोकाकीर्णमानसतया न तत्तैलपलिकाद्वयं द्विगुणीभूतं प्रवेशयितुं शकितवती, तृतीये
च दिने कर्षद्वयमूल्ये जाते तद्वाक्यमभूत्त्वात् प्रवेशयितुं शक्तम्, अपि च भोजनमपि पानीयानयनादिना कर्तव्यं, ततो भोजनार्थेन यत्नविधौ
सत्यमपि दिने जागमेति न ऋणं प्रवेशयितुं शक्नोति, ततो दिने दिने द्विगुणवृद्धया प्रवर्द्धमानमृणमपरिमितघटप्रमाणं जातं, ततः श्रेष्ठिना
॥ भणिते—यथा मम तैलं देहि यद्वा मे दासी भव, ततः सा तैलं दातुमशक्नुवती दासत्वं प्रतिपेदे, कियत्सु च वर्षेष्वतिक्रान्तेषु भूयो

ऽपि सम्मताभिप्रः साधुस्तस्मिन्नेव ग्रामे यथाविहारक्रममागमत्, सा च भगिनी स्वगृहे न दृष्टा, तत आगता सती पृष्टा, तया च प्राचीनः सर्वोऽपि व्यतिकरस्तस्मै न्यवेदि यावदासर्वं शिवदेवगृहे जातमिति, निवेद्य च स्वदुःखं रोदितुं प्रवृत्ता, ततः साधुरवोचत्—मा रोदी रचिरादहं त्वां मोचयिष्यामि, ततस्तस्या मोचनोपायं चिन्तयन् प्रथमतः शिवदेवस्यैव गृहे प्रविवेश, शिवा च तस्य भिक्षादानार्थं भक्तेन हस्तौ प्रक्षालयितुं लग्ना, तां च साधुर्निवारयामास, यतोऽस्माकं न कल्पते भिक्षेति, ततः समीपदेशवर्ती श्रेष्ठी प्रोवाच—कोऽत्र दोषः ?, ततः साधुः रप्कायविराधनादीन् दोषान् यथागमं सविस्तरमचीकथत् ततः स श्राद्धो भणति यथा भगवन्! कुत्र युष्माकं वसतिर्येन तत्रागता वयं धर्मं शृणुमः तत साधुरवादीत्—नास्ति मेऽद्यापि प्रतिश्रयः, ततस्तेन निजगृहैकदेशे वसतिरदायि, प्रतिदिनं च धर्मं शृणोति, सम्यक्त्वमणुव्रतानि च प्रतिपन्नानि, साधुश्च कदाचनापि वासुदेवादिपूर्वपुरुषाचीर्णाननेकजनभिग्रहान् व्यावर्णयामास, यथा वासुदेवेनाप्यभिग्रहो जगृहे—यदि मदीयः पुत्रोऽपि प्रव्रज्यां जिघृक्षति ततोऽहं न निवारयामीत्यादि, एवं च श्रुत्वा शिवदेवोऽप्यभिग्रहं गृहीतवान्—यदि भगवन्! मदीयोऽपि कोऽपि प्रव्रज्यां प्रतिपद्यते ततोऽहं न निवारयामीति, अत्रान्तरे च शिवदेवस्य तनयो ज्येष्ठः सा च साधुभगिनी सम्भावितः प्रव्रज्यां ग्रही तुमुपस्थिते, श्रेष्ठिना च तौ द्वावपि विसर्जितौ, ततः प्रव्रज्यां प्रतिपन्नाविति। सूत्रं सुगमं, केवलं 'श्रुताधिगमज्ञातविधिः' श्रुताधिगमात् ज्ञातो विधि—क्रियाविधिर्येन स तथा, अत्राह—नन्वेतस्मामिर्त्यं साधुना विनेयतो प्रतीतव्यं, परम्परया प्रव्रज्याकारणत्वात्, अत आह—'कइवया उ' एतद्विधा गीतार्था विशिष्टश्रुतविदो देशनाविधिनिपुणाः कतिपया एव भवन्ति, न भूयांस, कतिपयानामेव च प्रव्रज्यापरिणामः ततः मामित्यं सोपायेव। तदेवं तैलविषये भाविते दोष उक्तः, सम्प्रत्यतिदेशेन घृतादिविषये दोषानभिधित्सुराह—

एए चेव य दोसा सविसेसयरा उ मत्थपाएसुं। लोइयपाभिच्चेसु लोगुत्तरिया इमे अन्ने ॥ ३२० ॥

व्याख्या—' एते एव ' दासत्वादयो दोषा वस्त्रपात्रविषयेषु लौकिकेषु मामित्येषु सविशेषतरा निगडादिनियन्त्रणपुरस्सरा द्रष्टव्याः, ' लोकोत्तरिकाः ' लोकोत्तरमामित्यविषया पुनरिमेऽन्ये दोषाः, तानेवाह—

मइलिय फालिय खोसिय छियलट्ठे चावि अन्न मग्गते । अवि सुंदरेवि दिण्णे दुक्कररोई कलहमाई ॥ १२१ ॥

व्याख्या—इह द्विधा लोकोत्तरं मामित्यं—कोऽपि कस्यापि सत्कमेवं वस्त्रादि ग्रहाति यथा कियद्दिनानि परिभुज्य पुनरपि ते समर्पयिष्यामि, कोऽपि पुनरेवम्-एतावद्दिनानामुपरि तवैतत्सदृशमपरं वस्त्रादि दास्यामि, तत्र प्रथम प्रकारे ' मलिनिते ' शरीरादिमलेन क्लेदिते यदिवा पाटितेऽथवा ' खोसिते ' जीर्णभावे कृते यदि वा चौरादिना हृते यद्वा—कापि मार्गपतिते कलहादयो दोषाः । द्वितीये च प्रकारेऽन्यद्वस्त्रादिकं याचमानो याचमानस्य ' अपिः ' सम्भावनायां ' सुन्दरेऽपि ' पूर्वमुक्तादृस्त्रादेर्विशिष्टतरेऽपि दत्ते कोऽपि दुष्करचर्चिर्भवति, महता कष्टेन तस्य रुचिरापादयितुं शक्यते, ततस्तमधिकृत्य कलहादयो दोषाः सम्भवन्ति, तस्माल्लोकोत्तरमपि मामित्यं न कर्तव्यम् । यथैतापवादमाह—

उवयाए दाण दुल्लभ खग्गूड अलस पामिच्चे । तंपि य गुरुस्स पासे ठवेइ सो देइ मा कलहो ॥ १२२ ॥

व्याख्या—इह दुर्लभे वस्त्रादौ सीदतः साधोर्येदि वस्त्रादिकमपरेण साधुना दातुमिष्यते तर्हि तस्य ' उपकृतया ' भक्तितया दानं कर्तव्यं, न मामित्यकरणेन, तथा यः ' खग्गूडः ' कुटिलो वैयावृत्यादौ न सम्यक् वर्तते योऽपि चालसः तौ दुर्लभवस्त्रादिदानप्रलोभने नापि वैयावृत्यं कारयेत्, ततस्तद्विषयं मामित्यं सम्भवति, तत्रापि तदीयमानं वस्त्रादिकं दायको गुरोः पार्श्वे स्थापयेत्, न स्वयं दद्यात्, ततः स गुरुर्ददाति, मा भूदन्यथा तयोः परस्परं कलह इतिकृत्वा ॥ उक्तं मामित्यद्वारम्, अधुना परावर्तितद्वारमभिधित्सुराह—

परियट्टियपि दुविह लोइय लोगुत्तर समासेण । एक्केक्कंपि अ दुविहं तद्दव्वे अन्नदव्वे य ॥ ३२३ ॥

व्याख्या—'परिवर्तितमपि' उक्तशब्दार्थं 'समासेन' संक्षेपेण द्विविधं, तद्यथा—लौकिकं लोकोत्तरं च, एकैकमपि द्विविधं, तद्यथा—'तद्रव्ये' तद्द्रव्यविषयम् 'अन्यद्रव्ये' अन्यद्रव्यविषयं च, तत्र तद्द्रव्यविषयं यथा कुथितं घृतं दत्त्वा साधुनिमित्तं सुगन्धि घृतं गृह्णातीत्यादि, अन्यद्रव्यविषयं यथा कोद्रवकूरं समर्पयित्वा साधुनिमित्तं शाल्योदनं गृह्णातीत्यादि, इदं च लौकिकम्, एवं लोकोत्तरमपि भावनीयं । सम्प्रति लौकिकस्योदाहरणं गाथात्रयेणाह—

अवरोप्परसज्झिलगा संजुत्ता दोवि अन्नमन्नेण । पोग्गलिय सजयट्ठा परियट्टण सखडे बोही ॥ ३२४ ॥

अणुकंप भगिणिगेहे दरिद्द परियट्टणा य कूरस्स । पुच्छा कोद्दवकूरे मच्छर णाइक्खस पंतावे ॥ ३२५ ॥

इयरोऽविय पतावे निसि ओसवियाण तेसि विक्खा य । तम्हा उ न घेत्तव्व कइ वा जे ओसमेहिंति ॥ ३२६ ॥

व्याख्या—वसन्तपुरे नगरे निलयो नाम श्रेष्ठी, तस्य सुदर्शना नाम भार्या, तस्या द्वौ पुत्रौ, तद्यथा—क्षेमङ्करो देवदत्तश्च, लक्ष्मीनामा च दुहिता, तत्रैव वसन्तपुरे तिलको नाम श्रेष्ठी, सुन्दरी नाम तस्य महेला, तस्या धनदत्तः पुत्रो बन्धुमती दुहिता, तत्र क्षेमङ्करः समितसूरीणामुपकण्ठे दीक्षां गृहीतवान्, देवदत्तेन च बन्धुमती धनदत्तेन च लक्ष्मीः परिणीता, अन्यदा च कर्मवशतो धनदत्तस्य दारिद्र्यमुपतस्थे, ततः स प्रायः कोद्रवकूरं भुङ्क्ते, देवदत्तश्चेश्वरः, ततः स सर्वदैव शाल्योदनं भुङ्क्ते, अन्यदा च स क्षेमङ्करः साधुर्यथाविहारक्रमं समाजगाम, स च चिन्तयामास—यदि देवदत्तस्य भ्रातुर्गृहे गमिष्यामि ततो मे भगिनी दारिद्र्येणात्यभिभूता ततो

न मम गृहे साधुरपि भ्राता समुचीर्णं इति परिमर्षं मंस्यते इति, ततोऽनुकम्पया तस्या एव गृहे प्रविवेश, भिक्षावेलायां च तया लक्ष्म्या चिन्तितं—यथैकं तावदयं भ्राता द्वितीयं साधुः तृतीयं प्राघूर्णकः, मम च गृहे कोद्रवकूरः, स कथमस्मै दीयते?, शाल्योदनश्च मम गृहे न विद्यते, ततो भ्रातृजायाया धन्धुमत्याः सकाशात् कोद्रवौदनपरावर्तनेन शाल्योदनमानीय ददामीति तथैव कृतम्, अत्रान्तरे च देवदत्तो भोजनार्थं स्वगृहमागतः, धन्धुमत्या च पप्रच्छे यथाऽद्य कोद्रवौदनो जेमितव्यः, तेन चाविज्ञातपरिवर्तनवृत्तान्तेन चिन्तितं—यथाऽनया कृपणतया कोद्रवौदनो राद्धो न शाल्योदनः, ततस्तां ताडयितुमारेभे, सा च ताड्यमाना प्राह—किं मां ताडयसि ?, तवैव भगिनी कोद्रवौदनं मुक्त्वा शाल्योदनं नीतवती, धनदत्तस्यापि च भोजनार्थमुपविष्टस्य यः शाल्योदनः क्षेमङ्करस्य दीयमान उद्धरितः स गौरवेण लक्ष्म्या परिवेषितः, ततस्तेन सा पृष्टा—कुतोऽयं शाल्योदनः ?, तया कथितः सर्वोऽपि तथा वृत्तान्तः, श्रुत्वा च तं वृत्तान्तं चुक्षोभ धनदत्तो—यथा हा ! पापे ! किमिति त्वया मानमेकं शालेः पक्त्वा साधवे शाल्योदनो न दत्तो यत्परगृहादानयनेन मम मालिन्यमापादितं, ततस्तेनापि सा ताडिता, साधुना चायं वृत्तान्तो गृहद्वयवर्ती सर्वोऽपि जनपरम्परातः शुश्रुवे, ततो निशि सर्वेऽपि तानि प्रतिबोधितानि, यथेत्थमस्माकं न कल्पते परमजानता मया गृहीतम्, अत एव च कलहादिदोषसङ्क्रमशास्त्रगतता प्रतिषिद्धः, ततो जिनप्रणीतं धर्मं सविस्तरं कथितवान्, जातः सर्वेषामपि संवेगो, दत्ता च दीक्षा तेषां सर्वेषामिति । सूत्रं सुगमं, नवरम् 'अवरुप्परसज्झिलगा' इति लक्ष्मीदेवदत्तौ धन्धुमतीधनदत्तौ परस्परं 'सज्झिलगौ' भ्रातरौ, ते च 'द्वे अपि' लक्ष्मीधन्धुमत्यौ 'अन्नमन्नेणं'ति अन्योऽन्यमपि सम्बद्धे देवदत्तस्य भगिनी लक्ष्मीर्धनदत्तेन धनदत्तस्यापि भगिनी धन्धुमती देवदत्तेन परिणीता इत्यर्थः, 'पोग्गलिय'त्ति पौद्गलिकस्य शाल्योदनस्य 'संपत्तार्थं' क्षेमङ्करसाधुनिमित्तं परिवर्तनं कृतं, तत्र 'संखडे' कलहस्ततः 'बोधिः' प्रव्रज्या, अस्या

एत गाथाया विवरणभूतमुत्तरं गाथाद्वयं, तदपि च सुगमं, नवरं 'पच्छर 'त्ति विभक्तिलोपात् मत्सरेण 'नाइस्स 'त्ति परिवर्तनेऽकथिते 'वंदावे' अवाप्यत, 'उवसमियाण'त्ति उपशमितानां, ननु परिवर्तनमपीदं प्रज्ञापना कारणं बभूव ततो विशेषत साधुभिरिदमाचरणी-यमत आह–' कह य 'त्ति कति वा क्रियन्तो वा सेमङ्कुरसाधुसदृशा भविष्यन्ति ये इत्थं परिवर्तनसमुत्थं कलहमपनीय प्रव्रज्यां ग्राह यिष्यन्ति, तस्मान्नैवेदमाचरणीयम् । उक्तं लौकिकं परिवर्तनम्, अथ लोकोत्तरं वक्तव्यं, तत्र यत् साधुः साधुना सह वस्त्रादिपरि वर्तनं करोति तल्लोकोत्तरं परिवर्तनं, तत्र दोषानुपदर्शयति—

ऊणहिय दुब्बलं वा खर गुरु छिन्न मइल असीयसहं । दुव्वन्नं वा नाउं विपरिणमे अन्नभणिओ वा ॥ ३२७ ॥

व्याख्या—वस्त्रपरिवर्तने कृते सतीदं न्यूनं यत्तु मदीयं वस्त्रं बभूव तन्मानयुक्तं—प्रमाणोपपन्नं, यद्वा इदमधिकं मदीयं पुनर्मान क्रमेण सर्वत्र भावना, नवरं 'दुर्बलं' जीर्णप्रायं 'खरं' कर्कशस्पर्शं 'गुरु' स्थूलसूत्रनिष्पन्नतया भारयुक्तं 'छिन्न' निपुष्पकं मलिनं' मलाविलम् 'अशीतसहं' शीतरक्षणासमर्थं' 'दुर्वर्णं' विरूपच्छायम्, इत्येवंभूतं स्वयमेव ज्ञात्वा 'विपरिणमेत्' भूयोऽप्यमिति नयेत्, यद्वा–अन्येन प्रभुना मत्पूर्वेण भणित उद्भासितो विपरिणमेत् । अत्रैवापवादमाह—

एगस्स माणजुत्त न उ बिइए एवमाइ कज्जेसु । गुरुपामूले ठवण सो वलयइ अन्नहा कलहो ॥ ३२८ ॥

व्याख्या—एकस्य साधोर्वस्त्रं सत्कं यत् भवति तस्य 'मानयुक्तं' प्रमाणोपपन्नं वस्त्रादि, न द्वितीये–द्वितीयस्य साधोर्वस्त्रं सत्कं तस्य मानयुक्तं, किन्तु ?—न्यूनमधिकं वा, तत एवमादिषु कार्येषु समुत्पन्नेषु परिवर्तनस्य सम्भवो भवति, तत्र परिवर्तनस्य सम्भवे

यस्य सत्कं वद्धस्ति तेन गुरुपादमूले तस्य वस्त्रादेः स्थापनं कर्त्तव्यं, गुरुपादमूले मोक्तव्यमित्यर्थः, ततो वृत्तान्तः कथनीयः, वृत्तान्ते च कथिते सति स गुरुर्ददाति 'अन्यथा' गुरुपादमूलस्थापनाद्यभावे 'कलहः' परस्परं राटि सम्भवतीति । उक्तं परिवर्तितद्वारम्, अभ्याहृतद्वारमाह—

आइन्नमणाइन्नं निसीहऽभिहडं च नोनिसीहं च । निसिहाभिहडं ठप्प वोच्छामी नोनिसीहं तु ॥ ३२९ ॥

व्याख्या—अभ्याहृतं द्विधा, तद्यथा–आचीर्णमनाचीर्णं च, तत्रानाचीर्णं द्विधा, तद्यथा–निशीथाभ्याहृतं नोनिशीथाभ्याहृतं च, तत्र निशीथम्—अर्द्धरात्रं तत्रानीतं किल प्रच्छन्नं भवति, एवं साधूनामपि यदविदितमभ्याहृतं तन्निशीथाभ्याहृतमिव निशीथाभ्याहृतं, तद्विपरीतं नोनिशीथाभ्याहृतं–यत्साधूनामभ्याहृतमिति विदितं भवति, तत्र निशीथाभ्याहृतं स्थाप्यम्, अग्रे वक्ष्यते इति भावः, साम्प्रतं पुनर्वक्ष्यामि नोनिशीथाभ्याहृतं ॥ प्रतिज्ञातमेव निर्वाहयति—

सग्गाम परग्गामे सदेस परदेसमेव बोद्धव्वं । दुविहं तु परग्गामे जलथल नावोडु जघाए ॥ ३३० ॥

व्याख्या—नोनिशीथाभ्याहृतं द्विविधं, तद्यथा–'स्वग्रामे' स्वग्रामविषयं 'परग्रामे' परग्रामविषयं, तत्र यस्मिन् ग्रामे साधुर्निवसति स किल स्वग्रामः, शेषस्तु परग्रामः, तत्र 'परग्रामे' परग्रामविषयमभ्याहृतं द्विविधं, तद्यथा–स्वदेशे परदेशे च, स्वदेशपरग्रामाभ्याहृतं परदेशपरग्रामाभ्याहृतं चेत्यर्थः । तत्र स्वदेशो यत्र देशे मण्डले साधुर्वर्त्तते, शेषस्तु परदेशः । एतद्द्विविधमपि प्रत्येकं द्विधा, तद्यथा—'जलथल'त्ति 'सूचनात्सूत्र'मितिकृत्वा जलपथेनाभ्याहृतं स्थलपथेनाभ्याहृतं च, तत्र जलपथेनाप्यभ्याहृतं द्विधा–नावा उडुपेन च, उपलक्षणमेतत्, तेन स्तोकजलसम्भावनायां जङ्घाभ्यामपि, तत्र नौः–प्रतीता उडुप'–तरणकाष्ठं तुम्बकादि पोतप्रकरणेन गृहीतं द्रष्टव्यं, स्थलपथेनाप्यभ्या

एवं द्विधा, तद्यथा—जङ्घाभ्यां—पद्भ्याम्, उपलक्षणमेतत्, तेन गन्त्र्यादिना च ॥ तथामूनेव जलस्थलाभ्यासुवमेदान् समपञ्चं विभावयन् दोषान् मदर्शयति—

जघा याह तरीइ व जले थले खंध आरखुरनिबद्धा । संजमआयविराहण तहिय पुण संजमे काया ॥ ३३१ ॥

अत्थाहगाहपंकामगरोहारा जले अवाया उ । कंटाहितेणसावय थलंमि एए भवे दोसा ॥ ३३२ ॥

व्याख्या—तत्र जलमार्गे स्तोकजलसम्भावनायां जङ्घाभ्याम् अस्ताघसम्भावनायां बाहुभ्यां यदिवा तरिकया, उपलक्षणमेतत्, उडुपेन चाभ्यागतं सम्भवति, स्थलमार्गे तु स्कन्धेन यद्वा 'आरखुरनिबद्ध'त्ति अत्र तृतीयार्थे प्रथमा, ततोऽयमर्थः—आरकनिबद्धा गन्त्री तथा खुरनिबद्धा रासभबलीवर्दादयस्तैः, अत्र च दोषाः संयमविराधनाऽऽत्मविराधना च, 'तत्र' संयमाऽऽत्मविराधनामध्ये संयमविषया विराधना जलमार्गे स्थलमार्गे च 'काया' अप्कायादयो विराध्यमाना ज्ञातव्याः । जलमार्गे आत्मविराधनामाह—'अत्थाह' इत्यादि, अत्र प्राकृतत्वात् क्वचिद्विभक्तिलोपः क्वचिद्विभक्तिपरिणामश्च, ततोऽयमर्थः—अस्ताघे पदादिभिरलभ्यमानेऽधोभूमागेऽधो निमज्जनलक्षणोऽपायो भवति, तथा 'ग्राहेभ्यः' जलचरविशेषेभ्यः यद्वा 'पङ्क'त्ति कर्दमरूपात् अथवा मकरेभ्यः, यदिवा 'ओहारे'त्ति कच्छपेभ्यः, उपलक्षणमेतत्, अन्येभ्यश्च पाथबन्धकतन्त्वादिभ्यः 'अपायाः' विनाशादयो दोषाः सम्भवन्ति । स्थलमार्गे आत्मविराधनामाह—'कंटे'त्यादि कण्टकेभ्यो यदिवाऽहिभ्यो यद्वा स्तेनेभ्योऽथवा श्वापदेभ्यः, उपलक्षणमेतत्, ज्वराद्युत्पादकपरिश्रमादिभ्यश्च 'स्थले' स्थलमार्गे एते प्रत्यपायरूपा दोषा भवितव्याः ॥ तत्क्रमनाचीर्णं परग्रामाभ्याहृतं नोनिशीथं, सम्प्रति तदेव स्वग्रामाभ्याहृतं नोनिशीथं गाथाद्वयेनाह—

सग्गामेऽवि य दुविहं घरतरं नोघरतरं चेव । तिघरतरा परेण घरतर तं तु नायव्वं ॥ ३२३ ॥

नोघरंतरऽणेगविह वाडगसाहीनिवेसणगिहेसु । काये खंधे मिम्मय कंसेण व त तु आणेज्जा ॥ ३२४ ॥

व्याख्या—' स्वग्रामेऽपि ' स्वग्रामविषयमप्यभ्याहृतं द्विविध, तद्यथा—गृहान्तर नोगृहान्तर च, तत्र त्रिगृहान्तरात् परेण—त्रीणि गृहाण्यन्तरं कृत्वा परतो यदानीत तद्गृहान्तरं, एवं च सति किमुक्तं भवति ?—यद्गृहत्रयमध्यादानीयते उपयोगश्च स(य)त्र सम्भवति तदाचीर्णं मन्तव्यं, नोगृहान्तरमनेकविधं, तच्च वाटकादिविषय, तत्र ' वाटकः ' परिच्छन्न प्रतिनियतः सन्निवेश ' साही ' वर्त्तनी सैवैकाऽपान्तराले विद्यते न तु गृहान्तरमित्यर्थः ' निवेशनम् ' एकनिष्क्रमणप्रवेशानि द्व्यादिगृहाणि ' गृहं ' केवलं मन्दिरम्, एतच्च सकलमपि वाटकादिविषयमनाचीर्णमनुपयोगसम्भवे वेदितव्यं, तदपि च गृहान्तराख्यं नोगृहान्तराख्यं च नोनिशीथं स्वग्रामाभ्याहृतं भक्तिलाभयितुमीप्सितस्य साधोरुपाश्रयमानयेत् कापोत्या यदिवा स्कन्धेन, उपलक्षणमेतत्, तेन करादिना च, यदिवा मृन्मयेन भाजनेन यद्वा कांस्येन ॥ सम्प्रत्यस्यैव स्वग्रामविषयनोनिशीथाभ्याहृतस्य सम्भवमाह—

सुत्तं च असइ कालो पगय व पहेणग व पासुत्ता । इय एइ काइ घेत्तुं दीतेइ य कारण तं तु ॥ ३२५ ॥

व्याख्या—इह साधुर्भिक्षामटन् क्वापि गृहे प्रविष्टः, परं तदानीं ' शून्य ' परिनिर्गतमानुषमासीत्, पश्चादपि तत्र राध्यते इति ' असन् ' अविद्यमानो भिक्षाकाल., यदिवा तत्र प्रकृतं—गौरवार्हस्वजनभोजनादिकं वर्तते, न ततो तदानीं साधवे भिक्षा दातुमपारिता, यदि वा विहृत्य साधोर्गतस्य पश्चात् ' प्रहेणक ' लाहनकमागतं, तद्योत्कटत्वात् किल साधवे दातव्यम्, अथवा तदा श्राविका ' प्रसुप्ता ' यदि

गाऽऽसीत्, ततो न साधवे भिक्षा दत्ता इति, एतैः कारणैः काचित् श्राद्धिका स्वगृहाद्गृहीत्वा साधोरुपाश्रयमानयेत्, तदानयनस्य कारणं यथा शून्यं गृहमासीदित्यादिरूपं 'दीपयति' प्रकाशयति, तत एष नोनिशीथस्वग्रामाभ्याहृतसम्भवः। तदेवमुक्तं स्वग्रामपरग्रामभेदभिन्नं नानिशीथाभ्याहृतम्, अथ स्वग्रामपरग्रामभेदभिन्नमेव निशीथाभ्याहृतमभिधित्सुराह—

एमेव कमो नियमा निसीहअभिहडेऽवि होइ नायव्वो। अविइयमदायगभावं निसीहिअं तं तु नायव्वं ॥ ३३६ ॥

व्याख्या—य एव क्रम स्वग्रामपरग्रामादिको नोनिशीथाभ्याहृत उक्तः स एव निशीथाभ्याहृतेऽपि नियमात् ज्ञातव्य। सम्प्रति निशीथाभ्याहृतस्वरूप कथयति—'अविइय' इत्यादि, अविदितो—यतिना न विज्ञातो दायकस्याभ्याहृतदानपरिणामो यत्र तदविदितदायकभावं निशीथाभ्याहृतमवगन्तव्य, किमुक्त भवति?—यतिना साधुनाऽभ्याहृतत्वेन यदपरिज्ञातं तन्निशीथाभ्याहृतमिति ॥ परग्रामाभ्याहृतस्य निशीथस्य सम्भवं गाथाचतुष्टयेनाह—

अइदूरजलंतरिया कम्मासंकाएँ मा न घेच्छंति। आणंति संखडीओ सड्ढो सड्ढी व पच्छन्नं ॥ ३३७ ॥

निग्गम देउल दाणं दियाइ सब्भाइ निग्गए दाणं। सिट्ठंमि सेसगमणं दिंतऽन्ने वारयतऽन्ने ॥ ३३८ ॥

भुंजण अजीरपुरिमड्ढगाइ अच्छति मुंचसेसं वा। आगमनिसीहिगाई न भुंजई सावगासंका ॥ ३३९ ॥

उक्खिवच निक्खिवपइ आसगयं मल्लगंमि पासगए। सामित्तु गया सड्ढा तेऽवि य मु(सु)द्धा असढभावा ॥ ३४० ॥

व्याख्या—कस्मिंश्चिद्ग्रामे धनाढ्यममता सड्ढः श्रावकाः [illegible]

॥। मन्यरा

तेषामानन्दे भीमाः समभानि, श्रुत्वे च तस्मिन् मधुरं मोदकायुद्धरित, ततस्तैश्चिन्ति—यथैतत्साधुभ्यो दीयतां येन महत्पुण्यमस्मा स्मुपजायते, अथ च केचित्साधवो दूरेऽवतिष्ठन्ते, केचित्पुनः मत्यासन्नाः, परमन्तराले नदी विद्यते, ततस्तेऽप्यप्कायविराधनाभयतो नागमिष्यन्ति, आगता अपि च मधुरं मोदकादिकमवलोक्य कथ्यमानमपि शुद्धमाधाकर्मशङ्कया न ग्रहीष्यन्ति ततो यत्र ग्रामे साधवो निवसन्ति तत्रैव मध्यक्ष गृहीत्वा व्रजाम इति, तथैव च कृतं, ततो भूयोऽपि चिन्तयन्ति—यदि साधूनाहूय दास्यामस्ततोऽशुद्ध माशङ्कय ते न ग्रहीष्यन्ति तस्माद् द्विजादिभ्योऽपि किमपि दद्मः, तत्र तथा दीयमानमपि यदि साधवो न प्रेक्षिष्यन्ते ततस्तदवस्थैव तेषा-मशुद्धाशङ्का भविष्यति ततो यत्रोच्चारादिकार्यार्थं निर्गता सन्तः साधवः प्रेक्षन्ते तत्र दद्म इति, एवं च चिन्तयित्वा विवक्षिते कस्मि-श्चित्प्रदेशे कस्यचिदेवकुलस्य बहिर्भागे द्विजादिभ्यः स्तोकं स्तोकं दातुमारब्ध, तत उच्चारादिकार्यार्थं विनिर्गताः केचन साधवो दृष्टाः, ततस्ते निमन्त्रिता यथा भोः! साधवः! अस्माकमुद्धरितं मोदकादि प्रचुरमवतिष्ठते ततो यदि युष्माकं किमप्युपकरोति तर्हि तस्माति-गृह्णतामिति, साधवोऽपि शुद्धमित्यवगम्य प्रत्यगृह्णन्, तैश्च साधुभिः शेषाणामपि साधूनामुपावेदि—यथाऽमुकस्मिन् प्रदेशे प्रचुरमेषणी यमशनादि लभ्यते, ततस्तेऽपि तद्ग्रहणाय समागमुः, तत्र चैके श्रावकाः प्रचुरं मोदकादिकं प्रयच्छन्ति, अन्ये च मायास्थानतो निवार यन्ति, यथैतान्दीयतां माऽधिकं, शेषमस्माकं भोजनाय भविष्यति, अन्ये पुनस्तानेव निवारयतः प्रतिषेधयन्ति—यथा न कोऽप्यस्माकं भोक्ष्यते, सर्वेऽपि प्रायो भुक्ताः, तत स्तोकमात्रेण किञ्चिदुद्धरितेन प्रयोजनं, तस्माद्यथेच्छं साधुभ्यो दीयतामिति। साधवश्च ये नम स्कारसहितप्रत्याख्यानास्ते भुक्ताः, ये च पौरुषीप्रत्याख्यानास्ते भुञ्जाना वर्त्तन्ते, ये चाभिग्रहतः पूर्वार्द्धादि प्रतीक्षमाणा वर्त्तन्ते ते नाद्यापि भुञ्जते, श्रावकाश्च चिन्तयामासुः—यथेदानीं साधवो भुक्ता भविष्यन्ति, ततो वन्दित्वा निजस्थानं व्रजाम इति, एवं चिन्तयित्वा

समधिकमरपेक्षाया साधुवसतावागत्य नैषेधिक्यादिकां सकलामपि श्रावकक्रियां कृतवन्त, ततो ज्ञातं यथाऽमी श्रावकाः परमविवेकिनो, ज्ञाताश्च परम्परया विवक्षितग्रामवास्तव्याः, ततः सम्यग्विमर्शतो निश्चितं—नूनमस्माभिरिदमेतत् स्वग्रामादभ्याहृतमिति, ततो यैर्भुक्तं तैर्भुक्तमेव, ये त्वद्यापि पूर्वोक्तादि प्रतीक्षमाणा न भुञ्जते तैर्न भुक्तं, येऽपि च भुञ्जाना अवतिष्ठन्ते, तैरपि यः कवलः पतद्ग्रहे क्षिप्तः स भाजनेऽमुच्यत, यत्तु मुखे प्रक्षिप्तं नाद्यापि गिलितं तन्मुखाद्विनिःसार्य समीपस्थापिते मल्लके प्रक्षिप्तं, शेषं तु भाजनगतं सर्वमपि परिष्ठापितं, श्रावकः श्राविकावर्गश्च सर्वोऽपि क्षमयित्वा स्वस्थानं जगाम, तत्र ये भुक्ता ये चार्धभुक्तास्ते[अपि] सर्वेऽप्यशठभावा इति शुद्धाः। सूत्रं सुगमं, केवलम् 'अद्धूरजंबरिय' त्ति केचिदर्धभुक्ते केचिच्चाऽन्तरिताः॥ उक्तं परग्रामाभ्याहृतानेतरीयम्, अथ स्वग्रामाभ्याहृतं तदेव गाथाद्वयेनाह—

ल्हेइ पहेणग मे अमुगत्थगयाएँ सखडीए वा। ववणगहपविठ्ठा देइ तय पढिय नियत्ता॥ ३४१॥

नीय पहेणगं मे नियगाण निच्छिय च तं तेहिं। सागारि सयज्झिय वा पडिकुट्ठा सखडे एट्ठा॥ ३४२॥

व्याख्या—इह काचिदभ्याहृताशनुनिहस्पर्श किमपि गृहे भक्तं भस्मित्वा, ततो निहचा सति साधोः प्रतिलाभनायोपाश्रयं प्रविश्य साधुसम्मुखमेवमाह—भगवन्! भोजकमिदममुकस्मिन् गृहे गतया लब्धं, यद्वा क्वापि संखड्यां, सम्प्रति वन्दनार्थमत्र प्रविष्टा, ततो यदि युष्माकमिदमुपकरोति तर्हि प्रतिगृह्यतामिति सकलमानीतं ददाति, यद्वा एवमाह—'निमन्त्रणं' स्वजनानामर्पाय महेणकं मया स्वगृहात् नीतं, परं तैर्नेप्सितं, तत स्वजनगृहात् प्रतिनिवृत्ता वन्दनार्थमभागतेति, ततस्तद्ददाति। यदि वा मायया क्वचिदभ्याहृतमानीय सागारिकां शय्यातरीं यद्वा 'सज्झियं' वसतीमवेक्षनीं पूर्वगृहीतमुक्त्वा यथा साधवः शृण्वन्ति तथा भणति—त्वदर्थमिदं महेणकमिति, तया च मात्

स्थानतः मतिपिद्धा यथा त्वयाऽप्यमुकस्मिन् दिने मदीयं महेणकं न प्रदत्तं ततोऽहमपि त्वदीय न प्रहीष्यामीत्येवं निषिद्धा, ततः साऽपि मातृस्थानतः किञ्चित्स्वरूपं मत्युक्तवती, द्वितीययाऽपि तथैव भाषितं, तत एवं परस्परं 'संखडे' कलहे सति सा महेणकनेत्री 'रुष्टा' रोषवती चन्दनार्थं वसतौ प्रविशति, ततोऽनन्तरोक्त वृत्तान्तं कथयित्वा तदानीं ददाति । उक्त स्वग्रामाभ्याहृतमपि निशीथं, सम्प्रत्यनाचीर्णं निगमयन्नाचीर्णस्य भेदानाह—

एयं तु अणाइन्नं दुविहंपि य आहडं समक्खायं । आइन्नंपि य दुविहं देसे तह देसदेसे अ ॥ ३४३ ॥

व्याख्या—'एवत्' पूर्वोक्तमभ्याहृतं निशीथनोनिशीथभेदाद् यद्वा स्वग्रामपरग्राममेदाद्विविधमप्याख्यातमनाचीर्णम्—अकल्पनीयं, सम्प्रत्याचीर्णं वक्ष्ये, तदपि द्विविधं, तद्यथा—देशे देशदेशे च । सम्प्रति देशस्य देशदेशस्य च स्वरूपमाह—

हत्थसयं खलु देसो आरेण होइ देसदेसो य । आइन्नंमि(उ)तिगिहा ते चिय उवओगपुव्वागा ॥ ३४४ ॥

व्याख्या—'हस्तशतं' हस्तशतमानं क्षेत्रं देशः, हस्तशताद्धारात्हस्तशतमध्ये इत्यर्थः, देशदेशः, तत्र हस्तशतप्रमाणे आचीर्णे यदि गृहाणि त्रीणि भवन्ति नाधिकानि ततः कल्पते, तान्यपि चेद्गृहाण्युपयोगपूर्वकाणि भवन्ति, उपयोगस्तत्र दातुं सम्यग् दत्त इत्यर्थः, ततः कल्पते नान्यथेति । सम्प्रति गृहत्रयव्यतिरेकेण हस्तशतादिसम्भवं तद्विषयं कल्प्याकल्प्यविधिं चाह—

परिवेसणपंतीए दूरपवेसो य घघसालगिहे । हत्थसया आइन्नं गहणं परओ उ पडिकुट्टं ॥ ३४५ ॥

व्याख्या—परिवेष्यते-भोजनं दीयते येभ्यस्ते परिवेषणाः-भुञ्जानाः पुरुषास्तेषां पङ्क्तिः-श्रेणिस्तस्यां, तत्र एकस्मिन् पर्यन्ते

साधुसङ्घाटको वर्तते द्वितीये तु देयं तिष्ठति, तत्र च स्पृष्टास्पृष्टभयाविना गर्ते न खन्यते, एवमुत्तरयोरपि पद्योर्भावनीयं, ततः परिवे पणपङ्क्त्यां, यद्वा 'गृहमध्ये' भक्तम्लगमनमार्गे छिण्डिकादौ, यदिवा पङ्क्ष्यालमध्ये हस्तशतावानीतस्य ग्रहणमाचीर्णं, तत्परत इत्यर्थः, परतस्त्यानीतस्य ग्रहणं 'प्रतिकुष्टं' निराकृतं तीर्थकरादिभिः ॥ सम्प्रत्यस्यैवाचीर्णस्य भेदान् प्रदर्शयति—

उक्कोस मज्झिम जहन्नगा तु तिन्निहं तु होइ आइन्नं । करपरियत्त जहन्नं सयमुक्कोसं मज्झिम सेसं ॥ ३४६ ॥

व्याख्या—त्रिविधमाचीर्णमभ्याहृतं, तद्यथा—उत्कृष्टं मध्यमं जघन्यं च, तत्र यदा ऊर्ध्वोपविष्टा वा कथमपि स्वयोगेन मुष्टिपूरितेन मण्डकादिना, यदिवा स्वापत्यादिपरिवेषणार्थमोदनभृतया करोटिकयोत्पाटितया व्यवतिष्ठते, अत्रान्तरे च कथमपि साधुरागच्छति भिक्षार्थं, तस्मै च यदि तत्स्थं ददाति तदा करपरिवर्तनमात्र जघन्यमभ्याहृतमाचीर्णं, हस्तशताद्भ्याहृतमुत्कृष्टं, शेष तु हस्तशतमध्य वर्ति मध्यमं । उक्तमुक्तमभ्याहृतद्वारम्, अथोद्भिन्नद्वारमाह—

पिहिउब्भिन्नकवाडे फासुय अप्फासुए य बोद्धव्वे । अप्फासु पुढविमाई फासुय छगणाइदद्दरए ॥ ३४७ ॥

व्याख्या—उद्भिन्नं द्विधा, तद्यथा—पिहितोद्भिन्नं कपाटोद्भिन्नं च, तत्र यत् कुतुपादेः स्थगितं मुखं साधूनां तैलघृतादिदानार्थं मुद्भिद्य तैलादि साधुभ्यो दीयते तदीयपानं तैलादि पिहितोद्भिन्नं, पिहितमुद्भिन्नं यत्र तत् पिहितोद्भिन्नमिति व्युत्पत्तेः, तथा यत् पिहितं कपाटमुद्भिद्य—उद्घाट्य साधुभ्यो दीयते तत् कपाटोद्भिन्नं, व्युत्पत्तिः प्राग्वत्, तत्र पिहितोद्भिन्ने पत्थिधान तद्द्विधा, तद्यथा—प्रासुकम प्रासुकं च, सचेतनमचेतनं चेत्यर्थः, तत्र 'अप्रासुकं' सचित्तपृथिव्यादिमय, 'प्रासुकं' छगणादिदर्दरके, तत्र छगणं—गोमयं, आदि शब्दाद्भस्मादिपरिग्रहः, दर्दरकः—मुखबन्धन वस्त्रखण्डम् । अथ पिहितोद्भिन्ने कपाटोद्भिन्ने च दोषानभिधित्सुराह—

उब्भिन्ने छक्काया दाणे कयविक्कए य अहिगरणं । ते चेव कवाडम्मि वि सविसेसा जंतमाईसु ॥ ३४८ ॥

व्याख्या—उद्भिन्ने—पिहितोद्भिन्ने षट् कायाः—उद्भेदकाले षट् कायाः पृथिवीकायादयो विराध्यन्ते, ततः प्रथमतः साधुनिमित्तं कुतुपादिमुखे उद्भिन्ने सति पुत्रादिभ्यस्तैलादिप्रदाने, तथा क्रयविक्रये–क्रये विक्रये चाधिकरणं—पापस्य प्रवृत्तिः, तथा एव एव षट्कायविराधनादयो दोषाः 'कपाटेऽपि' कपाटोद्भिन्नेऽपि सविशेषास्तु 'यन्त्रादिषु' यन्त्रकपाटादिषु द्रष्टव्याः, तत्र यान्यतीव सम्मुखागतानि कुञ्चिकया चोद्घाट्यन्ते यानि च दर्दरकोपरि पिहितानि कायानि एकदेशवर्तीनि माध्यमवेश्मद्वारे तानि यन्त्रकपाटानि आदिशब्दात् परिघादिग्रहः । सम्प्रत्येनामेव गाथां व्याचिख्यासुः प्रथमतः 'उब्भिन्ने छक्काया' इत्यवयवं व्याख्यानयन् गाथाद्वयमाह—

सच्चित्तपुढविलित्तं लेलुं सिलं वाऽवि वाडमोलित्तं । सच्चित्तपुढविलेवो चिरंपि उदगं अचिरलित्ते ॥ ३४९ ॥

एवं तु पुव्वलित्ते काया उब्भिन्नेऽवि ते चेव । तिम्मेउं उल्लिपइ जउमुद्दं वावि तावेउं ॥ ३५० ॥

व्याख्या—इह कुतुपादिमुखं दर्दरकोपरि कदाचित् 'लेलुं' लेष्टुं शिलां वा—पाषाणखण्डं प्रक्षिप्य जलार्द्रीकृतसचित्त पृथिवीकायलिप्तं भवति, तत्र सचित्तपृथिवीलेपः सचित्तः सन् चिरकालमप्यवतिष्ठते, उदकं तु 'अचिरलित्ते' अचिरकाललिप्ते सम्भ वति, किमुक्तं भवति ?—यदि चिरकालसचित्तपृथिवीकायलिप्तमुद्भिद्यते तदि सचित्तपृथिवीकायविनाशोऽचिरलिप्ते तूद्भिद्यमानेऽप्कायस्या पि विनाशः, अचिरलिप्तमप्यत्रान्तर्मुहूर्तकालस्य मध्यवर्ति द्रष्टव्यम्, अन्तर्मुहूर्तानन्तरं पृथिवीकायशस्त्रसम्पर्केण परिणमति, ततो न तद्विराधनादोषः, उपलक्षणमेतत्, तेन त्रसादेरपि तदाश्रितस्य विनाशसम्भवो द्रष्टव्यः । एवमु—अनेन प्रकारेण पूर्वलिप्ते साधुकृतमुद्भिद्य

माने दोषा उक्ताः, एव एव पृथिवीकायादिविराधनादोषा उपलिप्यमानेऽपि कुतुपादिमुखे तैलघृतादिकं साधवे दत्त्वा शेषस्य रक्षणार्थं भूयोऽपि कुतुपादिमुखे स्थग्यमाने द्रष्टव्याः, तथाहि—भूयोऽपि कुतुपादिमुखं सचित्तपृथिवीकायेन जलार्द्रीकृतेनोपलिम्पति, ततः पृथिवीकायविराधनाऽप्कायविराधना च, पृथिवीकायमध्ये च मुद्गादय कीटिकादयश्च सम्भवन्ति ततस्तेषामपि विराधना । तथा कोऽप्यभिज्ञानार्थं जतु तापयित्वा कुतुपादिमुखस्योपरि मुद्रां ददाति, तत्र तेजःकायविराधनाऽपि, यत्राग्निस्तत्र वायुरिति वायुकायविराधना च, ततः पिहितोद्भिन्ने षट्कायविराधना । अमुमेवार्थं स्पष्टं भावयति—

जह चेव पुव्वलित्ते काया दाउ पुणोऽवि तह चेव । उवलिप्पते काया मुइंगमाई न्वारि छट्ठे ॥ ३५१ ॥

व्याख्या—यथा चैव पूर्वलिप्ते ' कायाः ' पृथिवीकायादयो विराध्यन्ते तथा साधुभ्यस्तैलादिकं दत्त्वा भूयोपि कुतुपादिमुखे उपलिप्यमाने काया विराध्यन्ते, नवरं षष्ठे काये त्रसकायरूपे विराध्यमाना जन्तवः पृथिव्याश्रिताः ' मुइंगादयः ' पिपीलिकाकुन्थ्वादयो द्रष्टव्या । सम्प्रति ' दाणे कयविक्कय य ' इत्यवयवं व्याचिख्यासुराह—

परस्स तं देइ स एव गेहे, तेल्लं व लोणं व घयं गुलं वा । उग्घाडिए तम्मि करे अवस्स, सविक्कयं तेण किणाइ अन्नं॥३५२॥

व्याख्या—यस्मिन् कुतुपादिमुखे साध्वर्थमुद्घाटिते सति ' परस्मै ' याचकाय दानादिकाय यदा—स्वकीय एव गृहे पुत्रादिभ्यस्तैलं लवणं घृतं गुडं वा ददाति, यदि वा स करोत्यवश्यं विक्रयं, तेन च मूल्येनान्यत् क्रीणाति, एतत् सर्वं साध्वर्थमुद्घाटिते सति प्रवर्तते इति साधो महाविशेषः । तथा [चैवे]त्र ' अधिकरणम् ' इत्यवयवं व्याचिख्यासुराह—

दाणे कयविक्कए वा होई अहिगरणमजयभावस्स । निवयंति जे य तहिय जीवा मुइंगमूसाई ॥ ३५३ ॥

व्याख्या—दाने क्रये विक्रये वाऽनन्तरोक्तस्वरूपे प्रवर्त्तमाने साधोः 'अयतभावस्य' अयतोऽशुद्धाहारापरिहारकत्वेन जीवरक्षण रहितः भाव'-अध्यवसायो यस्य स तथा तस्य 'अधिकरण' पापमहाधिरूपमापद्यते, तथा तस्मिन् कुतुपादिमुखे उद्घाटिते ये जीवा मुइ प्रमूषकादयो निपतन्ति निपस्य च विनाशमाविशन्ति तदप्यधिकरणं साधोरेव । सम्प्रति 'ते चेव कवाडंमि' इत्यवयवं व्याचिख्यासुराह—

जहेव कुंभाइसु पुव्वलित्ते, उब्भिज्जमाणे य हवंति काया। ओलिंपमाणेवि तहा तहेव, काया कवाडंमि विभासियव्वा ३५४

व्याख्या—यथैव 'कुम्भादौ' घटादौ, आदिशब्दात्कुतुपादिपरिग्रहः, पूर्वलिप्ते उद्भिद्यमाने 'कायाः' पृथिवीकायादयो विराध्यमाना भवन्ति, उपलक्षणमेतत्, तेन दानक्रयविक्रयाधिकरणमप्यत्र भवति, तथा कपाटेऽपि पूर्ववत् सान्वर्येमुद्घाट्यमाने वेदितव्याः, तथाहि-यदा कपाटात् प्राक्स्यमपि पृथिवीकायो जलसृतः करको वा बीजपूरादिकं वा मुक्तं भवति तदा तस्मिन्नुद्घाट्यमाने कपाटे तद्विराधना भवति, जलसृते करकादौ तु भिद्यमाने [वा] पानीयं प्रसर्पेत् प्रत्यासन्नचुल्यावतापि प्रविशेत्, तथा च सत्यग्निविराधना, यत्र चाग्निस्तत्र वायुरिति वायुविराधना च, मूषकादिविवरप्रविष्टकीटिकागृहगोधिकाविसर्पविनाशे त्रसकायविराधना चेति, दानक्रयविक्रयाधिकरणमप्युपभावना च पूर्ववत्कर्त्तव्या । 'सम्प्रति सविसेसा' इत्यवयवं व्याचिख्यासुराह—

घरकोइलसंचारा आवत्तण पीढगाइ हेट्ठुवरिं । निंतेत्ति एयअंतो डिंभाईपेल्लणे दोसा ॥ ३५५ ॥

व्याख्या—कपाटस्य 'सञ्चारात्' सञ्चरणाद्गृहगोधिका, उपलक्षणमेतत् कीटिकोन्दुरादयश्च विराध्यन्ते, तथा मासादस्याधो भूमि

रूपा पीठिकेव पीठिका—चयिका तमाच उपरिवर्ते च कपाटैकदेशस्यावर्त्तने समाश्रिताः कुन्थुपिपीलिकादयो विनाशमनुभवन्ते, तयोद्घाट्य कपाटे यथा मुख नीयमानेऽन्तःस्थिते(ऽति) अन्तःस्थितस्य डिम्भादेः प्रेरणे दोषाः—शिरःस्फोटनादयो भवन्ति। सम्प्रत्यपवादमाह—

घेप्पइ अकुचियागमि कवाडे पइदिणे परिवहंते। अजऊमुद्दिय गंठी परिमुज्जइ दद्दरो जो य ॥ ३५६ ॥

व्याख्या—' अकुञ्चिकाके ' कुञ्चिकारहिते, कुञ्चिकाविवररहिते इत्यर्थः, तत्र हि किल पृष्ठभागे उल्लालको न भवति तेन न घर्षणद्वारेण सत्त्वविराधना, यद्वा—' अकूणगे ' ऽपि पाठः, तत्र ' अकूणिकाके ' कूणिकारहिते अकेङ्काररावे, किमुक्तं भवति ?—यदुद्घाट्यमानं कपाटं केङ्कारत्वं न करोति यदि पश्चाक्रियमाणमूर्ध्वमधस्तिर्यग् घर्षत् समूवसत्त्वव्यापादनं करोति तेन तद्वर्जनं, तस्मिन्नपि किंविशिष्टे ?—इत्याह—' प्रतिदिनं ' प्रतिदिवस—निरन्तर ' प्रतिवहति ' उद्घाट्यमाने दीयमाने चेत्यर्थः, तस्मिन् प्रायो न गृहगोधिकादिसत्त्वाश्रयसम्भवः, चिरकालमवस्थानाभावात्। एवंभूते कपाटे साध्वर्यमभ्युद्घाटिते भक्तादि गृहस्थः समुपते, स्थविरकल्पिकानामाचीर्णमेतत्, तथा यश्च ' दर्दरकः ' कुतुपादीनां मुखबन्धरूपः प्रतिदिवस परिमुच्यते—बध्यते छोट्यते चेत्यर्थः, तत्र यदि जतुमुद्राभ्यामतिरेकेण केवलवस्त्रमात्रनिर्दयित नापि च सचित्तपृथिवीकायादिलेपः स्तोऽ तस्मिन् साध्वर्यमुद्भिन्नेऽपि ग्राह्यते तत्साधुभिर्गृह्यते इति उक्तमुद्भिन्नद्वारम्, अथ मालापहृतद्वारमाह—

मालोहडंपि दुविह जहन्नमुक्कोसगं च बोद्धव्वं। अग्गतलेहिं जहन्नं तव्विवरीयं तु उक्कोसं ॥ ३५७ ॥

व्याख्या—मालापहृतं द्विविधं, तद्यथा—जघन्यमुत्कृष्टं च, तत्र यज्जघन्यस्ताभ्यां पादयोरग्रभागाभ्यां फलकसमुत्थाभ्यां पार्ष्णिभ्यां

घोत्पाटिताभ्यामूर्ध्वविलगितोघसिक्थकादिस्थितं दाभ्यां दृष्टिगोचरं नीयते तज्जघन्यं मालापहृतं, 'तद्विपरीत' जघन्यविपरीतं भूमिगृहे
भ्यादिकमारुह्य मालादेरवतार्यानीय दीयते तदुत्कृष्टं मालापहृतं । सम्प्रत्यनयोरेव दृष्टान्तौ सदोषौ वक्तुकाम आह—

भिक्खू जहन्नगमी गेरुय उक्कोसगंमि दिट्ठंतो । अहिडसणमालपडणे य एवमाई भवे दोसा ॥ ३५८ ॥

व्याख्या—जघन्ये मालापहृते भिक्षुर्नन्दको दृष्टान्तः, उत्कृष्टे 'गेरुका' व्रतिनी, तत्र जघन्ये मालापहृते 'अहिदशन' सर्पदशनम्, उत्कृष्टे मालात्पतनमित्येवमादयो दोषा अभूवन् ॥ तत्र भिक्षुदृष्टान्तं गाथाद्वयेनाह—

मालाभिमुहं दट्ठूण अगारिं निग्गओ तओ साहू । तव्वत्तिय आगमणं पुच्छा य अदिन्नदाणन्ति ॥ ३५९ ॥

मालंमि कुडे मोयग सुगंध अहि पविसणं करे डक्का । अन्नदिण साहु आगम निद्दय कहणा य संबोही ॥३६०॥

व्याख्या—जयन्तपुरं नाम नगरं, तत्र यक्षदिन्नो नाम गृहपतिः, तस्य भार्या वसुमती, अन्यदा च तद्गृहे धर्मरुचिर्नाम संयतो भिक्षार्थं प्राविशत्, तं च नियमितेन्द्रियमरक्तद्विष्टमेषणासमितमवलोक्य समुत्पन्नविशिष्टदानपरिणामेन यक्षदिन्नेन वसुमती सादरं बभणे, यथा देहि साधवेऽस्मै अमुकान् मोदकानिति, ते च मोदका ऊर्ध्वं विलगितोघसिक्थमध्ये व्यवस्थिते घटेऽवतिष्ठन्ते, ततः सा तदुद्धरणार्थमुत्थिता, सा च तां मालापहृतां भिक्षामवबुध्यमानस्तद्ग्रहणमनिच्छन् निर्जगाम । ततस्तत्क्षणं तस्मिन्नेव गृहे भिक्षार्थं भिक्षुरागमत्, पप्रच्छ च स यक्षदिन्नो यथा किं भो ![सर्व] तेन किं न गृहीता दीयमाना भिक्षा न जगृहे, ? ततः स भिक्षुः मत्सरदोषमुवाच—अदक्षिणा अमी खलु वराकास्ततो न लभन्ते पूर्वकर्मविनियोगतो युष्मादृशामीश्वराणां गृहेषु स्निग्धमधुरादिकं भोजनं भोक्तुं, किन्तु तेर्दुर्गतगृहेष्वन्तप्रान्तादिकं रूक्षं भोक्तव्यमिति, ततो

यज्ञदत्तेन तस्मायपि तानेव मोदकान् यज्ञमती दापिता, सा तस्मिन्नेव सिक्कविलम्बिते घटे मोदकानादातुमचालीत्, घटे च महौषधद्रव्य-निष्पन्नमोदकगन्धाघ्राणवशतः कथमपि भुजङ्गमः समागतोऽवतिष्ठते, यज्ञमती चोत्पाट्य पार्ष्णी पादाग्रतलभरेण यावन्मोदकस्यन्दे करं केलिपल्लवोपमं करं प्रक्षिपति तावद्भुजङ्गमः नवमुक्त इव सादरं तं प्रत्यग्रहीत्, ततो हा ! दष्टा दष्टेति पूत्कारं कुर्वती भूमौ निपपात, दृष्टे च यज्ञदत्तेन पूत्कारं कुर्वन् दन्तशूकः, ततस्तत्क्षणादेव समाहूताः परममन्त्रवादिनः, समानीतानि च नानाविधानि भेषजानि, ततोऽप्याप्यायुरत्रुटितमिति मन्त्रौषधप्रभावतः सा नीरुजमभूत्, समाजगाम च भूयोऽप्यपरस्मिन् दिने स एव धर्मरुचिः संयतो भिक्षार्थे, उपालेभे च यज्ञदत्तेन यथा दयाप्रधानो धर्मस्तत्किं भोः साधो ! छिद्रितं तव तदानीं सर्पं पश्यतोऽप्युपेक्षा मावर्तिष्ट ?, स आह—नास्मदाख्यं तदानीं दन्तशूकं, केवलमयमस्माकं सार्वज्ञ उपदेशो यथा मा ग्राहिषुः साधवो ! मालापहृतं भिक्षामिति, ततोऽहं प्रतिनिवृत्तः, एवं चोक्ते यज्ञदत्तः स्वचेतसि चिन्तयामास—अहो ! निरपायो भगवता निष्पादितो भिक्षूणां धर्मः, य एव चेत्थं निरपायं धर्ममुपदिशति स्म स एव सर्वज्ञो न खलु सुधाभ्यवहारमन्तरेण सुधोद्गार उज्जृम्भते, एवं न यावत्त्रैलोक्यस्यापि ज्ञानमन्तरेणेत्थं सकलजगज्जन्तूनपायिनो धर्मस्योपदेशप्रवृत्तिः, बुद्धिमागतम्ये हि वचसि प्रागल्भ्यमुपालम्भि तस्मात्स एव सर्वज्ञ इति, इत्थं च विचिन्त्य भक्तिवशोच्छलितपुलकजालोपशोभिततनुः सादरं धर्मरुचिश्रमणमवन्दत, वन्दित्वा च जिनप्रणीतं धर्मं पप्रच्छ, स च कथयामास सङ्क्षेपतः, ततो जिनप्रणीतवाक्यामृतसास्वादतस्तेषामवजगाम सकलमपि मायासुनयीयादिसम्भावितकुवासनामयं गरलं, पश्यति च यथावस्थितानि हेयोपादेयानि वस्तूनि, प्रमोदते च जात्यन्ध इव चक्षुर्लाभे सविशेषतरं, ततो भव्याहे विशेषतो गुरुसमीपे समागत्य धर्मं श्रुत्वा जातसंवेगौ दम्पती अपि प्रव्रज्यामपेदाते । सूत्रं सुगमं । सम्प्रत्यस्मिन्नेव अध्ययने मालापहृतेऽन्यानपि दोषानभिधित्सुराह—

आसंदिपीढमंचकजतोदूखल पढत उभयवैहे । वोच्छेय पओसाई उड्डाहमनाणिघाआ य ॥ ३९१ ॥

व्यास्या—'आसदी' मञ्चिका 'पीठं' गोमयादिमयमासनं 'मञ्चकः' प्रतीतः 'यन्त्रं' मीसादिवल्लनोपकरणम्, 'उदूखलः' प्रतीतः, एतेभ्यास्त्र, उपलक्षणमेतत्, पार्ष्णी चोत्पाट्य ऊर्ध्वनिक्षिप्तसिक्कादिस्थितमोदकादिग्रहणे कथमपि यदि मञ्चकादि‌सनतो दात्री निपतति तर्हि 'उभयवधः' दात्र्याः पृथिव्यादिकायादीनां च विनाशः । तत्र दात्र्या हस्तादिभङ्गतो यदिवा विसंस्थुलपतनत कथमप्य-स्थानाभिघातसम्भवत्प्राणव्यपरोपणमपि, तया च निपतन्त्या भूम्यापाश्रितानां पृथिवीकायादीनामपि विनाशः, यदैतस्मै भिक्षामदं ददती मागपि महत्यनर्थे पतितेति न कोऽप्यस्मै दास्यतीति तद्गृहे तद्द्रव्यान्यद्रव्यव्यवच्छेदः, तथा मुण्डेनानेन परमार्थतः पातितेति कस्यापि गृह स्वामिनः साधुविषयः प्रद्वेषोऽपि भवति, आदिशब्दात्ताडनादिपरिग्रहः, प्रद्वेषवशो हि कोऽपि कोपान्धतया ताडनमपि कुर्यात्, कोऽपि निर्भ र्त्सनं, कोऽपि वधमपि, तथा च प्रवचनस्योड्डाहः—खिसा यथा—साश्चर्यमेषा भिक्षामारन्ती पराद्धरभूत्, तस्मादमी साधवः कल्याणका रिणः, लोके चाज्ञानवादः—एवंविधमपि दात्र्या अनर्थमेते न जानन्तीत्येवं मूर्खतापवादः, तस्माज्जघन्यमपि मालापहृतमवश्यं परिहर्तव्यं ॥ तदेवमुक्तो जघन्यस्य मालापहृतस्य सदोषो दृष्टान्तोऽन्येऽपि च दोषाः, सम्प्रत्युत्कृष्टस्य तानाह—

एमेव य उक्कोसे वारणनिस्सेणि गुव्विणीपडण । गब्भित्थिकुच्छिफोडण पुरओ मरणं कहण बोही ॥ ३९२ ॥

व्यास्या—जयन्तीनाम पुरी, तत्र सुरदत्तो नाम गृहपतिः, तस्य भार्या वसुन्धरा, अन्यदा च तद्गृहे गुणचन्द्राभिधः साधुर्भि क्षार्थं मागितत्, तं च प्रशान्तमनसमिहपरलोकनिःस्पृहं मूर्त्तं धर्ममिव समागच्छन्तमवेक्ष्य सुरदत्तो वधू वसुमभिहितवान्—यथा देहि साधवे

मालादानीय मोदकानिति, सा च तदानीमन्तर्वत्नी, परं पत्युरादेशं देवतादेशमिव मन्यमाना मोदकानयनाय मालाभिमुखां निश्रेणिमारो ढुमुपविष्टा, साधुभ न कल्पते मालापहृता भिक्षा संयतानामिति तां निनिवार्य स्वाश्रमाभिःससार, ततस्तत्क्षण एव कोऽपि कापिलो भिक्षार्थ तस्मिन्नेव गृहे प्राविशत्, सुरदत्तेन च स पृष्टो—यथा भोः ! किं भवतेन मालादानीयमाना भिक्षा न मविष्यते ?, ततः स मात्सर्यवशात् सम्यक् किमप्यभाषिष्ट, ततस्तस्यापि सुरदत्तो वसुन्धरया मोदकान् दापितवान्, वसुन्धरा च मोदकानयनार्थं निःश्रेणिमारोहन्ती कथमपि पादस्खलन्तो विसंस्थुलाङ्गी न्यपतत्, अधम श्रीरिक्तजनपन्नकमासीत्, ततस्तत्कोलकस्तस्या निपतन्त्याः कुक्षिं द्विधा पाटयामास निर्गतश्च परिस्फुरंस्तस्यो गर्भः, कोलकविदारितया महापीडाऽधिक्यभावतः पञ्चत्वमेव सकललोकानां सदुःखं सन्दमानः पञ्चत्वमगमत्, तथा वसुन्धरा च, तत उच्छलिताः पापीयसः कापिलस्यावर्णवादाः, अन्यदा च भूयोऽपि तस्मिन्नेव गृहे स एव साधुर्भिक्षार्थमाजगाम, सुरदत्तश्च तमभाषीत्—भगवन् ! यथा यूयं ज्ञानचक्षुषा शास्त्रा विनाशमपेक्षमाणा भिक्षां परिहृतवन्तः तथाऽस्माकमपि किं नाचीकथत्?, येन वराकी सा मालं नारोहेत्, ततः साधुरवोचत्—नाहं किमपि जाने, केवलमयमस्माकं सार्वज्ञ उपदेशः—यथा न कल्पते साधूनां मालापहृता भिक्षेति, ततः स पूर्ववदचिन्तयद्धर्ममभीपीत भगवन्तो चाग्रहीदिति, सुर्भ सुगमं, नवरम्, एवमेव जघन्यमालापहृते इषोत्कटेऽपि मालापहृते 'पतन्त उमपस्यो' इत्यादयो दोषा वक्तव्याः । तत्र शाक्या वधे उदाहरणं 'वारमनिस्सेणि' इत्यादि । सम्प्रति मालापहृतमेव मतान्तरेणाह—

उड्डमहे तिरियंपि य अहवा मालोहडं भवे तिविहं । उड्ढे य महोयरणं भणियं कुमाइसु उभय ॥ ३६३ ॥

व्याख्या—अथवा मालापहृतं त्रिविधं, तद्यथा—ऊर्ध्वमधस्तिर्यक् च, तत्र ऊर्ध्वमेतदनन्तरोक्तमूर्ध्वीकृत्यावसितमादिमतम्, अधो

भूमिगृहादावतरणं—प्रवेशः, तथाधोऽवतरणेन गर्त्तादौ तदप्युपचारादधोऽवतरणं, यथा 'कुम्भादिषु' कुम्भोष्ट्रिकामञ्जूषादिषु यद्वर्तते देयं वस्तु तदुत्क्षेपादिना गृहीत्वा ददाति, तथापि—पृथुतरोदेशस्तरकुम्भादिमध्यव्यवस्थितस्य देयस्य ग्रहणाय येन दात्री प्रकर्षेण नम्रीभवति तेनोर्ध्वमालापहृतं, येन स्वधोमुखं बाहुमभिमुखं व्यापारयति तेनाधोमालापहृतं, दोषा अत्रापि पूर्ववक्तव्याः। अत्रैवापवादमाह—

दद्दर सिल सोवाणे पुव्वारूढे अणुच्चमुक्खित्ते। मालोहडं न होई सेसं मालोहडं होइ ॥ ३६४ ॥

व्याख्या—'दर्दरः' निरन्तरकाष्ठफलकमयो निःश्रेणिविशेषः 'शिला' प्रतीता 'सोपानानि' इष्टकामयान्यवतरणानि, एतान्यारुह्य यद्दाति तन्मालापहृतं न भवति, केवलं साधुरप्येषणाशुद्धिनिमित्तं प्रासादस्योपरि दर्दरादिना पश्यति, अपवादेन भूस्थोऽप्यानीतं गृह्णाति, तथा पूर्वारूढा साध्वागमनात्प्रागेव स्वयोगेन निःश्रेण्यादिना प्रासादोपरि चटितो दाता यद्दाति साधुपात्रके, कथंभूते? इत्याह—अनुत्क्षिप्ते, किमुक्तं भवति?—भूमिस्थ संयतो ह्यरथः पात्रं धारयन् यावत्प्रमाणे यथास्थाने स्थितो दाता पात्रे हस्तं प्रक्षिप्य ददाति तावत्प्रमाणे पूर्वारूढो यद्दाति तन्मालापहृतं न भवति, शेषं तु सर्वमप्यनन्तरोक्तं मालापहृतमवसेयम्। इहानुत्क्षिप्तोत्क्षिप्तयोः स्वरूपमाह—

तिरियाययउज्जुगएण गिण्हई ज करेण पासंतो। एयमणुच्चुक्खित्तं उच्चुक्खित्तं भवे सेसं ॥ ३६५ ॥

व्याख्या—तिर्यग् आयतेन—दीर्घेण 'ऋजुकेन' सरलेन 'करेण' हस्तेन पात्रं दृष्ट्या निभालयन् यद्गृह्णाति तदित्थंभूतं पात्रमनुत्क्षिप्तमुच्यते, शेषं पुनरुत्क्षिप्तं, इयमत्र भावना—यदूर्ध्वरूपार्पितं बाहुं प्रसार्य देयवस्तुग्रहणाय पात्रे ध्रियते तस्या ध्रियमाणमुत्क्षिप्तमिति,

एतेन चोर्ध्वाधोमालापहृतव्याख्यानेन तिर्यगपि मालापहृतं व्याख्यातं द्रष्टव्यं, तत्राप्ययं कल्प्याकल्प्यविधिः—यस्मादस्यायो मञ्चिकादि दत्त्वा गवाक्षादौ स्थितं दानाय बाहुं प्रसार्य महता कष्टेन समाकर्षति तन्न कल्पते, यत्र भूमौ स्वभावस्था गवाक्षादौ स्थितभक्तेन स्थितस्थाइं प्रसार्य साध्वेर्दानाय गृह्णाति तन्मालापहृतं न भवति, अतस्तत्कल्पते। यदेवमुक्तं मालापहृतम्, अथाऽऽच्छेद्यद्वारमाह—

अच्छिज्जंपि य तिविहं पभू य सामी य तेणए चेव। अच्छिज्जं पडिकुट्ठं समणाण न कप्पए घेत्तुं ॥ ३६६ ॥

व्याख्या—आच्छेद्यमपि प्रागुक्तशब्दार्थं 'त्रिविधं' त्रिप्रकारं, तद्यथा—'प्रभौ' प्रभुविषयं प्रभुकर्तृकमाच्छेद्यमित्यर्थः, एवं 'स्वामिनि' स्वामिविषयं, स्तेनकविषयं च। एतत् त्रिविधमप्याच्छेद्यं तीर्थकरगणधरैः 'प्रतिकुष्टं' निराकृतम्, अतः श्रमणानां ग्रहीतुं न कल्पते। तत्र प्रथमतः प्रभुविषयं भावयति—

गोवालए य भयएऽक्खरए पुत्ते य धूय सुण्हाए। अचियत्त संखडाई केइ पओसं जहा गोवो ॥ ३६७ ॥

व्याख्या—प्रभुकर्तृकमाच्छेद्यं 'गोपालके' गोपालविषयं, तथा 'भृतकः' कर्मकरस्तद्विषयम्, अक्षरके—अक्षरकाभिधानो दास इत्यर्थः, तद्विषयं, पुत्रविषयं दुहितृविषयं स्नुषाविषयम्, उपलक्षणमेतत्, भार्यादिविषयं च। अत्रैव दोषमाह—'अचियत्त' इत्यादि, 'अचियत्तम्' अप्रीतिः 'संखडं' कलहः, आदिशब्दादात्मघातादिपरिग्रहः, केचित्पुनः प्रद्वेषमपि साधौ गच्छन्ति, यथा 'गोपः' गोपालकः। एतमेव दृष्टान्तं गाथाद्वयेन भावयति—

गोवपओ अच्छेत्तुं दिन्न तु जइस्स भद्ददिणे पहुणा। पयमाणूण वट्टं खिंसइ भोई रुवे चेडा ॥ ३६८ ॥

पडियरणपओसेणं भाव नाउं जइस्स आलावो। तभिक्खणा गहिय हवि स मुक्कोसि मा भीय ॥ २६१ ॥

व्याख्या—वसन्तपुरं नाम नगरं, तत्र जिनदासो नाम श्रावकः, तस्य भार्या रुक्मिणी, जिनदासस्य गृहे वत्सराजो नाम गोपालः, स चाष्टमे अष्टमे दिने सर्वासामपि गोमहिषीणां दुग्धमादत्ते, यतो तस्य प्रथमतो भृतत्वात्, अन्यदा च साधुसङ्घाटको भिक्षार्थं समागच्छत्, इतश्च तस्मिन् दिने गोपालस्य सर्वदुग्धादानवारकः, ततस्तेन सर्वा अपि गोमहिष्यो दुग्धा महती पारिर्दुग्धस्यापूर्णा, जिनदासश्च जिनवचनभावितान्तःकरणस्तया साधुसङ्घाटकं श्रमणपात्रमुत्तमायातमवलोक्य भक्तितो यथेच्छं भक्तपानादिकं तस्मै दत्तवान्, ततो 'दुग्धान्नानि भोक्तव्यानी'ति परिभाव्य भक्तिवशोल्लसितमनस्तया गोपालस्य दुग्धं पयसाप्यिप कतिपयं ददौ, ततः स गोपालो मनसि साधो रुपरि मनाक् प्रद्वेषं ययौ, परं प्रभुभयात् किमपि वक्तुमीश्वितः, ततस्तत्पयोभाजनं कतिपयन्यूनं स्वगृहे नीतवान्, तत्र तथाभूतं न्यूनमवलोक्य भार्या सरोषं पृष्टवती, किमिति न्यूनमिदं पयोभाजनम् ? इति, ततो गोपेन यथावस्थिते कथिते साऽपि साधुप्रद्वेषमाचरत्, चेटरूपाणि च दुग्धं स्तोकमवलोक्य किमस्माकं भविष्यतीति रोदितुं प्रवृत्तानि, तत इत्थं सकलमपि स्वकुटुम्बमाकुलमवेक्ष्य स गोपः सञ्जातसाधुविषयमहाकोपः साधुं व्यापादयितुं चलितवान्, इतश्च भिक्षार्थं परिभ्रमन् क्वापि प्रदेशे साधुं, ततः प्रधावितो लकुटमुत्पाट्य साधोः पृष्ठतः, साधुनापि कथमपि पश्चादवलोकने तं गोपं तथाभूतं कोपारुणनयनमालोक्य परिभावयामासे, नूनमेतस्य दुग्धं मत्कृते जिनदासेन सर्वं ददे तेन मम मारणार्थमिव कुपित एष समागच्छन्नुपलक्ष्यते, ततः साधुर्विशेषतः प्रसन्नवदनो भूत्वा तस्यैव सम्मुखं प्रत्यागन्तुं प्रावर्तत, भणति च यथा—भो भोः क्षीरस्वामियुक्तक ! तव प्रभुनिर्बन्धेन मया यदानीं दुग्धमात्रं सम्प्रति तु गृहाण त्वमात्मीयं दुग्धमिति, एवं प्रोक्ते प्रत्युपशान्तकोपः साधुं प्रति स्वस्वभावं प्रकटितवान्, यथा भोः साधो ! क्षमितव्य ! तव मारणार्थमह

मिदानीमागतः, परं सम्प्रति त्वद्वचनामृतपरिसेकत उपशशाम मे सर्वः कोपानलः, ततो गृहाण त्वमेवेदं दुग्धं, मुक्तश्चासतमाणो मया, परं भूयो ऽप्येवमाच्छेद्य न ग्रहीष्यामिति निवृत्तो गोपः, स्वस्थानं च गत साधुरिति । सूत्रं सुगम, नवरं 'पयमाणूणं 'ति विभक्तिलोपात्पयो भाजनभृतं दृष्ट्वा 'भोई ' इति भोग्या-भार्या इत्यर्थः, 'रोष 'त्ति रुदन्ति, 'दंवी 'ति आमन्त्रणे, धर्मिबन्धात् त्वदीयमिनदासा स्यमसुनिर्बन्धाद्धृतं, ततः स माह—मुक्तोऽसि सम्प्रति मा द्वितीयं वारमेव गृहीथाः । सम्प्रति गोपालविषय एव ' अचियत्तसंखडाई ' इत्येतद्व्याचिख्यासुराह—

नानिव्विट्ठ लब्भइ दासीवि न भुज्जए रिते भत्ता । दोण्हेगयरपओस जं काही अतराय च ॥ २७० ॥

व्याख्या—प्रभुणा बलादाच्छिद्यमाने दुग्धे कोऽपि गोपो रुष्टः प्रभोः सम्मुखमेवमपि ब्रुवाणः सम्भाष्यते, यथा किमिति मदीयं दुग्धं बलादाच्छिनत्सि ?, न खलु 'अनिर्विष्टम्' अनुपार्जितमिह किमपि लभ्यते, ततो मया स्वशरीरायासबलेनेदं दुग्धमुपार्जितम्, अतः कथमत्र प्रभवसि ?, न हि दास्यप्यास्तामुत्तमवेष्यादिकमित्यपिशब्दार्थः, 'भक्तादृते ' भक्तपानमृते, भरणपोषणमृते इत्यर्थः, 'भुज्यते ' भोक्तुं लभ्यते, ततो मदीय भोजनमिदम्, अतो न तेऽत्र प्रभुत्वावकाशः, एवं चोक्ते सति कदाचिद्द्वयोरपि प्रभुगोपालकयो' परस्पर-मेकतरस्य वा द्वितीयस्योपरि प्रद्वेषो वर्द्धते, प्रद्वेषे च वर्द्धमाने यत् करिष्यति धनहरणमारणादिकं तत्सर्वमेवाऽऽच्छेद्यादाने दोषत्वेन विज्ञेयं । तथा यथान्तरायं गोपालकस्य तत्कुटुम्बस्य च तदपि दोषत्वेन विज्ञेयमिति । तत्रैव 'गोपालक' इति व्याख्यातम् । एतदनुसा रेण च मृत्कारादावपि यथायोगमप्रीत्यादिकं सम्भावनीयमिति । सम्प्रति स्वामिविषयमाच्छेद्यं विभावयिषुराह—

सामी चारभडा वा संजय दट्ठूण तेसि अट्ठाए । कलुणाण अच्छेज्ज साहूण न कप्पए घेत्तुं ॥ २७१ ॥

व्याख्या—इह स्वगृहमामनायकः प्रभुः ग्रामादिनायकः स्वामी चारभटा वा—स्वामिभटो वा, तेऽपि स्वामिप्रभृत्वेन गृह्यन्ते। संयतान् दृष्ट्वा तेषां संयतानामर्थाय 'करुणानां' कृपास्थानानां दरिद्रकौटुम्बिकादीनां सम्बन्ध्याऽऽच्छिद्य यद्ददाति तत्साधूनां न कल्पते। एतदेव व्यक्तं भावयति—

आहारोवहिमाई जइअट्ठाए उ कोइ अच्छिंदे। सखडि असंखडीए तं गिण्हते इमे दोसा ॥ ३७२ ॥

व्याख्या—यदि कोऽपि स्वामी भटो वा यतीनामर्थाय केषाञ्चित्सम्बन्ध्याहारोपध्यादिकं 'सङ्खड्या' कलहकरणेन 'असङ्खड्या' कलहाभावेन, कोऽपि हि तत्सम्बन्धिनि बलादाच्छिद्यमाने कलहं करोति, कोऽपि स्वामिभयादिना न किमपि वक्ति, तत उक्तं सङ्खड्या असङ्खड्या वेति, बलादाच्छिद्य यतिभ्यो ददाति तद्यतीनां न कल्पते। यतस्तद्गृह्णति यतादिमे दोषाः ॥ तानेवाह—

अचियत्तमंतराय तेनाहड एगऽणेगवोच्छेओ। निच्छुभणाइदोसा तस्स अलंभे य जं पावे ॥ ३७३ ॥

व्याख्या—येषां सत्कमाच्छिद्य बलात् स्वामिना दीयते तेषाम् 'अचियत्तम्' अप्रीतिरुपजायते, तथा तेषाम् 'अन्तरायं' दीयमानवस्तुपरिभोगहानिः कृता भवति, तथेत्थं साधूनामाददानानां स्तेनाहृतं भवति—अदत्तादानदोषो भवति, दीयमानवस्तुनायकेनाननुज्ञातत्वात्, तथा येषां सम्बन्धि स्वामिना बलादाच्छिद्य दीयते ते कदाचित्प्रद्विष्टाः सन्तोऽन्यत्राऽपि तस्यैकस्य साधोर्भक्तपानव्यवच्छेदं कुर्वन्ति, तथाऽनेन सम्प्रति बलादस्माकं भक्तादि गृहीतं ततः कालान्तरेऽप्यस्मै न किमपि दातव्यमस्माभिरिति, अथवा सामान्यतः प्रद्वेषमुपयान्ति, यथाऽनेन संयतेन बलादस्माकं भक्तादि गृह्यते तस्मात्कालान्तरेण न कस्मायपि संयताय दातव्यमित्यनेकसाधूनां

भक्तादिव्यवच्छेदः, यथा ते रुष्टाः सन्तो य पूर्वमुपाश्रयो दत्तः तस्मादपि निष्काशयन्ति, आदिशब्दात्तस्करपक्षपाति भाषन्ते इति परिगृह्यते। तथा तस्य उपाश्रयस्याभावे यत् किमपि कष्टं प्राप्नुवन्ति तदप्याच्छेद्यादाननिमित्तमिति दोषः। सम्प्रति स्तेनाच्छेद्यं भावयति—

तेणो य संजयट्ठा कलुणाण अप्पणो य अट्ठाए। वोच्छेय पओसं वा न कप्पई कप्पमणुन्नाय ॥ ३७४ ॥

व्याख्या—इह स्तेना अपि केचित् संयतान् प्रति भद्रका भवन्ति, संयता अपि क्वापि दरिद्रसार्थेन सह व्रजन्ति, ततस्तान् भिक्षावेलायां भिक्षामप्राप्नुवतो दृष्ट्वा संयतानामर्थाय यदि वा स्वस्याऽऽत्मनोऽर्थाय तेषां ‘करुणानां’ कृपास्थानानां दरिद्रसार्थमानुषाणां सकाशादाच्छिद्य यद्दाति स्तेनः तत् स्तेनाच्छेद्यं ग्रहण्यं, तच्च साधूनां न कल्पते, यतस्तस्मिन् गृह्यमाणे येषां सम्बन्धि वस्तु तेषां ते पूर्वोक्तप्रकारेणैवानेकसाधूनां भक्तादिव्यवच्छेदं कुर्वन्ति, यद्वा—‘प्रद्वेषं’ रोषमुत्पादयन्ति, तथा च सति सार्थाद् निष्काशनं कालान्तरेऽपि तेषां मार्गे उपाश्रयाप्रतिलम्भ इत्यादयो दोषाः, यदि पुनस्तेऽपि सार्थिका यत्स्वाभ्युपगमकारेणानुजानन्ति तर्हि कल्पते। एतदेव गाथाद्वयेन स्पष्टं भावयति—

सज्जयभद्दा तेणा आयंती वा असंयरे जइण। जइ वेंति न घेत्तव्वं निप्फुमवोच्छेउ मा होज्जा ॥ ३७५ ॥
घयसत्तुयदिट्ठंतो समणुन्नाया व घेत्तुणं पच्छा। वेंति तयं तेसिं चिय समणुन्नाया व भुंजंति ॥ ३७६ ॥

व्याख्या—इह स्तेना अपि केचित् संयतभद्रका भवन्ति, साधवश्च कदाचिद्दरिद्रसार्थेन सह क्वापि व्रजन्ति, ततस्तेषां साधूनां भिक्षावेलायाम् ‘असंस्तरे’ अनिर्वाहे ते स्तेनाः सम्मुखाभिमुखं मार्गमाक्रामन्तो ग्रामाद् ग्रामान्तरं गच्छन्तो वा यदि तेषां दरिद्र

सार्थमानुगाणां बलादाच्छिद्य भक्तादि प्रयच्छन्ति तर्हि न ग्राह्यं, यतो मा भूत् 'निष्क्षेमः' सोऽयोभिष्क्रमणं एकानेकसाधूना तस्या भक्तादिप्यवच्छेदो वा, यदि पुनस्तेऽपि सार्थिका स्तेनैर्बलादाप्यमाना एव ब्रुवते, यथास्माकमहो घृतसक्तुदृष्टान्त उपस्थित, घृतं हि सक्तुमध्ये भक्षितं विशिष्टसंयोगाय जायते, एवमस्माकमप्यवश्यं चौरेभ्यो देयम्, ततो यदि चौरा अपि युष्मभ्यं दापयन्ति ततो महानस्माक समाधिरिति, तत एवं सार्थिकैरनुज्ञाताः साधवो दीयमानं गृह्णन्ति, पश्चाच्चौरेष्वपगतेषु भूयोऽपि तद्द्रव्यं गृहीत तेभ्य' समर्पयन्ति, यथा तदानीं चौरभयादस्माभिर्गृहीतं, सम्प्रति ते गतास्तत एतदस्मीयं द्रव्यं यूयं गृह्णीतेति, एवं चोक्ते सति यदि तेऽपि समनुजानते यथा—युष्मभ्यमेवास्माभिर्दत्तमिति तर्हि भुञ्जते, कल्पनीयत्वादिति । अनेन 'कप्पणुभायं' इत्यवयवो व्याख्यातः । तदेवमुक्तमाच्छेद्य-द्वारम्, इदानीमनिसृष्टद्वारमाह—

अणिसिट्ठं पडिकुट्ठं अणुनायं कप्पए सुविहियाण । लड्डुग चोल्लग जंते संखडि खीरावणाईसु ॥ २७७ ॥

व्याख्या—निसृष्टम्—अनुज्ञातं तद्विपरीतमनिसृष्टमननुज्ञातमित्यर्थः, तत् 'प्रतिकुष्टं' निराकृतं तीर्थकरगणधरैः, अनुज्ञातं पुनः कल्पते सुविहितानां, तच्चानिसृष्टमनेकधा, तद्यथा—'लड्डुकविषय' मोदकविषय, तथा 'चोल्लकविषयं' भोजनविषयं, 'यन्त्रे' इति कोल्हुकादियन्त्रकविषयं, तथा 'संखडिविषयं' विवाहादिविषयं, तथा 'क्षीरविषयं' दुग्धविषयं, तथा आपणादिविषयम्, आदिशब्दा द्गृहादिविषयमपसेयम्, इयमत्र भावना—इह सामान्यतोऽनिसृष्टं द्विधा, तद्यथा—साधारणानिसृष्टं भोजनानिसृष्टं च, तत्र भोजनानिसृष्टं चोल्लकशब्देनोक्तं, साधारणानिसृष्टं तु शेषभेदैरिति । तत्र मोदकविषयसाधारणानिसृष्टोदाहरणं गाथाचतुष्टयेनाह—

बत्तीसा सामन्ने ते कहिं एक्काउ गयत्ति इय वुत्ते । परसंतिएण पुन्नं न तरसि काउंति पच्चाह ॥ २७८ ॥

अथिय हु बत्तीसाए विभेहिँ तवेगमोयगो न भवे । अप्पवय पहुआयं जइ जाणसि देहि तो मज्झ ॥ ३७९ ॥
लाभिय नेंतो पुट्ठो किं लद्ध नत्थि पेच्छिमो दाए । इयरोऽवि आह नाहं देमित्ति सहोढ चोरत्ति ॥ ३८० ॥
गिण्हण कड्ढण ववहार पच्छकडुड्डाह पुच्छ निव्विसए । अपहुंमि भवे दोसा पहुंमि दिन्ने तओ गहणं ॥ ३८१॥

व्याख्या—रत्नपुरे पुरे माणिभद्रप्रमुखा द्वात्रिंशद्वयस्या, ते कदाचिदुद्यापनानिमित्तं साधारणान् मोदकान् कारितवन्तः, कारयित्वा च समुदायेनोद्यापनिकायां गताः, तत्र चैको मोदकरक्षको मुक्तः, शेषास्त्वेकत्रिंशद्वयस्याः स्नातुं गताः, अत्रान्तरे च कोऽपि लोलुपः साधुर्भिक्षार्थमुपातिष्ठत्, दृष्टाश्च तेन मोदकाः, ततो भावलाम्पट्यो धर्मलाभयित्वा तं पुरुषं मोदकान् याचितवान्, स आह—भगवन् ! न ममैकाकिनोऽधीना एते मोदकाः, किन्त्वन्येषामप्येकत्रिंशज्जनानां, ततः कथमहं प्रयच्छामि ?, एवमुक्ते साधुराह—ते 'कहिं 'ति कुत्र गताः? स आह—तेषां स्नातुमिति, तत एवमुक्ते भूयोऽपि साधुस्तं भणति—परसत्केन मोदकसमूहेन त्वं पुण्यं कर्तुं न शक्नोषि ? यदेवं याचितोऽपि न ददासि, महानुभाव ! मूढस्त्वं, यः परसत्कानपि मोदकान् मह्यं दत्त्वा पुण्यं नोपार्जयसि, अपि च द्वात्रिंशतमपि मोदकान् यदि मे प्रयच्छसि तथापि तव भागे एक एव मोदको याति, तत एवमल्पव्ययं बह्वर्थं दानं यदि जानासि सम्यग्हृदयेन तर्हि ततो देहि मे सर्वानपि मोदकानिति, तत एवमुक्ते तदा तेन सर्वेऽपि मोदका दत्ताः, भृतं साधुभाजनं, ततः सञ्जातहर्षः साधुस्तस्मात्स्थानाद्विनिर्गन्तुं प्रवृत्तः, अत्रान्तरे च सम्मुखमागच्छन्ति माणिभद्रादयः, पृष्टश्च तैः साधुः—भगवन् ! किमत्र त्वया लब्धम्, ततः साधुना चिन्तितं, यद्येते ते मोदकस्वामिनस्ततो यदि मोदका लब्धा इति वक्ष्ये तर्हि भूयोऽपि ग्रहीष्यन्ति, तस्मान्न किमपि लब्धमिति वच्मीति, तथैवोक्तवान्, ततस्तैर्मा

णिमद्रप्रमुखैर्मोराकान्तं साधुमपलोक्य सञ्जातशङ्कैर्माणि—दर्शय निजभाजनं साधो ! येन मेसामहे, साधुश्च न दर्शयति, ततो बलात्मलोकितं, दृष्टा मोदकाः, ततः कोपारुणलोचनैः साभिक्षेपं राजपुरुषाः पृष्टाः—यथा किं भोः ! त्वयाऽस्मै सर्वेऽपि मोदका दत्ताः ?, स भयेन कम्पमानोऽवोचत्—न मया दत्ताः, एवं चोक्ते माणिभद्रादिभिः साधुरूचे—चौरस्त्वं पाप साधुवेषविडम्बकः 'सहोढ' इति सलोप्त्रस्त्वानीं प्राप्तोऽसि ? कुतस्ते मोक्ष इति गृहीतो पश्चाच्छेटी, कर्षितो बहुना, ततः पश्चात्कृत इति गृहीत्वा सकलमपि पामरजोहरणादिकमुपकरणं गृहस्थीकृतः, ततः 'चत्वारं' इति नीतो राजकुलं, कथितो धर्माधिकरणिकानां, पृष्टश्च तैः साधुश्च न किमपि लज्जया वक्तुं शक्तवान्, ततस्तैः परिभावितं—नूनमेष चोर इति, परं साधुवेषधारीति कृत्वा प्राणैर्मुक्तो निर्विषयश्चाऽऽज्ञापितः, एवमत्र भावना—अनापृच्छे दातरि एवेऽन्यतरोक्ता ग्रहणकर्षणादयो दोषा भवन्ति, 'पहुंमि'त्ति तृतीयार्थे सप्तमी, यथा 'तिसु तेसु अलंकिया पुहवी' इत्यत्र, ततोऽयमर्थः—तस्मात् 'प्रभुणा' नायकेन दत्ते सति साधुना ग्रहणं प्रकाशैः कर्तव्यं, तत्राप्याश्लेषादिक सम्यक् परिहर्तव्यमिति । उक्त सोदाहरणं मोदकद्वारम्, अधुना क्षेपण्यपि द्वाराण्यविवेकेन व्याख्यानयति—

एमेव य जंतंमिवि संखडि खीरे य आवणाईसु । सामन्न पडिकुट्ठ कप्पइ घेत्तुं अणुन्नायं ॥ ३८२ ॥

व्याख्या—'एवमेव' मोदकोदाहरणप्रकारेण यन्त्रेऽपि संखड्यामपि क्षीरे चाऽऽपणादिषु च यत् 'सामान्यं' साधारणं तत् स्वामिभिः सर्वैरप्यनिसृष्टं सत् प्रतिकुष्टं तीर्थकरगणधरैः, अनुज्ञातं पुनः सर्वैरपि स्वामिभिः कल्पते ग्रहीतुं, तत्र दोषाभावात् । सम्प्रति चुल्लकद्वारस्य प्रस्तावनां चुल्लकस्य भेदं च प्रतिपादयति—

चुल्लत्ति दारमहुणा बहुवत्तव्वंति तं कय पच्छा । वभेह गुरु सो पुण सामिय हत्थीण विसेओ ॥ ३८३ ॥

व्याख्या—अधुना चुल्लकद्वारं व्याख्येयम्, अथोच्येत—मूलगाथायां द्वितीये स्थाने निर्दिष्टमपि कस्माद्व्याख्यावेलायां पश्चात्कृतं ?, तत आह—बहुवक्तव्यमिदं द्वारमतो व्याख्यानवेलायां पश्चात्कृतं, तत्र 'गुरुः' तीर्थकरादिः 'वर्णयति' प्ररूपयति यथा स चुल्लको द्विधा, तद्यथा—स्वामिनो हस्तिनश्च। तत्र प्रथमतः स्वाम्यनिर्दिष्टं चुल्लकमाह—

छिन्नमछिन्नो दुविहो होइ अछिन्नो निसिट्ठमणिसिट्ठो। छिन्नमि चुल्लगमी कप्पइ घेत्तु निसिट्ठमि ॥ ३८४ ॥

व्याख्या—इह द्विधा चुल्लकः, तद्यथा—छिन्नोऽच्छिन्नश्च, इयमत्र भावना—इह कोऽपि कौटुम्बिकः क्षेत्रगतहालिकानां कस्यापि पार्श्वे कृत्वा भोजनं प्रस्थापयति, स यदैकैकहालिकयोग्यं पृथक् पृथग् भाजने कृत्वा प्रस्थापयति तदा स चुल्लकश्छिन्नः, यदा तु सर्वेषामपि हालिकानां योग्यमेकस्यामेव स्थाल्यां कृत्वा प्रेषयति तदा सोऽच्छिन्नः, एवमन्यत्राप्युद्यापनिकादौ छिन्नाच्छिन्नत्वं चुल्लकस्य भावनीयम्। अच्छिन्नोऽपि द्विधा, तद्यथा—निसृष्टोऽनिसृष्टश्च, तत्र निसृष्टः कौटुम्बिकेन येषां च हालिकानां योग्यः स चुल्लकः तैश्च साधुभ्यो दानाय मुत्कलित, इतरस्त्वमुत्कलितोऽनिसृष्टः। तत्र यस्य निमित्तं छिन्नः स एव येतस्यात्मीयस्य छिन्नस्य दाता तर्हि तस्मिंश्छिन्ने अपि चुल्लके तत्स्वामिना दीयमाने साधूनां ग्रहीतुं कल्पते, दोषाभावात्, तथाऽच्छिन्नेऽपि सर्वैरपि तत्स्वामिभिर्निसृष्टे—अनुज्ञाते तं ग्रहीतुं कल्पते, तत्रापि दोषाभावात्। एनमेवार्थं सविशेषतरमाह—

छिन्नो दिट्ठमदिट्ठो जो य निसिट्ठो भवे अछिन्नो य। सो कप्पइ इयरो उण अदिट्ठदिट्ठो वऽणुन्नाओ ॥ ३८५ ॥

व्याख्या—यच्चुल्लके यस्य निमित्तं छिन्नः स तेन दीयमानो मूलस्वामिना कौटुम्बिकेनादृष्टो दृष्टो वा कल्पते, तथा यश्चाच्छिन्नो

योऽपि च यस्य निश्रितं छिन्नः स स्वस्वस्वामिभिरनुज्ञातोऽन्येन दीयमानः स्वस्वस्वामिभिरदृष्टो दृष्टो वा कल्पते, 'इयरो उ न'त्ति इतर एतद्व्यतिरिक्तः पुनरयं छिन्नोऽछिन्नो वा स्वस्वस्वामिभिरननुज्ञातोऽदृष्टो दृष्टो वा न कल्पते, प्रान्तकआरणादिदोषसम्भवात्, अयं च विधिः साधारणनिसृष्टेऽपि वेदितव्यः । तथा चैतदेव गाथार्द्धेन प्रतिपादयति—

अणिसिट्ठमणुन्नाय कप्पइ घेत्तुं तहेव अदिट्ठं ।

व्याख्या—अनिसृष्टे—साधारणानिसृष्टे पूर्वं स्वस्वामिभिः सर्वैरननुज्ञातमपि यदि पश्चादनुज्ञातं भवति तर्हि कल्पते ग्रहीतुं । तथा-ऽनुज्ञातं सद् सर्वैः स्वामिभिरन्यमनस्कत्वादिना कारणेनादृष्टमपि ग्रहीतुं कल्पते, दोषाभावात् । सम्प्रति हस्तिनश्चुल्लकानिसृष्टं गाथो-त्तरार्द्धेन भावयति—

जड्डुस्स य अनिसिट्ठं न कप्पई कप्पइ अदिट्ठं ॥ ३८६ ॥

व्याख्या—हस्तिनो भक्तं मिण्ठेनानुज्ञातमपि राज्ञा गजेन चानिसृष्टम्—अननुज्ञातं न कल्पते, वक्ष्यमाणग्रहणादिदोषसम्भवात्, तथा मिण्ठेन स्वकीयं भक्तं दीयमानं गजेनादृष्टं कल्पते, गजादृष्टग्रहणे तु वक्ष्यमाणोपाश्रयभञ्जनादिदोषप्रसङ्गः । अत्रैव विधेरन्यथाकरणे दोषानाह—

निवपिंडो गयभत्ते गहणाई अंतराइयमदिन्नं । डुंबस्स सतिपुवि हु अभिक्ख वसहीए फेडणया ॥ ३८७ ॥

र्थिनः पाषण्डिनः साधून् वा समागतानवगम्य तेषामर्थायाधिकतरं तण्डुलादि प्रक्षिप्यते सोऽध्यवपूरक इति मिश्रजातादस्य भेदः । अमुमेव भेदं दर्शयति—

तंडुलजलआयाणे पुप्फफले सागवेसणे लोणे । परिमाणे नाणत्तं अज्झोयरमीसजाए य ॥ २८९ ॥

व्याख्या—इह 'व्यत्ययोऽप्यासा'मिति वचनात्सप्तमी यथायोगं षष्ठ्यर्थे तृतीयार्थे च वेदितव्या, ततोऽयमर्थः—अध्यवपूरकस्य मिश्रजातस्य च परस्परं नानात्वं तण्डुलजलपुष्पफलशाकवेसनलवणानाम् 'आदाने' आदानकाले यत् विचित्रं परिमाणं तेन द्रष्टव्यं, तथाहि मिश्रजाते प्रथमत एव स्थाल्यां प्रभूतं जलमारोप्यते, अधिकतराश्च तण्डुलाः कण्डनादिभिः प्रक्रम्यन्ते, फलादिकमपि च प्रथमत एव प्रभूततरं संरभ्यते, अध्यवपूरके तु प्रथमतः स्वार्थं स्तोकतरं तण्डुलादि मुच्यते, पश्चात्पाषण्ड्यर्थिकादिनिमित्तमधिकतरं तण्डुलादि प्रक्षिप्यते, तस्मात्तण्डुलादीनामादानकाले यद्विचित्रं परिमाणं तेन मिश्राध्यवपूरकयोर्नानात्वमवसेयं । सम्प्रत्यध्यवपूरकस्य कल्प्याकल्प्यविधिमाह—

जावंतिए विसोही सघरपासंडि मीसए पूई । छिन्ने विसोही दिन्नंमि कप्पइ न कप्पई सेसं ॥ २९० ॥

व्याख्या—'यावदर्थिके' यावदर्थिकमिश्रेऽध्यवपूरके शुद्धभक्तमध्यपतिते यदि तावन्मात्रमपनीयते ततो विशोधिर्भवति, अत एव च स्वगृहयावदर्थिकमिश्रोऽध्यवपूरको विशोधिकोटिरिष्यते, स्वगृहपाषण्डिमिश्रे उपलक्षणमेतत् स्वगृहसाधुमिश्रे च शुद्धभक्तमध्यपतिते पूतिर्भवति, सकलमपि भक्तं पूतिदोषदुष्टं भवतीत्यर्थः, तथा विशोधिकोटिरूपे यावदर्थिकाध्यवपूरके छिन्ने यावन्तः कणाः कार्पटिकाद्यर्थं प्रक्षिप्ताः तावन्मात्रे स्थाल्याः पृथक्कृते सति यद्वा तावन्मात्रे कार्पटिकादिभ्यो दत्ते सति शेषमुद्धरितं भक्तं तत्साधूनां कल्पते, शेषं पुन

स्वगृहयापण्डिमिश्रस्वगृहसाधुमिश्राध्यवपूरकरूपं न कल्पते, किमुक्तं भवति ?–यदि तावन्मात्रं स्थाल्याः पृथक्कृतं दत्तं वा पाषण्ड्यादि भ्यस्तथापि यच्छेषं तत् कल्पते इति। 'भाषति विसोही' इत्यवयवं विशेषतो व्याख्यानयति—

छिन्नंमि तओ उक्कड्ढियंमि कप्पइ पिहीकए सेसं । आहावणाए दिन्न च तत्तिय कप्पए सेसं ॥ २९१ ॥

व्याख्या—विशोधिकोटिरूपे यावदर्थिकेऽध्यवपूरके यावदर्थिकं पश्चात् प्रक्षिप्तं तावन्मात्रे 'छिन्ने' पृथक्कृते तत्र छेदो रेखयापि भवति तथाह—'तओ उक्कड्ढियंमि' ततः स्वस्थानादुत्कर्षिते—उत्पाटिते, एतोत्कर्षितं स्वस्थानादुत्पाट्य क्षेपभक्तस्योपरि निक्षिप्तमपि मन्यते ततो विशेषणान्तरमाह—पृथक्कृते स्थाल्या परिनिष्काशिते शेषं यत्तत्र तत्साधूनां कल्पते। अथवा 'आमावनया' उद्देशेन न छ सिक्थादिपरिगणनेन यदि तावन्मात्रं कार्पटिकादिभ्यो दत्तं स्यात् ततः शेषं कल्पते। तदेवमभिहितमध्यवपूरकद्वारं, तदभिधानाच्चाभिहिताः षोडशाप्युद्गमदोषाः। सम्प्रत्येतेषामेव विभागमाह—

एसो सोलसभेओ, दुहा कीरइ उग्गमो । एगो विसोहिकोडी, अविसोही उ चावरा ॥ २९२ ॥

व्याख्या—एष षोडशभेद उद्गमः सामान्येन द्विधा, तद्यथा—'एको विशोधिकोटिः' एको भेदो विशोधिकोटिरूपः अपरा च 'अविशोधिः' 'अविशोधिकोटिः' अविशोधिकोटिरूपो द्वितीयो भेद इत्यर्थः। तत्र यथोपसृष्टभक्ते तावन्मात्रेऽपनीते सति शेषं कल्पते स दोषो विशोधिकोटिः, शेषस्त्वविशोधिकोटिः। तत्र प्रथमतोऽविशोधिकोटिमाह—

आहाकम्मुद्देसिय चरमतिग पूइ मीसजाए य । बायरपाहुडियाति य अज्झोयरए य चरिमदुगं ॥ २९३ ॥

व्याख्या—आधाकर्म समग्रमेव, १ 'औद्देशिकस्य' विभागौद्देशिकस्यान्त्यमेदत्रयं २ तथा 'पूतिः' भक्तपानरूपा ३ 'मिश्रजातं' पाषण्डिगृहस्थमिश्रसाधुगृहस्थमिश्ररूपं ४ बादरा प्राभृतिका ५ अध्यवपूरकस्य च 'चरमद्विकं' स्वगृहपाषण्डिमिश्रस्वगृहसाधुमिश्ररूपम् ६, एषे उद्गमदोषा अविशोधिकोटिः। अनया चाविशोधिकोट्या अवयवेन स्पृष्टं शुद्धं भक्तं यथोपहतं भवति तं दोषमाह—

उग्गमकोडी अवयव लेवालेवे य अकयए कप्पे। कंजियआयामगचाउलोयससट्ठपूईओ ॥ ३९४ ॥

व्याख्या—'उद्गमकोट्याः' उद्गमदोषरूपाया अविशोधिकोट्या 'अवयवेन' शुष्कसिक्थादिना तथा 'लेपेन' तक्रादिना 'अलेपेन' वल्लचणकादिना संसृष्टं यद्भक्तं तस्मिन्नुज्झितेऽपि यत् अकृते कल्पे—अकृतकल्पत्रये इत्यर्थः पात्रे यत्प्रक्षात्परिस्रुतं तत्पूतिरवगन्तव्यम्। इह कश्चिन्मतिदौर्बल्यादित्थं विकल्पेत—यथा यदेव साधूनाथाय निर्वर्तितं तदेवैकमोदनमाधाकर्म भवति, न शेषमवश्रावणकाञ्जिकादि, ततस्तत्संसृष्टं पूतिर्न भवतीति तदस्याभिप्रायनिराकरणार्थमाह—'कंजि' इत्यादि, इह साध्वर्थमोदनेऽभिनिर्वर्त्यमाने यत्तत्संसृक्तं काञ्जिकादि तदप्याधाकर्मैव, तदवयवरूपत्वात्, ततः काञ्जिकेनाऽऽयामेन—अवश्रावणेन चावलोदकेन च यत्संसृष्टं तदपि पूतिर्भवति। एतदेव रूपकत्रयेण भाष्यकृद्व्याख्यानयति—

सुक्केणऽवि ज छिक्क तु असुइणा धोवए जहा लोए। इह सुक्केणऽवि छिक्क धोवइ कमेण भाण तु ? ॥ (भा० ३७)

लेवालेवत्ति ज वुत्त, जपि वुच्चमलेवडं। तंपि घेत्तुं ण कप्पति, तक्काइ किमु लेवडं ? ॥ (भा० ३८)

ममिरहे एगिमभे मासेरदे इय । अध्छिज्जे मणिसिहे पाओपर कीय पामिचे ॥ २ ॥ प्रक्षुमा पांडुवियामि य गविषगपिंडो य भो भंवे दुनिहो । सव्वोवि एस रासी विसोहिकोडी मुणेयव्वो ॥३॥" अथ विषिमाह—'विगिंच महसरिं' अनया विशोधिकोट्या यत् संसृष्टं भक्तं पानं वा तयपात्रकि'विगिंच' परित्यज, इयमत्र भावना–भिक्षामटता पूर्वं पात्रे शुद्धं भक्तं गृहीतं, ततस्तत्रैवानाभोगादिकारण-वशतो विशोधिकोटिदोषदुष्टं गृहीतं, पश्चाच्च कथमपि ज्ञातं–यथैतद्विनक्षितं विशोधिकोटिदोषदुष्टं मया गृहीतमिति, ततो यदि तेन विनापि निर्वहति तर्हि सकलमपि तद्विधिना परिष्ठापयति, अथ न निर्वहति तदा यदेव विशोधिकोटिदोषदुष्टं तदेव तावन्मात्रं सम्यक् परिज्ञाय परित्यजति, यदि पुनस्तत्सदृशेन सदृशवर्णेन घादितया पृथक् परिज्ञातुमशक्येन मिश्रितं भवति यद्वा 'द्रवेण' तक्रादिना तदा सर्वस्यापि तस्य विवेकः, कृते च सर्वात्मना विवेके यद्यपि केचित्सूक्ष्मा अवयवा लगिता भवन्ति तथापि तत्र पात्रेऽन्यस्मिन्नप्यन्यतः परिगृह्णन् शुद्धो यतिः, त्यक्तभक्तादेर्विशोधिकोटित्वात्, विवेकश्चतुर्धा भवति, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तथा चाह—

दव्वाइओ विवेगो दव्वे जं दव्व जं जहिं खेत्ते । काले अकालहीणं असढो जं पस्सई भावे ॥ ३९९ ॥

व्याख्या—'द्रव्यादिकः' द्रव्यक्षेत्रकालभावविषयो विवेकः, तत्र यद्द्रव्यं परित्यजति स द्रव्यविवेकः, तथा परित्याज्यं यत्र क्षेत्रे परित्यज्यते स क्षेत्रविवेकः, क्षेत्रे विवेकः क्षेत्रविवेक इति व्युत्पत्तेः, तथा यद्विशोधिकोटिदोषदुष्टमकालहीनं–शीघ्रं परित्यज्यते एष कालतो विवेकः, इह यदैव दोषदुष्टं भक्तादिपरिज्ञातं तदैव तत्कालविलम्बाभावेन परित्यक्तव्यं, परित्यागबुद्ध्या वा पृथग्–भिन्ने स्थाने कर्तव्यमन्यथा भावतस्तत्परिभोगात्संयमहानिप्रसक्तेः, तत उक्तमकालहीनमिति, तथा यत् 'असढः' अरक्तद्विष्टः सन् दोषदुष्टं पश्यति दृष्ट्वा

चाकालीन शीघ्रं परित्यजति स 'भावे' भावतो विवेकः । इह निर्वाहे सति विशोधिकोटिदोषसम्भिन्नं सकलमपि परित्यक्तव्यम्, अनिर्वाहे तु तावन्मात्रं, तत्र विधिमुपदर्शयितुकामः प्रथमतश्चतुर्भङ्गिकामाह—

सुक्कोल्लसरिसपाए असरिसपाए य एत्थ चउभंगो । तुल्ले तुल्लनिवाए तत्थ दुवे दोन्नऽतुल्ला उ ॥ ३९७ ॥

व्याख्या—अत्र शुष्कस्याऽऽर्द्रस्य च 'सदृशे' समानेऽन्यस्मिन् वस्तुनि मध्ये पतिते सति तथा 'असदृशे' असमानेऽन्यस्मिन् वस्तुनि मध्ये पतिते सति चतुर्भङ्गी भवति, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्, चत्वारो भङ्गा भवन्तीत्यर्थः, ते चेमे—शुष्के शुष्कं पतितं, शुष्के आर्द्रम्, आर्द्रे शुष्कम्, आर्द्रे आर्द्रमिति, तत्र येन येन पदेन यो यो भङ्गो लभ्यो तौ तौ तथा दर्शयति—'तत्थ'त्ति तत्र 'तुल्ये' समाने सति अन्यस्मिन् वस्तुनि मध्ये तुल्यनिपातेऽधिकरणसदृशस्य वस्तुनः प्रक्षेपे 'द्वौ' प्रथमचतुर्थरूपौ भङ्गौ लभ्यौ, तौ च 'सुक्कोल्लसरिसपाए' इत्यनेन पदेन सूचितौ, तथा द्वौ भङ्गौ द्वितीयतृतीयरूपौ 'अतुल्यात्' विसदृशात् प्रक्षिप्यमाणात् लभ्यौ, तौ च 'असरिसपाए य' इत्यनेन पदेनोक्तौ । तदेवं चतुर्भङ्गिकामभिधाय सम्प्रत्येवोद्धरणविधिमाह—

सुक्के सुक्कं पडियं विगिंचिउं होइ त सुह पढमो । बीयमि दवं छोढुं गालति दव कर दाउ ॥ ३९८ ॥

तइयंमि करं छोढुं उल्लिंचइ ओयणाइ जं तरइ । दुल्लहदव्वं चरिमे तत्तियमित्तं विगिंचति ॥ ३९९ ॥

व्याख्या—'शुष्के' वल्लचनकादौ मध्ये यत् 'शुष्कं' वल्लचनकादि पतितं तत्सुखं—भाजनप्रक्षेपादिकष्टमन्तरेण 'विगिंचिउं होइ' परित्यक्तुं भवति, परित्याज्यं भवतीत्यर्थः, एष प्रथमो भङ्गः, तथा द्वितीये भङ्गे 'शुष्के' वल्लचनकादौ मध्ये कथमप्यार्द्रं तीमनादि विशो-

भिक्षोटिदोषवत् पतितमित्येवंरूपे 'द्रवं' काञ्जिकादि तन्मध्ये प्रभूतं प्रक्षिप्य पश्चात्पात्रमवनम्य पात्रकर्णदेशे च शुष्कभक्तपानरक्षणार्थं करं च दत्वा सर्वं द्रवं गालयन्ति। तथा तृतीये शुद्धे आर्द्रे तीमनादौ मध्यपतितं शुष्कं कूरसक्तुचनकादिरूपमोदनमित्येवंरूपे तत्र तीमनादौ मध्ये 'करं' हस्तं प्रक्षिप्यौदनादि यावन्मात्रं शक्नोति तावन्मात्रमशठः सन् 'गलिंचति' आकर्षति, ततः शेषं तीमनादि कल्पते, तथा 'चरमे' आर्द्रे आर्द्रे पतितमित्येवंरूपे यदि तद्द्रव्यं 'दुर्लभम्' अन्यत्र न प्राप्यते तर्हि तदवयवस्तावन्मात्रं परित्यजन्ति, शेषं कल्पते, एषा चतुर्भङ्गिका साधूनामसंस्तरणे वेदितव्या, संस्तरणे च सकलमपि परित्यजन्ति। तथा चाह—

संथरे सव्वमुज्झति, चउभंगो असंथरे। असढो सुज्झई जेसु, मायावी जेसु बज्झई ॥ ४०० ॥

व्याख्या—'संस्तरे' निर्वाहे सति सर्वमपि पात्रस्थितं विशोधिकोटिसंस्पृष्टमुज्झन्ति, 'असंस्तरे' अनिर्वाहे पुनः 'चतुर्भङ्गी' चत्वारोऽनन्तरोक्ता भङ्गाः, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्, कथंभूतास्ते भङ्गाः? इत्याह—येषु भङ्गेषु 'अशठः' अरक्तद्विष्टः सन् वर्तमानः शुध्यति—शुद्धिमापद्यते, मायावी च येषु बध्यते। तदेवं विशोध्यविशोधिरूपं कोटिद्वयं समपञ्चमुक्तम्, इदानीं तदेवोपसंहारव्याजेन सङ्क्षेपत आह—

कोडीकरण दुविहं उग्गमकोडी विसोहिकोडी य। उग्गमकोडी छक्कं विसोहिकोडी अणेगविहा ॥ ४०१ ॥

व्याख्या—कोटीकरणं 'द्विविधं' द्विप्रकारं, द्विधा कोटिरित्यर्थः, तद्यथा—उद्गमकोटिर्विशोधिकोटिश्च, तत्रोद्गमकोटिः 'षट्कम्' आधाकर्मिकौद्देशिकान्त्यभेदत्रिकादिषड्भेदा, विशोधिकोटिः पुनरनेकविधा—औद्देशिकादिरूपा। सम्प्रत्यन्यथा कोटीः प्रतिपादयति—

नव चेव अट्ठारसगं सत्तावीसा तहेव चउपन्ना । नउई दो चेव सया उ सत्तरी होइ कोडीण ॥ ४०२ ॥

व्याख्या—प्रथमतः कोटयो नव भवन्ति, तद्यथा—स्वयं हननमन्येन घातनमपरेण हन्यमानस्यानुमोदनं, तथा स्वयं पचनमन्येन पाचनमपरेण पच्यमानस्यानुमोदनं, तथा स्वयं क्रयणमन्येन क्रापणमपरेण क्रीयमाणस्यानुमोदनम्, आद्याः षड्विशोधिकोटयोऽन्तिमास्तु तिस्रो विशोधिकोटयः, एता अपि नवकोटीः कोऽपि रागेण सेवते कोऽपि द्वेषेण, ततो द्विकेन गुणिता अष्टादश भवन्ति, अथवैवं वा कोऽपि मिथ्यादृष्टिः कुशास्त्रसम्पर्कसमुत्थवासनावशतो निःशङ्कं सेवते, कोऽपि सम्यग्दृष्टिः सन् विरतोऽप्यनाभोगादिकारणतोऽपरिज्ञानवशः, कोऽपि पुनः सम्यग्दृष्टिरपि सम्यगविरतत्वेन गार्हस्थ्यमवलम्बमानः, ततो मिथ्यात्वाज्ञानाविरतिरूपेण त्रिकेण नव गुणिताः सप्तविंशतिर्भवति, रागद्वेषौ त्वत्र पृथग् न विवक्ष्येते, यदा तु पृथग् विवक्ष्येते तदा ताभ्यां सप्तविंशतिर्गुणिता चतुष्पञ्चाशद्भवति, तथा ता एव नव कोटयः कदाचित् पुष्टमालम्बनमधिकृत्य दशविधक्षान्त्यादिधर्मपरिपालनार्थं सेव्यन्ते, यथा दुर्भिक्षे कान्तारे वाऽन्येन फलादिनाऽभ्यवहृतेनाहं देहं धृत्वा क्षान्तिं मार्दवमार्जवं यावद्ब्रह्म पालयिष्यामीति हन्ति, एवमन्येन घातनाद्यपि भावनीयं, ततो नव दशभिर्गुणिता जाता नवतिः, इयं च सामान्यचारित्रनिमित्ता, काचित् पुनश्चारित्रनिमित्ता विशिष्टज्ञानलाभसम्भवनिमित्ता च, यथाऽस्मिन् कान्तारादावन्येन फलादिनाऽभ्यवहृतेन देहमहं धृत्वा क्षान्त्यादिकं पालयिष्यामि श्रुतानि च शास्त्राण्यध्येष्ये इति हन्तीत्यादि, एषा च ज्ञानस्य प्राधान्यविवक्षणात् ज्ञाननिमित्ता भण्यते, काचित्पुनश्चारित्रनिमित्ता दर्शनस्थिरीकरणहेतुशास्त्रार्थपरिज्ञाननिमित्ता च, यथाऽस्मिन् कान्तारादावन्येन फलादिनाऽभ्यवहृतेन देहं परिपाल्य क्षान्त्यादिकं पालयिष्यामि दर्शनं च निर्मलं विधास्ये इति हन्तीत्यादि, एषा च दर्शनस्य प्राधान्यविवक्षणा दर्शननिमित्ताऽभिधीयते, तत एवं त्रिप्रकारा नवतिरिति त्रिभिर्नवतिर्गुण्यते, ततो द्वे शते सप्तत्यधिके कोटीनां भवतः, उक्तं च—" रागोई

मिच्छाई रागाई समणधम्मं नाणाई । नवै नवै सत्तावीसा नवे नवईए य गुणकारा ॥ १ ॥ " या तु दर्शनस्थिरीकरणार्थं प्रभूतक्षेपमावगाहनार्थं चारित्रार्थं च सेव्यते सा सामान्यवचारित्रनिमित्तायामन्तर्भाव्यते, ततो न सूत्रोक्तभेदसंख्यानियमव्याघातः । सम्प्रत्युद्गमदोषाणां वक्ष्यमाणोत्पादनादारदोषाणां च यतः सम्भवस्तत्तदुत्थितान् विविक्तयेनाह—

सोलस उग्गमदोसे गिहिणो उ समुट्ठिए वियाणाहि । उप्पायणाएँ दोसे साहू उ समुट्ठिए जाण ॥ ४०३ ॥

व्याख्या—एतानन्तरोक्तान् षोडशसङ्ख्यानुद्गमदोषान् गृहिणः सकाशादुत्थितान् विजानीहि, तथाहि—आधाकर्मादिदोषदुष्टं भक्तादि गृहस्थैरेव क्रियते, ये तूत्पादनाया दोषा वक्ष्यमाणास्तान् ' साधुतः ' साधोः सकाशादुत्थितान् जानीहि, धात्रीत्वादीनां साधुभिरेव क्रियमाणत्वात् । तदेवमुक्तमुद्गमद्वारं, सम्प्रत्युत्पादनाद्वारं वक्तव्यं, तत्र प्रथमत उत्पादनामाह—

णामं ठवणादविए भावे उप्पायणा मुणेयव्वा । दव्वम्मि होइ तिविहा भावम्मि उ सोलसपया उ ॥ ४०४ ॥

व्याख्या—उत्पादना चतुर्द्धा, तद्यथा—' णामं 'ति नामोत्पादना स्थापनोत्पादना ' द्रव्ये ' द्रव्यस्योत्पादना ' भावे ' भावस्योत्पादना च, तत्र नामस्थापने द्रव्यस्योत्पादना च यावन्नोआगमतो भव्यशरीरद्रव्योत्पादना प्रागुक्तगवेषणादिरिव भावनीया, ज्ञशरीरभव्यशरीरव्यतिरिक्ता तु द्रव्योत्पादना त्रिधा—सचित्तद्रव्योत्पादनाऽचित्तद्रव्योत्पादना मिश्रद्रव्योत्पादना च । भावोत्पादना द्विधा, तद्यथा—आगमतो नोआगमतश्च, तत्रागमत उत्पादनाशब्दार्थज्ञस्तत्र चोपयुक्तः, नोआगमतो भावोत्पादना तु द्विधा, तद्यथा—प्रशस्ताऽप्रशस्ता च, तत्र प्रशस्ता ज्ञानाद्युत्पादना, अप्रशस्ता ' षोडशपदा ' वक्ष्यमाणधात्रीदूत्यादिषोडशभेदा । तत्र प्रथमतः सचित्तद्रव्योत्पादनां विभावयिषुराह—

आसूयमाइएहिं वालच्चियतुरगबीयमाईहिं । सुयआसदुमाईणं उप्पायणया उ सच्चित्ता ॥ ४०५ ॥

व्याख्या—सुताश्वद्रुमादीनां द्विपदचतुष्पदापदरूपाणाम्, यथासङ्ख्यमयं प्रत्येकमभिसम्बध्यते, सुतादीनामश्वादीनां द्रुमादीनां च यथासङ्ख्यमासूयादिभिः, 'आसूयम्' औपयाचितकम्, आदिशब्दात्तत्कालादिपरिग्रहः । तथा 'वालधितुरगबीजादिभिश्च' तत्र वालैः केसरोमादिभेदभिन्नैर्विवो—व्यासो वालधिः—पुच्छो 'लोमश' पुच्छ' इति वचनात्, तुरगबीजेन च शुक्रसिक्तेन, आदिशब्दादन्योऽनुपरि-ग्रहः, या उत्पादना, तथाहि—केनचिदभिन्नभार्यायाः कस्यापि पुत्रासम्भवे देवताया औपयाचितकेन ऋतुकाले स्वसंप्रयोगेण च सुतः पुत्रिका वोत्पाद्यते, तथा निजघोटिकाया परस्य माटकप्रदानेन परघोटकमारोप्य तुरगः उत्पाद्यते, एवं यथायोगं बलीवर्दादिरपि, तथा जलसेकेन बीजारोपणेन द्रुमवल्ल्यादिः, तत इत्थं सुतादीनामुत्पादना सा सचित्तद्रव्योत्पादना। सम्प्रत्यचित्तद्रव्योत्पादनां मिश्रद्रव्योत्पादनां च प्रतिपादयति—

कणगरययाइयाणं जहेट्ठधाउविहिया उ अच्चित्ता । मीसा उ सभंडाणं दुपयाइकया उ उप्पत्ती ॥ ४०६ ॥

व्याख्या—'कनकरजतादीनां' सुवर्णरूप्यताम्रादीनां 'यथेष्टधातुविहिता' यथेष्टो यो यस्येष्टोऽनुकूलो धातुस्तस्माद्विहिता—कृता उत्पत्तिः सा 'अचित्ता' अचित्तद्रव्योत्पादना, तथा या 'द्विपदादीनां' दासादीनां 'सभाण्डानां' सालङ्कारादीनां वेतनप्रदानेन या कृता आत्मीयत्वेनोत्पत्तिः सा 'मिश्रा' मिश्रद्रव्योत्पादना । उक्ता द्रव्योत्पादना, सम्प्रति भावोत्पादनामाह—

भावे पसत्थ इयरो कोहाउप्पायणा उ अपसत्था । कोहाइजुया धायाइण च नाणाइ उ पसत्था ॥ ४०७ ॥

व्याख्या—'भावे' भावविषया उत्पादना द्विधा, तद्यथा—प्रशस्ता 'इयरा' अप्रशस्ता, तत्र या क्रोधादीनां क्रोधादियुता धात्रीत्वादीनां वोत्पादना साऽप्रशस्ता । या तु 'ज्ञानादेः' ज्ञानदर्शनचारित्राणामुत्पादना सा प्रशस्ता । इह चाप्रशस्तया भावोत्पादनयाऽधिकारः, पिण्डदोषाणां प्रक्रमुपक्रान्तत्वात् ॥ सा च षोडशभेदा, ततस्तानेव षोडश भेदान् गाथाद्वयेनाह—

घाई दूइ निमित्ते आजीव वणीमगे तिगिच्छा य । कोहे माणे माया लोभे य हवंति दस एए ॥ ४०८ ॥

पुव्विं पच्छा संथव विज्जा मंते य चुन्न जोगे य । उप्पायणाइ दोसा सोलसमे मूलकम्मे य ॥ ४०९ ॥

व्याख्या—'धात्री' बालकपरिपालिका, इह धात्रीत्वस्य यत्करणं कारणं वा तद्धात्रीशब्देनोक्तं द्रष्टव्यं, तथा विवक्षणात्, एवं दूत्यपि भावनीया, नवरं 'दूती' परसन्दिष्टार्थकथिका 'निमित्तम्' अतीताद्यर्थपरिज्ञानहेतुः शुभाशुभचेष्टादि, तथा चामुमेव निमित्तशब्दवाच्यमर्थमङ्गीकृत्य पूर्वसूरयो निमित्तशब्दस्य नैरुक्तिमन्वर्थमुत्पत्तिमेवमाचक्षते, नियतमिन्द्रियेभ्यः इन्द्रियार्थेभ्यः समाधानं चात्मनः समाश्रित्य यस्मादुत्पद्यते शुभाशुभातीतादिपरिज्ञानं तस्मात्तदिन्द्रियार्थादि निमित्तमिति, उक्तं चाङ्गविद्यायाम्—"इंदिएहिंदियत्थेहिं, समाहाणं च अप्पणो । नाणं पवत्तए जम्हा, निमित्तं तेण आहियं ॥ १ ॥" तच्चाङ्गादिभेदादष्टधा, यदुक्तम्—अंगं सरो लक्खणं (च), वंजणं सुविणो तहा । छिन्नं भोमंतलिक्खं य, एमेए (एए) अट्ठ वियाहिया ॥ १ ॥ एए महानिमित्ता उ, अट्ठ संपरिकित्तिया । एएहिं भावा नज्जंती,

---

१ अङ्गं—शरीरावयवप्रमाणस्पन्दनादिविकारफलोद्भावकं निमित्तशास्त्रं, २ स्वरः—जीवाजीवाश्रितस्वरस्वरूपफलाभिधायकं, ३ लक्षणं—लाञ्छ-माद्यनेकविधलक्षणफलसूचकं, ४ व्यञ्जनं—मषादिव्यञ्जनफलोपदर्शकं, ५ स्वप्नं—स्वप्नफलविभावकं, ६ छिन्नं—छिन्नवस्त्रादीनां, तद्विषयं शुभाशुभनिरूपकं शास्त्रं यथा 'देवेसु उत्तमो लाभो' इत्यादि, ७ भौमं—भूमिविकारफलाभिधानप्रधानं निमित्तशास्त्रं, ८ अन्तरिक्षम्—आकाशप्रभवगन्धर्वनगरादिभावफलनिवेदकं, कश्चित्स्थाने उत्पातं पठन्ति, तत्रोत्पातं सहजरुधिरवृष्ट्यादिलक्षणोत्पातनिरूपकं निमित्तशास्त्रं,

धीगनमगपसपया ॥ २ ॥" निमित्तहेतुकं च यद् ज्ञानं तदप्युपचारान्निमित्तं तदेवेहाधिकृतम्, तथा चाज्ञातादिनिमित्तहेतुकं ज्ञानमेव भणु ज्ञानो यतिर्दोषपालने वर्त्तते, 'आजीवः' आजीविका 'वनीपकः' भिक्षाचरस्तस्येव तत्समाचरणं तदपि वनीपकः, प्रच्छन्नोत्पत्तिं च स्वयमेवाग्रे वक्ष्यति, 'चिकित्सा' रोगप्रतिकारः, क्रोधमानमायालोभाः प्रतीताः, 'पूर्वसंस्तवः' मात्रादिकल्पनया परिचयकरणं, 'पश्चात्संस्तवः' श्वश्र्वादिकल्पनया परिचयकरणं, 'विद्या' स्त्रीरूपदेवताधिष्ठिता ससाधना वाऽक्षरविशेषपद्धतिः, सैव पुरुषदेवताधिष्ठिता असाधना वा मन्त्रः, 'चूर्णः' सौभाग्यादिजनको द्रव्यक्षोदः, 'योगः' आकाशगमनादिफलो द्रव्यसङ्घातः, एतेऽनन्तरोक्ता उत्पादनाया दोषाः, षोडशो दोषो 'मूलकर्म' वशीकरणम्। तत्र धात्र्या पिण्डः—धात्रीपिण्डः, किमुक्तं भवति?—धात्रीत्वस्य करणेन कारणेन च य उत्पाद्यते पिण्डः स धात्रीपिण्डः, यस्तु दूतीत्वस्य करणेनोत्पाद्यते स दूतीपिण्डः, एवं निमित्तादिष्वपि भावनीयं। तत्र प्रथमतो धात्रीपिण्डं व्याचिख्यासुर्धात्रीभेदानाह—

खीरे य मज्जणे मडणे य कीलावणंकधाई य। एक्केक्कावि य दुविहा करणे करावणे चेव ॥ ४१० ॥

व्याख्या—'खीरे' क्षीरविषये एका धात्री या स्तन्यं पाययति, द्वितीया मज्जनविषया, तृतीया मण्डनविषया, चतुर्थी क्रीडन धात्री, पञ्चम्यङ्कधात्री। एकैकाऽपि च द्विधा, तद्यथा—स्वयं करणे कारणे च, तथाहि—या स्वयं स्तन्यं पाययति बालकं सा स्वयंकरणे क्षीरधात्री, या त्वन्यया पाययति सा कारणे, एवं मज्जनादिधात्र्योऽपि भावनीयाः। सम्प्रति धात्रीशब्दस्य व्युत्पत्तिमाह—

धारेइ धीयए वा धयति वा तामिति तेण धाई उ। जहविहवं आसि पुरा खीराई पंच धाईओ ॥ ४११ ॥

व्याख्या—धारयति बालकमिति धात्री, यद्वा धीयते आत्मजप्रदानेन 'धि(धी)यते' पोष्यते इति धात्री, अथवा 'धयन्ति' पिबन्ति बालकास्तामिति धात्री, 'धात्री'ति निपातनसूत्राद्रूपनिष्पत्तिः, ताश्च धात्र्यः 'पुरा' पूर्वस्मिन् काले 'यथाविभवं' विभवानुसारेण क्षीरादिविषया बालकयोग्याः पञ्च आसन्, सम्प्रति तथारूपविभवाभावेन ता न दृश्यन्ते । तत्र यथा स्तन्यदापनधात्रीत्वं साधुः करोति तथा दर्शयति—

खीराहारो रोवइ मज्झ कयासाय देहि णं पिज्जे । पच्छा व मज्झ दाही अलं व भुज्जो व एहामि ॥ ४१२ ॥

व्याख्या—पूर्वपरिचिते गृहे साधुर्भिक्षार्थं प्रविष्टः सन् रुदन्तं बालकं दृष्ट्वा तज्जननीमेवमाह—एष बालकोऽद्यापि क्षीराहारस्ततः क्षीरमन्तरेणावसीदन् 'रोदिति' आरटति, तस्मान्मह्यं कृताशाय-विशिष्टभिक्षालाभमनोरथाय झटित्येव भिक्षां देहि, पश्चात् 'णम्' एनं बालकं 'पेज्जे' पायय स्तन्यं, यद्वा प्रथमत एनं स्तन्यं पायय पश्चान्मह्यं भिक्षां देहि, यद्वाऽलं मे सम्प्रति भिक्षया पायय स्तन्यं बालकमहं पुनर्भूयोऽपि भिक्षार्थमेष्यामि । तथा—

मइम अरोगि दीहाउओ य होइ अविमाणिओ बालो । दुल्लभयं खु सुयमुहं पिज्जाहि अहं व से देमि ॥ ४१३ ॥

व्याख्या—'अविमानितः' अनपमानितो बालो मतिमानरोगी दीर्घायुश्च भवति, विमानितः पुनर्विपरीतः । तथा दुर्लभं खलु लोके 'सुतमुखं' पुत्रमुखदर्शनं, तस्मात्सर्वाण्यप्यन्यानि कर्माणि मुक्त्वा स्वमेनं बालकं स्तन्यं पायय, यदि त्वं न पाययसि तर्हि अहं वा प्रदाम्यस्मै क्षीरं बालकाय, अन्यथा वा स्तन्यं पाययामि । अत्र 'अहं वा से देमि' इत्यनेन स्वयंकरण(णेन)धात्रीत्वं साधोर्दर्शितं, शेषपादैः कारणेन । अत्र दोषमाह—

अहिगरण भद्दपंता कम्मुदय गिलाणए य उड्डाहो । चडुकारी य अयसो नियगो अन्नं च ण संके ॥ ४१४ ॥

व्याख्या—यदि बालकजननी भद्रा-धर्माभिमुखी भवति तर्हि भावकैः साधुवचनैरावर्जिता सती अधिकरणम्—आधाकर्मादि करोति, अथ भान्ता-धर्मानभिमुखी यदि प्रद्वेषं यातीति शेष, तथा यदि स्वकर्मोदयात्कथमपि स बालो ग्लानो भवति तर्हि 'उड्डाहः' प्रवचनमालिन्य, यथा साधुना तदानीमास्थितः क्षीरं वा पायितोऽन्यथ वा नीत्वा कस्या अपि स्तन्यं पायितस्तेन ग्लानो जातः, तथा-ऽचीव चाटुकारीति लोके 'अवर्णः' अश्लाघा, तथा 'निजकः' भर्ता 'अन्यच्च' मैथुनादिकं 'पम्' इति बालपालक्षरे तथारूपता शुभवचनश्रवणतः 'अद्भुते' सम्भावयति । अथवा प्रकारान्तरेण धात्रीकरणे यो दोषस्तं दर्शयति—

अयमवरो उ विकप्पो भिक्खायरि सहि अद्दिई पुच्छा । दुक्खसहाय विभासा हिय मे धाइत्तण अज्ज ॥ ४१५ ॥
वयगंडयुक्तणुयत्तणेहिं त पुच्छिउ अयाणतो । तत्थ गओ तस्समक्ख भणाइ त पासिउ बाल ॥ ४१६ ॥

व्याख्या—अयमपरो विकल्पो धात्रीकरणे, तमेवाह–भिक्षाचर्यामविष्टेन साधुना काचित् श्राद्धिका 'अधृतिः' धृतिरहिता दृष्टा, ततः पृष्टा यथा-किमद्य त्वं सशोका दृश्यसे ?, तत एवमुक्ता सती सा भाह-यो दुःखसहायो भवति तस्मै दुःख निवेद्यते, दुःखसहायश्च स उच्यते यो दुःखप्रतीकारसमर्थः, ततः साधुराह-अहं दुःखसहायस्तस्यानिवेदयतां मे दुःखं, ततः सा भाह-अद्य मे-मम धात्रीत्वमपुत्र्यम् श्रीश्वरगृहे 'इव' स्फेटित्व ततोऽहं विषण्णा, ततः साधुराह-मा त्वं विषादं कार्षीः अहमचिरं त्वां तत्राचिरेण धात्रीं स्थापयामीति प्रतिज्ञां विधाय तस्याः पार्श्वेऽभिनवस्थापिताया धात्र्या वयःप्रभृतिकमजानानः पृच्छति, यथा किं तस्या वयः-तारुण्यं परिणतं वा ?, गण्डावपि-

स्तनापरपर्यायो किं कूर्पराकारदीर्घौ यद्वाऽतिशयेन स्थूलौ ?, शरीरेऽपि तस्याः किं स्थूलत्वं किं वा कृशत्वं ?, तत एवं पृष्ट्वा सम्भ्रमस्रो गतः सन् 'ततमक्षे' पृष्टस्वाम्यादिसमक्षं तं बालकं दृष्ट्वा भणति । किं तद्भणति ? इत्यत आह—

अहुणुट्ठियं व अणविक्खिय व इणम कुल तु मन्नामि । पुन्नेहिं जहिताए(जविच्छाए) तरई बालेण सुएमो ॥४१७॥

व्याख्या—अहमिदं मन्ये—'इदं' युष्मदीयं कुलमधुनोत्थितं—सम्प्रत्येवैश्वर्यीभूतं, यदि पुनः परम्परागतलक्ष्मीकमिदमभविष्यत् तर्हि कथं न परम्परया धात्रीलक्षणे कुशलमपि अभविष्यत् ? इति भावः, यद्वा 'अनपेक्षितम्' अपरिभावितं महत्तरपुरुषैः, तत एव, या वा सा वा धात्री ध्रियते, एतच्च बालेनासद्भूतधात्रीस्तनपानविच्छायेन 'सूचयामः' लक्षयामः, तत एवंभूतधात्रीयुक्तमपीदं कुलं 'तरति' सेवेन वर्तते तत् मन्ये पुण्यैः आकल्पनमत्स्यकुवतः यद्विवा यहच्छया—एवमेव ॥ तत एवमुक्ते सति ससम्भ्रम बालकस्य जननी जनको वा साधुं भणति—भगवन् ! के धात्र्या दोषाः ?, ततः साधुर्धात्रीदोषान् कथयति—

थेरी दुब्बलखीरा चिमिढो पेल्लियमुहो अइथणीए । तणुई उ मंदखीरा कुप्परथणियाएँ सूइमुहो ॥ ४१८ ॥

व्याख्या—या किल धात्री स्थविरा सा 'अबलक्षीरा' अबलस्तन्या इति, ततो बालो न बलं गृह्णाति, या त्वतिस्तनी तस्याः स्तन्यं पिबन् स्तनेन 'पेल्लितमुखः' चम्पितमुखावयवोऽतएवासिकाभिपिटनासिको भवति, या तु शरीरेण कृशा सा 'मन्दक्षीरा' अल्प क्षीरा, ततः परिपूर्णं तस्याः स्तन्य बालो न प्राप्नोति, तदभावाच्च सीदति, तथा या कूर्परस्तनी तस्याः स्तन्यं पिबन् बालः सूचीमुखो भवति, स हि मुखं दीर्घतया प्रसार्य तस्याः स्तन्यं पिबति, ततस्तथारूपाभ्यासतस्तस्य मुखं सूच्याकारं भवति, उक्तं च—"निस्यामा स्य

विरां धात्रीं, सूच्यास्यः कृर्पास्तनीम् । चिपिटः स्थूलसोष्ठां, पर्यस्तन्यीं कृशो भवेत् ॥ १ ॥ भाव्यं भवति स्थूरायास्तनुन्यास्त्वबलं करम् । तस्मान्मध्यस्तन्याया, स्तन्यं पुष्टिकरं स्मृतम् ॥ २ ॥ अविस्तनी तु चिपिटं, स्वरपीना तु यन्तुरम् । मध्यस्तनी महाच्छिद्रा, धात्री सौम्यमुखाङ्गुरी ॥ ३ ॥ ” इत्यादि । यथा चाभिनवस्थापिता धात्री उक्तदोषदुष्टा तस्मान्न युक्ता, किन्तु चिरंतन्येवेति भावः । तथा—

जा जेण होइ वन्नेण उक्कडा गरहए य तं तेणं । गरहइ समाण तिब्व पसत्थमियर च दुन्वन्नं ॥ ४१९ ॥

व्याख्या—या अभिनवस्थापिता धात्री येन ‘ वर्णेन ’ कृष्णादिनोत्कटा भवति तां तेन वर्णेन ‘ गर्हते ’ निन्दति, यथा—“ कृष्णा भंजयते वर्णं, गौरी तु बलवर्जिता । तस्माच्छ्यामा भवेद्धात्री, बलवर्णैः प्रशंसिता ॥ १ ॥ ” इत्यादि । तथा यामभिनवस्थापितां गर्हते यस्याः ‘ समाना ’ समानवर्णा चेच्चिरन्तनी स्थाप्यमाना भवति तर्हि तां ‘ तीव्रम् ’ अतिशयेन ‘ प्रशस्तां ’ प्रशस्तवर्णां ख्यापयते, इतरां त्वभिनवस्थापितां दुर्वर्णाम् । एवं चोक्ते सति गृहस्वामी साध्वभिमेतां धात्रीं धारयति इतरां तु परित्यजति, तथा च सति यो दोषस्तमाह—

उव्वट्टिया पओस छोभग उब्भामओ य से ज तु । होज्जा मज्झत्ति विगो विसाइ इयरीवि एमेव ॥ ४२० ॥

व्याख्या—या अभिनवस्थापिता धात्री उद्वर्तिता—धात्रीत्वात् च्याविता सा साधोरुपरि प्रद्वेषं कुर्यात्, तथा सति छोभग दपाद्—यथा-मयम् ‘ उद्भ्रामकः ’ जारोऽनया धात्र्या सह तिष्ठतीति, तथा ‘से’ तस्य साधोर्यत्प्रद्वेषपश्चात्कर्तव्यं तदपि यत्तदोर्नित्याभिसम्बन्धात् तदपि कुर्यात्, याऽपि चिरन्तनी सम्प्रति स्थापिता साऽपि कदाचिदेवं चिन्तयति—यथैतस्या धात्रीत्वात् च्यावनं कृतम्, एवमेव कदा-

चिखुम्मनसा ममापि ' विघ्नो ' धात्रीत्वात् व्यावनरूपोऽन्तराय' करिष्यते, तत एवं विचिन्त्य मारणाय ' विषादि ' गरमद्यपि प्रयुञ्जीत।
उक्ता क्षीरधात्री, साम्प्रतं शेषधात्रीराभिस्य दोषानतिदेशेनाह—

एमेव सेसियासुवि सुयमाइसु करणकारणं सगिहे । इड्ढीसु धाईसु य तहेव उव्वट्टियाण गमो ॥ ४२१ ॥

व्याख्या—अत्र षष्ठ्यर्थे सप्तमी, ततोऽयमर्थः—एवमेव यथा क्षीरधात्र्यास्तथा ' शेषिकास्वपि ' शेषाणामपि मज्जनादिधात्रीणां ' सुतमातृषु ' सुतमातृकल्पानां यत् स्वय करण मज्जनादेर्यच्चान्यया कारणं तत् ' स्वगृहे ' बालकमातृगृहे गतः सन् साधुर्यथा करोति तथा वाच्यं, तथा च सति ' अहिगरण भद्द पता ' इत्यादिगाथोक्ता दोषा वक्तव्याः, तथा तथैव क्षीरधात्रीगतेनैव प्रकारेण ' ऋद्धिषु ' ऋद्धिमत्सु ईश्वरगृहेषु अभिनवस्थापितानां मज्जनादिधात्रीणां ' धाईसु य'त्ति भावप्रधानोऽयं निर्देशः पञ्चम्यर्थे च सप्तमी, ततोऽयमर्थः—धात्रीत्वेभ्य उद्वर्तितानां—च्यावितानां (गमो) योगः 'उव्वट्टिया पओसं' इत्यादिरूपः स सकलोऽपि तथैव वक्तव्यः। अतिसङ्क्षिप्तमिदमुक्तम्, अतो विशेषत एतद्भावयिषुः प्रथमतो मज्जनधात्रीत्वस्य करणं कारणं च तथाऽभिनवधात्र्या दोषकथनं च यथा साधुः कुरुते तथा भावयति—

लोलइ महीऍ धूलीऍ गुडिओ ण्हाणि अहव ण मज्जे । जलभीरु अबलनयणो अइउप्पिलणे अ रत्तच्छो ॥४२२॥

व्याख्या—एष बालो मह्यां ' लोलयति ' लोठते ततो धूल्यां गुण्डितो वर्तते तस्मात्स्नापय, एतत् मज्जनधात्रीत्वस्य कारणम्, अथवा यदि पुनस्त्वं न पारयासि ततोऽहं ' मज्जामि ' स्नपयामि, एतत्स्वयं मज्जनधात्रीत्वस्य करणम्, अथवाऽन्यया मज्जनधात्रीत्वस्य

कारणं, क्वापीश्वरगृहे काऽपि मज्जनधात्री धात्रीत्वात् स्फेटिता, साधुश्च तस्या गृहं भिक्षार्थं प्रविष्टः, तां च धात्रीत्वात्परिभ्रंशेन विषण्णां दृष्ट्वा पूर्वप्रकारेण च पृष्ट्वा कृत्वा च प्रतिज्ञामीश्वरगृहे च गत्वाऽभिनवमज्जनधात्रीदोषप्रकटनायाह—'जलभीरु' इत्यादि, अतिशये नात्स्नापने प्रभूतजलप्लावनेन गुप्यमानो बालो गुरुरपि जातो नद्यादौ जलप्रवेशे जलभीरुर्भवति, तथा निरन्तरजलेनोत्प्लाव्यमानः 'अच लनयनः' अचलदृष्टिर्जायते रक्ताक्षश्च, यदि पुनः सर्वथाऽपि न मज्ज्यते न शरीरं तस्मादसौ नापि कान्तिभाग् दृष्टया चाबलो जायते, एषा च धात्री बालमुदिजलोत्प्लावनेन मज्जयति ततो जलभीरुत्वादयो दोषा बालस्य भविष्यन्ति, तस्मादेषा मज्जनधात्री युक्ता, एवमुक्ते सति तामभिनवस्थापितां मज्जनधात्रीं गृहस्वामी स्फेटयति, चिरन्तनीमेव कुरुते, तथा च सति त एव प्राक्तना 'उव्वाहिया पओसं' इत्यादिरूपा दोषा वाच्याः, एवमुत्तरत्रापि प्रतिगाथं भावना भावनीया। अथ मज्जनधात्री कथंभूतं बालं कृत्वा मण्डनधात्र्याः समर्पयति ?, तत आह—

अब्भंगिय संवाहिय उव्वट्टिय मज्जिय च तो बालं। उवणेइ मज्जधाई मडणधाईएँ सुइदेहं ॥ ४२३ ॥

व्याख्या—स्नानधात्री प्रथमतः स्नेहेनाभ्यङ्गितं ततो हस्ताभ्यां सम्बाधितं तदनन्तरं पिष्टिकादिनोद्वर्तितं ततो मज्जितं-शुचीभूतदेहं बालं कृत्वा मण्डनधात्र्याः समर्पयति ॥ उक्ता मज्जनधात्री, सम्प्रति मण्डनधात्रीत्वस्य कारणं करणं च तथाऽभिनवस्थापिताया धात्र्या दोषप्रकटनं च यथा साधुः कुरुते तथा दर्शयति—

उसुआइएहिं मंडेहि ताव ण अहव ण त्रिभूसेमि। हत्थिच्चगा व पाए कया गलिच्चा व पाए वा ॥ ४२४ ॥

व्याख्या—'इषुकः' इषुकाकारमाभरणम् अन्ये तिलकमित्याहुः, आदिशब्दात् छुरिकाकाराद्याभरणपरिग्रहः, इह भिक्षार्थं प्रविष्टः

सन् थाद्विश्रपिताथर्जनार्थं थालकमनामरणमवलोक्य तज्जननीमेवमाह—इत्युक्त्यादिभिः आमरणविशेषैस्तावदेनं बालकं 'मण्डय' विभूष्य, एतद् मण्डनधात्रीत्वस्य कारणम् । अथवा यदि पुनस्त्वं न मण्डयसि तर्हि विभूषयामि, एतत् स्वयं मण्डनधात्रीत्वस्य करणं । पूर्वधात्री स्थानीयाभिनवस्थापिताया मण्डनधात्र्या दोषानाह—'हस्तिमगा' हस्तयोर्याान्यामरणानि पादे कृतानि, अथवा 'गलिका' गलसत्कानि आमरणानि पादे कृतानि तस्मादेयं मण्डनधात्री मण्डनेऽभिज्ञा, ततस्तस्या मण्डनधात्रीत्वाच्यावनमित्यादि पूर्ववद्भावनीयम् । उक्ता मण्डनधात्री, सम्प्रत्यभिनवस्थापिताया' क्रीडनधात्र्या दोषमकटनं क्रीडनधात्रीत्वस्य करणं कारणं च यथा विदधाति साधुस्तथाऽऽह—

ढड्डरसर छुन्नमुहो मउयगिरो मउयमम्मणुल्लावो । उल्लावणगाईहिँ व करेइ कारेइ वा किड्डं ॥ ४२५ ॥

व्याख्या—एषाऽभिनवस्थापिता क्रीडनधात्री ढड्डरस्वरा, ततस्तस्याः स्वरमाकर्णयन् बालो 'छुन्नमुखः' क्षीणमुखो भवति, अथवा मृदुगीरेषा ततोऽनया रम्यमाणो बालो मृदुगीर्भवति, यदि वा 'मृदुमन्मनोल्लापः' अव्यक्तवाक्, तस्मान्नैषा शोभना, किन्तु चिरन्तन्येवेत्यादि भाषित्वा, तथा भिक्षार्थं प्रविष्टः धात्रीत्वपिण्डार्जनार्थं बालमुल्लापनादिभिः स्वयं क्रीडां कारयति । उक्ता क्रीडनधात्री, सम्प्रत्यङ्कधात्र्या अभिनवस्थापितायाः स्फेटनाय सामान्यतो दोषमकटनं यथा साधुः करोति तथा दर्शयति—

थुल्लीएँ वियडपाओ भग्गकडीसुक्कडाए दुक्खं च । निम्मंसकक्खडकरेहिँ भीरुओ होइ घेप्पंते ॥ ४२६ ॥

व्याख्या—इह 'स्थूलया' मांसलया धात्र्या कट्यां ध्रियमाणो बालः 'विकटपादः' परस्परमहदन्तरालपादो भवति, भग्नकट्या शुष्ककट्या वा कट्यां ध्रियमाणो दुःखं तिष्ठति, निर्मांसकर्कशकराभ्यां च ध्रियमाणो बालो भीरुर्भवति, एषा चाभिनवस्थापिता धात्री

अन्यतमदोषदुष्टा तस्माच्च युक्ता किन्तु भाक्तकल्पेवेत्यादि भणितं । अश्रुपातीत्वस्य कारणं स्वयं करणं च स्वयमेव भावनीयं, तथैवं- कोऽपि साधुर्भिक्षार्थं प्रविष्टो बालकं रुदन्तमवलोक्य तज्जननीमित्यभाणीत्—भद्रे ! गृहाणैवं बालकं येन न रोदिति, यदि पुनस्त्वं न धारयसि तर्हि वा गृह्णामि । सम्प्रति श्रीवनपात्रीत्वस्य करणे दोषं दृष्टान्तेन भावयति—

कोल्लइरे वत्थव्वो दत्तो आहिंडओ भवे सीसो । अवहरइ धाइपिंड अगुलिजलणे य साविग्नं ॥ ४२७ ॥

व्याख्या—कोल्लकिरे नगरे वार्द्धके वर्तमानाः परिक्षीणजङ्घाबलाः सङ्गमस्थविरा नाम सूरयः, तैश्चान्यदा दुर्भिक्षे जाते सति सिंहाभिधानं स्वशिष्यं आचार्यपदे स्थापयित्वा गच्छं च सकलं तस्य समर्प्यान्यत्र सुभिक्षे देशे विहारक्रमेण प्रेषितः, स्वयं चैकाकी तत्रैव तस्थौ, ततः क्षेत्रं नवभिर्भागैर्विभज्य तत्रैव यतनया मासकल्पान् वर्षारात्रं च कृतवान्, यतना च चतुर्विधा, तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः पीठफलकादिषु क्षेत्रतो वसतिपाटकेषु कालत एकत्र पाटके मासं स्थित्वा द्वितीयमासेऽन्यत्र वसतिगवेषणं भावतः सर्वत्र निर्ममत्वं, तथा च किञ्चिदूने वर्षेऽतिक्रान्ते सिंहाचार्यस्तेषां प्रवृत्तिनिमित्तं दत्तनामानं शिष्यं प्रेषितवान्, स चागतो, यस्मिन्नेव क्षेत्रविभागे पूर्वं मुक्ताः सूरयस्तस्मिन्नेव स्थिता दृष्टाः, ततः स स्वचेतसि चिन्तयामास—अहो ! भावतोऽप्यमी मासकल्पं न व्यवहरन्तु, तस्माच्च शिथिलैः सहैकत्र न स्थास्यामीति परिभाव्य वसतेर्बहिर्मण्डपिकायामुत्तीर्णः, ततो वन्दिताः सूरयः, पृष्टाः कुशलवार्त्ता, कथितं सिंहाचार्यसन्दिष्टं, ततो भिक्षावेलायामाचार्यैः सह भिक्षार्थं प्रविवेश, अन्तप्रान्तेषु च गृहेषु प्राप्तितो भिक्षां जातो विच्छायमुखः, तत सूरयस्तस्य भावमवगम्य कस्यचिदीश्वरगृहे प्रविष्टाः, तत्र व्यन्तर्यधिष्ठितः सदैव बालको रोदिति, ततः सूरयस्तं दृष्ट्वा चप्पुटिकापुरस्सरमालापयामासुः, यथा—वत्स ! मा त्वं रोदीरिति, तत एवमालापिते सूरिप्रभावतः सा पूतना व्यन्तरी प्राणेशत्, स्थितो रोदितु (तात्)

पालक:, तत्र मरुको गृहनायक:, ततो स्थापितास्तेन भूयांसो मोदका, तेषु प्रापितो दत्त: सूरिभि:, अभाषत मरुक:, ततो मुक्ताश्चितो वसतौ, ततः सूरयः स्वशरीरनिस्पृहा यथाऽऽगमविधि प्रान्तकुलेष्वटित्वा वसतावुपाजग्मुः, प्रतिक्रमणवेलायां च दत्तो भणितो–वत्स ! धात्रीपिण्डं चिकित्सापिण्डं चालोचय, स आह—युष्माभिरेव सार्धं विहृतः, ततः कथं मे धात्रीपिण्डादिपरिभोगः ?, सूरयोऽवोचन्– लघुबालकक्रीडनेन क्रीडनधात्रीपिण्डः, चप्पुटिकाकरणतः पूतनातो मोचितत्वाच्चिकित्सापिण्डः, ततः स मनुष्यः स्वचेतसि चिन्तयति— स्वयं मासतोऽपि मासकल्पं न विदधाति एतावतश्च पिण्डं दिने दिने गृह्णाति मां पुनरेकदिनगृहीतमभ्यालोचयति, तत एवं विचिन्त्य प्रद्वेषतो वसतेर्बहिः स्थितः, ततस्तस्य सूरिविषयप्रद्वेषदर्शनतः कुपितया सूरिगुणावर्जितया देवतया तस्य शिक्षार्थं वसतावन्धकारं सवातं च वर्षं विकुर्वितं, ततः स भयभीतः सूरीनाह—भगवन् ! कुत्राहं व्रजामि ?, ततस्तैः क्षीरोदजलधवलविनिर्मलहृदयैरभाणि—वत्स ! एहि वसतौ प्रविशेति, स आह—भगवन् ! न पश्याम्यन्धकारेण द्वारमिति, ततोऽनुकम्पया श्लेष्मणा सूरिभिर्निजाङ्गुलिरुत्क्षिप्योर्ध्वी- कृता, सा च दीपशिखेव ज्वलितु मद्या, ततः स दुरात्मा पुनोऽप्यचिन्तयत्—अहो ! एतस्य परिग्रहे वह्निरप्यस्ति, एवं च चिन्तयन् देव- तया निर्भर्त्सितो हा ! दुष्टशिष्याधम ! एतावतानपि सर्वगुणरत्नाकरान् सूरीनन्यथा चिन्तयसि, ततो मोदकलाभादिको वृत्तान्तः सर्वोऽपि यथावस्थितो देवतया कथयामासे, जाता तस्य भावतः प्रत्यावृत्तिः, क्षामिताः सूरयः, आलोचितं सम्यक् । सूत्रं सुगमं, नवरं 'सादिव्यं' देवतासान्निध्यम् । एतदेव गाथाद्वयेन भाष्यकृद्दर्शयति—

ओमे संगमथेरा गच्छ विसज्जति जंघबलहीणा । नवभाग खेत्त वसही दत्तस्स य आगमो ताहे ॥ ( भा० ४० )

उवसयबाहिं ठाणं अन्नाउंछेण संकिलेसो य । पूयणचेडे मा रुय पडिलाभण वियडणा सम्म ॥ ( भा० ४१ )

व्याख्या—सुगमं, नवरं 'पूयणखेडे'त्ति पूतना-क्षुद्रव्यन्तरी तया गृहीते 'चेटे' बालके रोदिति, 'विकटना' आलोचनम् । उक्तं धात्रीद्वारम्, अथ दूतीद्वारमाह—

सग्गाम परग्गामे दुविहा दूई उ होइ नायव्वा । सा वा सो वा भणई भणइ व तं छन्नवयणेणं ॥ ४२८ ॥

व्याख्या—इह दूती द्विधा, तद्यथा—स्वग्रामे परग्रामे च, तत्र यस्मिन् ग्रामे साधुर्वसति तस्मिन्नेव ग्रामे यदि सन्देशककथिका तर्हि सा स्वग्रामदूती, या तु परग्रामे गत्वा सन्देशं कथयति सा परग्रामदूती, एकैकाऽपि च द्विधा, तद्यथा—प्रकटा छन्ना च, तत्र सा तव माता स वा तव पिता एवं भणति—सन्देशं कथयति, सा प्रकटा, या तु तं सन्देशं छन्नवचनेन कथयति सा छन्ना । एनमेवार्थं सविशेषं व्यक्तीकरोति—

एक्केक्कावि य दुविहा पागड छन्ना य छन्न दुविहा उ । लोगुत्तरि तत्थेगा बीया पुण उभयपक्खेऽवि ॥ ४२९ ॥

व्याख्या—इह दूतीत्वसमाचरणमपि दूती, साऽपि चैकैका स्वग्रामविषया परग्रामविषया च द्विधा, तद्यथा—प्रकटा छन्ना च, तत्र छन्ना पुनरपि द्विधा, तद्यथा—एका 'लोकोत्तरे' लोकोत्तर एव, द्वितीयसङ्घाटकसाधोरपि गुप्ता इत्यर्थः । द्वितीया पुनरुभयपक्षेऽपि, लोके लोकोत्तरे च, पार्श्ववर्तिनो जनस्य सङ्घाटकसत्कद्वितीयसाधोरपि च गुप्तेति भावः । स्वग्रामपरग्रामविषयां प्रकटां दूतीमाह—

भिक्खाई वच्चते अप्पाहणि नेइ खंतियाईणं । सा ते अमुग माया सो य पिया ते इम भणइ ॥ ४३० ॥

व्याख्या—'भिक्षादौ' भिक्षादिनिमित्तं व्रजन्नित्यर्थः, स्वग्रामे तस्यैव ग्रामस्य सत्के पाटकान्तरे परग्रामे वा 'खंतियाईणं' जनन्यादी

नाम् ' अप्पाहणि ' सन्देशं कथयति, यथा सा ते माताऽपुरुं भणति, स वा ते पिता इद भणति । सम्प्रति स्वग्रामपरग्रामादिरागो लोको घरे ठर्या दूतीमाह—

मुहुत्तं खु गरहिय अप्पाहिउ थिइयपच्चया भणति । अविकोविया सुया ते जा आह इम भणसु खंतिं ॥ ४३१ ॥

व्याख्या—कोऽपि साधुः कस्याश्चित् पुत्रिकया ' अप्पाहितः' संदिष्टः सन् एवं चिन्तयति दूतीत्वं खलु गर्हितं, सावद्यत्वात्, ततः एवं विचिन्त्य द्वितीयप्रत्ययात्—द्वितीयसङ्घाटकसाधुर्मा मां दूतीत्वोपयुक्तं ज्ञासीदित्येवमर्थं भाषान्तरेण भणति—यथा ' अविकोविदा ' अकुशला भिक्षुशासने सा तव सुता या आह—इद भण मदीयां ' खन्ति ' जननीमिति, साऽप्यन्यगतार्थसन्देशिका द्वितीयसङ्घाटकसाधुचित्तरक्षणार्थमेवं भणति—वारयिष्यामि तां निजसुतां येन पुनरेवं न सन्दिशतीति । सम्प्रति स्वग्रामविषयामुभयरूपप्रच्छन्नां दूतीमाह—

उभयेऽवि य पच्छन्ना खंत ! कहिज्जाहि खंतियाएँ तुमं । तं तह संजायंति य तहेव अह स करेज्जासि ॥ ४३२ ॥

व्याख्या—' उभयस्मिन्नपि च ' लोकलोकोत्तररूपे पक्षे प्रच्छन्ना दूतीयं, यथा ' खंत 'त्ति विभक्तिलोपात् खन्तस्य—पितुरथवा ' खन्तिकायाः ' जनन्यास्त्वं कथय, यथा तद् विदितं विवक्षितं कार्यं तथैव सञ्जातम्, अथवा यद्विवक्षितं तथैव कुर्याः । सम्प्रति भक्तं परग्रामदूतीत्वमाश्रित्य दोषान् दृष्टान्तेनोपदर्शयति—

गामाण दोण्ह वेरं सेज्जायरि धूय तत्थ खतस्स । वहपरिणय खंतऽज्झत्थ(प्पाह)णं व णाए कए जुद्धं ॥ ४३३ ॥

जामाइपुत्तपइमारणं च केण कहियति जणवाओ । जामाइपुत्तपइमारएण खतेण मे सिट्ठं ॥ ४३४ ॥

व्याख्या—विस्तीर्णो नाम ग्रामः, तस्योपकण्ठे गोकुलाभिधो ग्रामः, विस्तीर्णग्रामे च धनदत्तो नाम कुटुम्बी, तस्य भार्या प्रियमतिः, तस्या दुहिता देवकी, सा च तस्मिन्नेव ग्रामे सुदरेण परिणीता, तस्याः पुत्रो बलिष्ठो, दुहिता रेवतिः, सा च गोकुलग्रामे सङ्गमेन परिणिन्ये, प्रियमतिश्चायुःक्षयात् पञ्चत्वमुपगता, धनदत्तोऽपि संसारभयभीतः प्रव्रज्यामग्रहीत्, गुरुभिश्च सार्द्धं विहरति । ततः कालान्तरे पुनरपि यथाविहारक्रमं तत्रैव ग्रामे समागतो निजदुहितुर्देवक्या वसतावस्थात्, तदानीं च तयोर्द्वयोरपि ग्रामयोः परस्परं वैरं वर्त्तते, विस्तीर्णग्रामवासिना च लोकेन गोकुलग्रामस्योपरि धाटी मूभिता, धनदत्तश्च साधुर्गोकुलग्रामे भिक्षार्थं चलितवान्, ततो देवक्या दुहित्रा तथ्यावर्या भणितो—यथा हे पितः ! त्वं गोकुलग्रामे यास्यसि, ततो निजदौहित्र्या रेवत्याः कथय यथा तव जनन्या सन्दिष्टम्—अयं ग्रामस्तव ग्रामस्योपरि छन्नधाटया समागमिष्यति ततः सकलमपि स्वकीयमेकान्ते स्थापयेरिति, ततः साधुना तथैव तस्याः कथितं, तया च निजभर्तुः, तेन च सकलग्रामस्य, ततः सर्वोऽपि ग्रामः सन्नद्धबद्धकवचोऽभवत्, आगतश्च द्वितीयदिने धाटया विस्तीर्णग्रामो, जातं परस्परं महायुद्धं, तत्र सुन्दरो बलिष्ठश्च धाटया सह गतो, सङ्गमश्च गोकुलग्रामे वसति, तत्र त्रयोऽपि च युद्धे पञ्चत्वमुपजग्मुः, देवकी च पतिपुत्रजामातृमरणमाकर्ण्य विलपितुं प्रावर्तत, लोकश्च तन्निवारणाय समागतोऽवादीत्—यदि गोकुलग्रामो धाटीमागच्छन्तीं नाज्ञास्यत् ततोऽसन्नद्धो नाभोत्स्यत, तथा च न तत्र पत्यादयो म्रियेरन्, ततः केन दुरात्मना गोकुलग्रामो ज्ञापितः?, एतच्च लोकस्य वचः श्रुत्वा सञ्जातकोपा सैवमवादीत्—मयाऽजानतया पित्रा दुहितुः सन्दिष्टं, ततस्तेन साधुवेषविडम्बकेन मत्पतिपुत्रजामातृमारकेण पित्रा ज्ञापितः, ततः स लोके स्थाने स्थाने धिक्कारं लभते । प्रवचनस्य च मालिन्यमुपपादि । सूत्रं सुगमम्, उक्तं तृतीयद्वारम्, अथ निमित्तद्वारमाह—

नियमा तिकालविसएऽवि निमित्ते छव्विहे भवे दोसा । सज्जं तु वट्टमाणे आउभए तत्थिम नाय ॥ ४३५ ॥

व्याख्या—'त्रिकालविषयेऽपि' अतीतविषये वर्तमानविषये भाविष्यद्विषये च भस्येकं 'षड्विधे' लाभालाभसुखदुःखजीवितमरणरूपे निमित्ते नियमाद्दोषा भवन्ति, ते च दोषा 'आउभए'त्ति केचिदात्मविघातिनस्तस्य साधोर्मारणादिदोषा इत्यर्थः, केचिदुभयविघातिनः ये साधोः तेषस्य च जीवस्य पातकत्वम्, उपलक्षणमेतत्, केचित्केवलपरविघातिनश्च, तत्र 'वर्तमाने' वर्तमानकालविषये निमित्ते प्रयुज्यमाने 'सद्यः' तत्क्षणं परविघातकारिणीव—वक्ष्यमाणं ज्ञातमुदाहरणं । तदेवाह—

आकंपिया निमित्तेण भोइणी भोइए चिरगयमि । पुव्वभणिए कह ते आगउ ? रुट्ठो य वडवाए ॥ ४३६ ॥

व्याख्या—कोऽपि ग्रामनायको निजभार्यां पश्चान्मुक्त्वा दिग्यात्रां गतः, सा च तद्भार्या केनापि साधुना निमित्तेनावर्जिता, ग्रामनायकेन च दूरगतेन चिन्तितं, यथाऽहमेकाकी प्रच्छन्नो गत्वा निजभार्यायाश्चेष्टितमवलोकयिष्ये, सा किं दुःशीला सुशीला ? इति । अथ च तद्भार्यया साधो' सकाशात्तदागमनमवगत्य परिजनः सर्वोऽपि तत्सम्मुखं प्रेषितः, पृष्टश्च भोजकेन परिजनो—यथा भोः ! कथं मदागमनमज्ञायि ? इति, स प्राह—भोगिन्या कथितमिति, साधुश्च तदानीं भोजकगृहे समागतो वर्तते, भोगिन्याश्च भक्तिपुरस्सरं नायकेन सह यज्जल्पितं यच्चेष्टितं यो वाऽनया स्वप्नो दृष्टो यच्चा शरीरे मषतिलकादि तत्सर्वं कथयमास्ते, अत्रान्तरे च समागतो भोजकः, कृतश्च तया यथोचित उपचारः, पृष्टा च तेन—कथं त्वया ममागमनमज्ञायि ? इति, साऽवादीत्—साधुनिमित्तात्, ततस्तेन भणितम्, अस्ति कोऽप्यन्योऽपि प्रत्ययः ?, सा प्रोवाचीत्—युष्माभिः सह पूर्वं जल्पितं चेष्टितं च यो वा मया स्वप्नो दृष्टो यच्च मम गुह्यदेशे

तिलकस्तत्सर्वमनेनावितथं कथयामासे, तत स ईर्ष्योनशविस्फुरितकोपकुलतरः साधुमपृच्छत्—कथय साधो ! किमस्या मदभार्याया गर्भोऽस्ति ? इति, साधु'माह—पञ्चपुण्ड्' किशोर', ततः सोऽचिन्तयत्—यदीदं सत्यं भविष्यति तर्हि मद्भार्योपपतिलक्षणादिकथनमपि सत्यम्, इतरथा मय्येव विरुद्धकर्मसमाचारीति विनिश्चित्य, तत एव निश्चिन्त्य वडवाया गर्भं पाटितः, पातितः परिस्फुरन् पञ्चपुण्ड्रः किशोरः, ततस्तं दृष्ट्वा सञ्जातकोपोपशम साधुमवादीत्—यदीद न भवेत्तर्हि त्वमपि न भवेरिति । सूत्रं सुगमम् । एतदेव गाथाद्वयेन भाष्यकृद्विवृणोति—

दूरा मोयण एगागि आगओ परिणयस्स पच्चोणी । पुच्छा समणे कहण साइयकार सुमिणाई ॥ ( भा० ४२ )

कोवो वडवागब्भ च पुच्छिओ पचपुडमाहसु । फालणदिट्ठे जइ नेव तो तुह अवितहं कइ वा ॥ ( भा० ४३ )

व्याख्या—सुगम । नवरं 'पच्चोणी' सन्मुखागमने, 'साइयंकार'त्ति सप्रत्ययं स्वप्नादि, अपि च—अत्र साधुना सप्रत्ययकथनेनात्मनो वध' पारदारिकत्व च दूषण परिहृतं, कति पुनरेवंविधाः 'अवितथ' निमित्तं कथयिष्यन्ति ?, तस्मादेवंविधा साधुना निमित्तं न प्रयोक्तव्यमिति । उक्तं निमित्तद्वार, साम्प्रतमाजीवद्वारमाह—

जाई कुल गण कम्मे सिप्पे आजीवणा उ पंचविहा । सूयाएँ असूयाएँ व अप्पाण कहेहि एक्केके ॥ ४३७ ॥

व्याख्या—आजीवना पञ्चविधा, तद्यथा—'जातिविषया' जातिमाजीवनीकरोतीत्यर्थः, एवं कुलविषया गणविषया कर्मविषया शिल्पविषया च, सा चाऽऽजीवनैकैकस्मिन् भेदे द्विधा, तद्यथा—सूचयाऽऽत्मानं कथयति, असूचया च, तत्र 'सूचा' वचनभङ्गिविशेषेण कथन 'असूचा' स्फुटवचनेन । तत्र जात्यादीनां लक्षणमाह—

जाईकुले विभासा गणो उ मल्लाइ कम्म किसिमाई । तुलाइ सिप्पऽणावज्जगं च कम्मेयराऽऽवज्ज ॥ ४३८ ॥

व्याख्या—जातिकुले 'विभाषा' विविधं भाषणं कार्यं, तत्रैवं-जातिः-ब्राह्मणादिका कुलम्-उग्रादि, अथवा मातृ समुत्था जातिः पितृसमुत्थं कुलं । 'गण' मल्लादिवृन्दं, कर्म-कृष्यादि, 'शिल्प' तूर्णादि-तूर्णनसीवनप्रभृति, अथवा 'अनावर्जकम्' अप्रीत्युत्पादकं कर्म इतरत्तु 'आवर्जकं' प्रीत्युत्पादकं शिल्पम्, अन्ये त्वाहुः—अनाचार्योपदिष्टं कर्म आचार्योपदिष्टं तु शिल्पमिति । तत्र यथा साधुः सूचया स्वजातिमकथनाज्जातिमुपजीवति तथा दर्शयति—

होमायवितहकरणे नज्जइ जह सोत्तियस्स पुत्तोत्ति । वसिओ वेस गुरुकुले आयरियगुणे व सूएइ ॥ ४३९ ॥

व्याख्या—साधुर्भिक्षार्थमटन् ब्राह्मणगृहे प्रविष्टः सन् तस्य पुत्रं होमादिक्रियाः कुर्वाणं दृष्ट्वा तदभिमुखं प्रति स्वजातिमकथनाय जल्पति—होमादिक्रियाणामवितथकरणे एष तव पुत्रो ज्ञायते—यथा श्रोत्रियस्य पुत्र इति, यद्वोषित एष सम्यग्गुरुकुले इति ज्ञायते, अथवा सूचयत्येष तव पुत्र आत्मन आचार्यगुणान्, ततो नियमादेष महानाचार्यो भविष्यतीति । तत एवमुक्ते स ब्राह्मणो वदति—साधो ! त्वमवश्यं ब्राह्मणो येनेत्थं होमादीनामवितथत्वं जानासि, साधुश्च मौनेनावतिष्ठते, एतच्च सूचया स्वजातिमकथनम् । अत्र चानेके दोषाः, तथाहि—यदि स ब्राह्मणो भद्रकस्तर्हि स्वजातिपक्षपाततः प्रभूतमाहारादिकं दापयति, तदपि च जात्युपजीवननिमित्तमिति मग त्वा प्रतिपिद्धम्, अथ प्रान्तस्तर्हि भ्रष्टोऽयं पापात्मा ब्राह्मण्यं परित्यक्तमिति विचिन्त्य स्वगृहनिष्कासनादि करोति, असूचया तु जात्या जीवनं पृष्टोऽपृष्टो वाऽऽहारार्थं स्वजातिं प्रकटयति यथाऽहं ब्राह्मण इति, तत्राप्यनन्तरोक्ता एव दोषाः, क्षत्रियादिजातिष्वपि, एवं कुला दिष्वपि भावनीयम् । एतदेव किञ्चिद्व्यक्तीकुर्वन्नाह—

सम्मसम्मा किरिया अणेण ऊणाऽहिया व विवरीया । समिहामतागुइठाणजागकाले य घोसाई ॥ ४४० ॥

व्याख्या—साधुर्भिक्षार्थमटन् क्वचिद् ब्राह्मणगृहे प्रविष्टः संस्तस्य पुत्रं होमादिक्रियाः कुर्वाणं दृष्ट्वा पितरं प्रति स्वजातिप्रकटनाय जल्पति—अनेन तव पुत्रेण सम्यगसम्यग्वा होमादिका क्रिया कृता, तत्रासम्यक् क्रिया, तद्यथा—ऊनाऽधिका विपरीता वा, सम्यक् समिधादीन् घोषादींश्च यथाऽवस्थितानाश्रित्य, तत्र 'समिधः' अश्वत्थादिवृक्षाणां प्रतिशाखाखण्डानि 'मन्त्राः' प्रणवप्रभृतिका अक्षरपद्धतयः 'आहुतिः' अग्नौ घृतादेः प्रक्षेपः 'स्थानम्' उत्कुट्यादि 'यागः' अश्वमेधादिः 'कालः' प्रभातादि 'घोषा' उदात्तादयः, आदिशब्दात् ह्रस्वदीर्घादिवर्णपरिग्रहः, एवं प्रोक्ते स साधुं ब्राह्मणं जानाति, तथा च सति भद्रे प्रान्ते वा पूर्ववद्दोषा वक्तव्याः । उक्तं जात्युपजीवनम्, अथ कुलाद्युपजीवनमाह—

उग्गाइकुलेसुवि एमेव गणे मंडलप्पवेसाई । वेंटलदरिसणमासाउवणयणे दंडमाईया ॥ ४४१ ॥

व्याख्या—'एवमेव' जातावित्र कुलादिष्वपि उग्रादिषूपजीवनं अवगन्तव्यं, यथा कोऽपि साधुरुग्रकुले भिक्षार्थं प्रविष्टः, तत्र च वस्तुनं पदातीन् यथावसारस्वकर्मसु नियुञ्जान दृष्ट्वा तत्पितरमाह—ज्ञायते तव पुत्रोऽप्रवेदितोऽपि यथायोग पदातीनां नियोजनेनोग्रकुल सम्भूत इति, ततः स जानाति—एषोऽपि साधुरुग्रकुलसमुत्पन्न इति, इदं तु सूचया स्वकुलप्रकाशन, यदा तु स्फुटवाचैव स्वकुलमावेदयति यथाऽहं उग्रकुलः भोगकुल इत्यादि तदाऽसूचया प्रकटनं, तेषां भद्रप्रान्तत्वे पूर्वोक्तानुसारेण दोषा वक्तव्याः । तथा 'गणे' गणविषये मण्डलप्रवेशादि, इहाकरवस(फलवाठ)के प्रविष्टस्यैकस्य मल्लस्य पहुर्भ्यां भूलण्डं सम्पन्नं, तत्र वर्तमानस्य प्रतिद्वन्द्विनो मल्लस्य विघाताय

यः भवेत्स्तदादि, आदिशब्दाद्वीवाग्रहादिपरिग्रहः, तथा 'देवकुलदर्शने' युद्धमवेक्षे चामुण्डामतिबिम्बमणभने, 'मापोपनयने' मातिप्प्छा मानाय यथा तथा वचनलोकने 'दण्डादिका' प्रणिपातपुरस्सरकयुद्धमसूतयः, एतान् गणगृहे प्रविष्टः सन् तत्सुभस्य प्रशंसति, तथा च सति तेन ज्ञापते—पयैषोऽपि साधुर्मेध इत्यादि भावत् । कर्मशिल्पयोराजीवनमाह—

कत्तरि पओअणावेक्खवत्थु बहुवित्थरेसु एमेव । कम्मेसु य सिप्पेसु य सम्ममसम्मेसु सूईयरा ॥ ४४२ ॥

व्याख्या—कर्मसु शिल्पेषु चैवमेव—कुलादाजीवोपभीवन वक्तव्य, कथम्? इत्याह—'कर्तरि' कर्मणां शिल्पानां च विधायके, उप लक्षणमेतत् विधापके च प्रतिभासो, सप्तमी चात्र षष्ठ्यर्थे, ततोऽयमर्थः—कर्तुः कारापकस्य च 'प्रयोजनापेक्षेषु' भूमिविलिखनादिषु प्रयोजननिमित्तं ध्रियमाणेषु हलादिषु वस्तुषु सूत्रे चात्र विभक्तिलोप आर्षत्वात्, 'बहुविस्तरेषु' प्रभूतेषु नानाविधेषु च, सम्यगसम्यगिति वा मोच्यमानेषु शोभनान्यशोभनानीति वा कथ्यमानेषु यदास्मानि कर्माणि शिल्पे वा कौशलज्ञापनं तदयोरुपजीवनम्, इयमत्र भावना— प्रविष्टः सन् साधुः कृष्यादेः कर्तुः कारापकस्य वा तत्प्रयोजनापेक्षणीयानि नानारूपाणि हलादीनि बहूनि वस्तूनि तानि दृष्ट्वाऽऽत्मनः कर्मणि शिल्पे वा कौशलज्ञापनाय शोभनान्यशोभनानीति वा यद्वक्ति तत्कर्मशिल्पयोराजीवनम् । अनेन च प्रकारेण कौशलज्ञापनं सूचा स्फुटवचनेन च कौशलकथनमसूचा । उक्तमाजीवद्वारम्, अथ वनीपकद्वारं वक्तव्यं, तत्र प्रथमतो वनीपकस्य भेदाभिव्यक्तिं च तन्द्रस्याह—

समणे माहणि किवणे अतिही साणे य होइ पंचमए । वणि जायणत्ति वणिओ पायप्पाणं वणोहत्ति ॥ ४४३ ॥

व्याख्या—वनीपकः पञ्चधा, तद्यथा—'श्रमणे' श्रमणविषये ब्राह्मणे कृपणेऽतिथौ शुनि च पञ्चधो भवति, तत्र वनीपक इति वनिरित्ययं धातुर्याचने, 'वनु याचने' इति वचनात्, ततो वनुते-याचते दायकसम्मतेषु श्रमणादिष्वात्मानं भक्तं दर्शयित्वा पिण्डं याचते इति 'वणिउत्ति' वनीपकः, औणादिक ईपकप्रत्ययः। सम्प्रति प्रकारान्तरेण वनीपकशब्दनिरुक्तिं प्रतिपादयति—

मयमाइवच्छगंपिव वणेइ आहारमाइलोभेण । समणेसु माहणेसु य किविणाऽतिहिसाणभत्तेसु ॥ ४४४ ॥

व्याख्या—'मृत' पञ्चत्वमुपगता माता यस्य वत्सकस्य-वर्णकस्य तमिव गोपालकोऽन्यस्यां गवीतिशेषः, 'आहारादिलोभेन' भक्तपानवस्त्रादिलुब्धतया श्रमणेषु ब्राह्मणेषु कृपणातिथिश्वभक्तेषु वनति-भक्तमात्मानं दर्शयतीति वनीपकः, पूर्ववदौणादिक ईपकप्रत्ययः। सम्प्रति यावन्तः श्रमणशब्दवाच्यास्तावतो दर्शयित्वा तेषु वनीपकत्वं यथा भवति तथा दर्शयति—

निग्गंथ सक्क तावस गेरुय आजीव पंचहा समणा । तेसिं परिवेसणाए लोभेण वणिज्ज को अप्पं ? ॥ ४४५ ॥

व्याख्या—'निर्ग्रन्था' साधवः 'शाक्याः' मायासूनवीयाः, 'तापसाः' वनवासिनः पाखण्डिनः 'गैरुकाः' गैरुकारञ्जितवाससः परिव्राजकाः 'आजीवकाः' गोशालकशिष्या इति 'पञ्चधा' पञ्चप्रकाराः श्रमणा भवन्ति, एतेषां च यथायोगं गृहिगृहेषु समागतानां 'परिवेषणे' भोजनप्रदाने क्रियमाणे सति कोऽप्याहारलम्पटः साधुः 'लोभेन' आहारादिलुब्धतया वनति-शाक्यादिभक्तमात्मानं दर्शयति, वक्ष्यमाणप्रकारेण पुरत इति सामर्थ्यगम्यम्। इह यदि शाक्या गैरुका वा गृहिगृहेषु भुञ्जते ततस्तान् भुञ्जानानधिकृत्य

भुजति चित्तकम्म ठिया य कारुणिय दाणरुइणो वा। अवि कामगद्दहेसुवि न नरसई किं पुण जईसु ?॥ ४४६॥

व्याख्या—एवं नाम निश्चला भगवन्तोऽमी शाक्यादयो भुञ्जते यथा चित्रकर्मलिखिता इव भुञ्जाना लक्ष्यन्ते, तथा परमकारुणिका एते दानरुचयश्च, तत एतेभ्योऽवश्यं भोजनं दातव्यम्, अपि च 'कामगर्दभेष्वपि' मैथुने गर्दभेष्विवाविमलकेषु ब्राह्मणेष्विति गम्यते, दत्तं न नश्यति, किं पुनरमीषु शाक्यादिषु ?, एतेभ्यो दत्तमतिशयेन बहुफलमिति भावः, तस्मात्सकलमेतेभ्यो विशेषतः। अत्र दोषान् दर्शयति—

भिच्छत्तथिरीकरणं उग्गमदोसा य तेसु वा गच्छे। चडुकारदिन्नदाणा पच्चत्थिग मा पुणो इतु ॥ ४४७ ॥

व्याख्या—एवं हि शाक्यादिप्रशंसने लोके मिथ्यात्वं स्थिरीकृतं भवति, यथाहि—साधवोऽप्यमून् प्रशंसन्ति तस्मादेतेषां धर्मः सत्य इति, तथा यदि भक्ता भद्रका भवेयुः तत इत्थं साधुप्रशंसामुपलभ्य यथोगमाधाकर्मिकादि समाचरेयुः, तत्स्वरूपज्ञस्तु न पायात् कदाचित्साधुरेवमपराय तेषु शाक्यादिषु गच्छेयुः, तथा लोके चाटुकारिण एते जन्मान्तरेऽप्यदत्तदाना आहारार्थं श्वान इवात्मानं दर्शयन्तीत्यवर्णवादः, यदि पुनः शाक्यादयः श्रावकादिभक्ता वा 'प्रत्यर्थिकाः' प्रत्यनीका भवेयुः ततः प्रद्वेषतः प्रशंसावचनमाकर्ण्येत्थं ब्रूयुः मा पुनरत्र भवन्त आयान्त्विति। ब्राह्मणभक्तानां पुरतो ब्राह्मणप्रशंसारूपं वनीपकत्वं यथा करोति तथा दर्शयति—

लोयाणुग्गहकारिसु भूमीदेवेसु बहुफल दाणं। अवि नाम बंभबंधुसु किं पुण छक्कम्मनिरएसु ?॥ ४४८ ॥

व्याख्या—पिण्डप्रदानादिना लोकोपकारिषु भूमिदेवेषु ब्राह्मणेष्वपि नाम ब्रह्मबन्धुष्वपि—जातिमात्रब्राह्मणेष्वपि दानं दीय

मानं बहुफल भवति, किं पुनर्यत्नयामनादिरूपषट्कर्मनिरतेषु ?, तेषु विशेषतो महाफलं भविष्यतीति भावः । सम्प्रति कृपणभक्तानां पुरत कृपणभक्तसारूप्यं वनीपकत्वं यथा समाचरति तथा प्रतिपादयति—

किवणेसु दुम्मणेसु य अबंधवायकजुंगियगेसु । पूयाहिज्जे लोए दाणपडाग हरइ दिंतो ॥ ४४९ ॥

व्याख्या—इह लोकः पूजाहार्थैः—पूजया क्रियते—आवर्ज्यते इति पूजाहार्थः—पूजितपूजको, न कोऽपि कृपणादिभ्यो ददाति, ततः कृपणेषु तथेष्टवियोगादिना दुर्मनस्सु तथाऽबान्धवेषु तथाऽऽतङ्के—ज्वरादिस्तद्योगादातङ्किनोऽभ्यातङ्कास्तेषु तथा 'जुङ्गिताङ्गेषु' च छिन्नकरचरणनासाद्यवयवेषु निराश्रयतया एतस्मिंल्लोके दानपताकां 'हरति' गृह्णाति । साम्प्रतमतिथिभक्तानां पुरतोऽतिथिभक्तसारूप्यं वनीपकत्वं यथा साधुर्विदधाति तथा दर्शयति—

पाएण देइ लोगो उवगारिसु परिचिएसुऽज्झुसिए वा । जो पुण अद्धाखिन्नं अतिहिं पूएइ तं दाण ॥ ४५० ॥

व्याख्या—इह प्रायेण लोक उपकारिषु यद्वा परिचितेषु यदिवा 'अध्युषिते' आश्रिते ददाति भक्तादि, यः पुनरध्वखिन्नम तिथिं पूजयति तदेव दानं, जगति प्रधानमिति शेषः । अधुना शुनां भक्तानां पुरतः शुनकभक्तसारूप्यं वनीपकत्वं कुर्वन् यद्वक्ति तदु पदर्शयति—

अवि नाम होज्ज सुलभो गोणाईण तणाइ आहारो । छिच्छिक्कारहयाणं न हु सुलहो होइ सुणगाण ॥ ४५१ ॥
केलासभवणा एए, आगया गुज्झगा महिं । चरंति जक्खरूवेण, पूयाऽपूया हियाऽहिया ॥ ४५२ ॥

व्याख्या—अपि नाम गवादीनां तृणादिक आहारो भवेत् सुलभः, छिच्छिक्कारहतानां त्वमीषां शुनां न कदाचनापि भवति सुलभः, तत एतेभ्यो यद्दीयते तदेव बहुफलमिति भावः, अपि च नैते श्वानः श्वान एव, किन्तु 'गुह्यका' देवविशेषाः 'कैलासभवनात्' कैलासपर्वतरूपादाश्रयादागत्य 'मह्यां' पृथिव्यां यक्षरूपेण श्वाकृत्या चरन्ति, तत एतेषां पूजाऽपूजा च यथासङ्ख्यं हिताऽहिता चेति । सम्प्रति ब्राह्मणादिविषयवनीपकत्वे दोषानाह—

एएण मज्झ भावो दिट्ठो लोए पणामइज्जंमि । एक्केक्के पुव्वुत्ता भद्दगपंताइणो दोसा ॥ ४५३ ॥

व्याख्या—'एतेन' अनेन साधुना 'मम' मदीयः 'भावः' भक्तत्वलक्षणः 'दृष्टः' अवगतो 'लोके' ब्राह्मणादौ, किंविशिष्टे ? इत्याह—'प्रणमयितव्ये' प्रणाम—प्रणमनं तेन, उपलक्षणमेतत् दानादिना च, हार्ये—आवर्जनीये, तत एकैकस्मिन् ब्राह्मणादिविषये वनीपकत्वे पूर्वोक्ता भद्रकप्रान्तादयो दोषा भावनीयाः, किमुक्तं भवति ?—यदि भद्रकस्तर्हि भक्तसाधुवचनतो भक्तीकृत आधाकर्मादि कृत्वा प्रयच्छति, अथ प्रान्तस्तर्हि गृहनिष्कासनादि करोति । इह प्राक् 'साणे पुण होइ पंचमए' इत्युक्तं, तत्र साणग्रहणं काकादीनामुपलक्षणं, तेन काकादिष्वपि वनीपकत्वं द्रष्टव्यं, तथा चाह—

एमेव कागमाई साणग्गहणेण सूइया होंति । जो वा जंमि पसत्तो वणइ तहिं पुट्ठऽपुट्ठो वा ॥ ४५४ ॥

व्याख्या—'एवमेव' वनीपकत्वप्ररूपणाविषयत्वेन श्वग्रहणेन काकादयोऽपि सूचिता भवन्ति, ततस्तत्रापि वनीपकत्वं भावनीयम् । एतदेव व्याप्तिपुरस्सरमाह—यो वा यत्र काकादौ पूजकत्वेन प्रसक्तस्तत्र काकादिस्वरूपं पृष्टोऽपृष्टो वा 'वनति' प्रशंसाद्वारेणाऽऽत्मानं भक्तं दर्शयति । सम्प्रति वनीपकत्वं कुर्वतः साधोर्गुणस्या दोषगरीयस्त्वं प्रकटयति—

दाणं न होइ अफलं पत्तमपत्तेसु सन्निजुज्जंतं । इय विभणिएऽवि दोसा पसंसओ किं पुण अपत्ते ? ॥ ४५५ ॥

व्याख्या—इह पात्रेष्वपात्रेषु वा सन्नियुज्यमानं दानं न भवत्यफलमित्यपि भणिते दोष, अपात्रदानस्य पात्रदानसमतया प्रशंसनेन सम्यक्त्वातिचारसम्भवात् किं पुनः अपात्रस्यैव साक्षात् प्रशंसतः ?, तत्र सुतरां महान् दोषो, मिथ्यात्वस्थिरीकरणादिदोषप्रसङ्गादिति। तदेवमुक्तं वनीपकद्वारं, सम्प्रति चिकित्साद्वारमाह—

भणइ य नाहं वेज्जो अहवाऽवि कहेइ अप्पणो किरियं । अहवावि विज्जयाए तिविह तिगिच्छा मुणेयव्वा ॥ ४५६ ॥

व्याख्या—इह 'चिकित्सा' रोगप्रतीकारो रोगप्रतीकारोपदेशो वा विवक्षिता, ततः साधूनधिकृत्य 'त्रिविधा' त्रिप्रकारा चिकित्सा ज्ञातव्या, तद्यथा—केनापि रोगिणा रोगप्रतीकारं साधुः पृष्टः सन्नाह—किमहं वैद्यः ?, एतावता च किमुक्तं भवति ?—वैद्यस्य समीपे गत्वा चिकित्सा प्रष्टव्या इत्यबुधबोधनादेका चिकित्सा, अथवा रोगिणः पृष्टः सन्नेवमाह—ममाप्येवंविधो व्याधिरासीत्, स चामुकेन भेषजेनोपशान्तिमगमत्, एषा द्वितीया चिकित्सा, अथवा वैद्यतया-वैद्यीभूय साक्षाच्चिकित्सां करोति, एषा तृतीया । इहाद्ये द्वे चिकित्से सूक्ष्मे, तृतीया तु बादरा । तत्राद्यां व्याचिख्यासुराह—

भिक्खाइ गओ रोगी किं विज्जोऽहंति पुच्छिओ भणइ । अत्थावत्तीएँ कया अबुहाण बोहणा एवं ॥ ४५७ ॥

व्याख्या—'भिक्षादौ' भिक्षादिनिमित्तं गतः सन् 'रोगी'ति अत्र तृतीयार्थे प्रथमा रोगिणा पृष्टः सन्नाह—किमहं वैद्यः ? येन पृच्छसि, एवं चोक्ते सति 'अर्थापत्त्या' सामर्थ्यादबुधानां—वैद्यस्य पार्श्वे गत्वा चिकित्सा कार्यते इत्यजानतां बोधना—अनन्तरोक्तस्यार्थस्य ज्ञापना कृता भवति । द्वितीयां व्याख्यानयति—

एरिसय चिय दुक्खं भेसज्जेण अमुगेण पउणं मे । सहसुप्पन्नं व रुयं वारेमो अट्ठमाईहिं ॥ ४५८ ॥

व्याख्या—एतादृगमेव 'दुःखं' दुःखकारणभूत गड्वादमुकेन भेषजेन 'प्रगुणं' नष्टमेतदनमसूत्, तथा वयं 'सहसोत्पन्नाम्' अकस्मादुत्पन्नां रुजमष्टमादिभिर्वारयामः । '[1]तेल्योपम रोग अष्टमेण निवारए' इत्यादि परमगुरुवचनप्रामाण्यात्, तस्मात्त्वयाऽपि तथा कर्तव्यमिति भावः । तृतीयां चिकित्सां विपञ्चयितुमाह—

संसोधण संसमण नियाणपरिवज्जणं च ज तत्थ । आगंतु धाउखोभे य आमए कुणइ किरियं तु ॥ ४५९ ॥

व्याख्या—आगन्तुके धातुक्षोभे च 'सूचनात्सूत्र'मितिकृत्वा धातुक्षोभजे चाऽऽमये रोगे समुत्पन्ने सति तत्र प्रक्रियां करोति, तद्यथा—संशोधनं हरीतक्यादिदानेन पित्ताद्युपशमनं, तथा 'निदानपरिवर्जनं' रोगकारणपरिवर्जनं च, एषा तृतीया चिकित्सा । अत्र दोषानाह—

अस्संजमजोगाणं पसधणं कायघाय अयगोलो । दुब्बलवग्घाहरण अच्चुदये गिण्हणुड्डाहे ॥ ४६० ॥

व्याख्या—'असंयमयोगानां' सावद्यव्यापाराणां 'प्रसन्धन' सातत्येन प्रवर्त्तनमिदं चिकित्साकरणं यतो गृहस्थस्तप्तायोगोलकसमानः ततस्तेन नीरोगीभूतेन ये कायघाता यावज्जीव प्रवर्त्यन्ते ते सर्वेऽपि साधुचिकित्सामपार्थेवा इति चिकित्साकरणं सातत्येनासंयमयोगानां निबन्धनम् । तथा चात्र दुर्बलव्याघ्रदृष्टान्तो—यथाऽत्रसामान्येन भक्ष्यमप्राप्नुवन् दुर्बलो व्याघ्रः केनाप्यान्ध्यापनय

[1] तस्रोत्पन्नं रोगमष्टमेन निवारयेत् ।

नाय चिकित्सयते, चिकित्सितश्च प्रगुणीभूतः प्रथमतस्तस्यैव वैद्यस्य विघातं करोति, ततः शेषाणां बहूनां जीवानाम्, एवमेषोऽपि गृहस्थ साधुना चिकित्स्यमानः साधोः संयमप्राणान् हन्ति, शेषांश्च पृथिवीकायादीनिति । यदि पुनः कथमपि चिकित्स्यमानस्यापि तस्यातिश येन रोगस्योदय—प्रादुर्भावो भवति, ततोऽहमनेनातिशयेन रोगीकृत इति सञ्जातकोपो राजकुलादौ ग्राहयति, तथा च सति प्रवचनस्य मालिन्यमिति । उक्तं चिकित्साद्वारम्, अधुना क्रोधादिद्वारचतुष्टयं विवक्षुः प्रथमतः क्रोधादिपिण्डदृष्टान्तानां नगराणि क्रोधादुत्पत्तेः कारणानि च प्रतिपादयति—

हत्थकप्प गिरिफुल्लिय रायगिह खलु तहेव चंपा य । कउघयपुन्ने इट्टग लड्डुग तह सीहकेसरए ॥ ४६१ ॥

व्याख्या—क्रोधपिण्डदृष्टान्तस्य नगरं हस्तकल्पं, मानपिण्डदृष्टान्तस्य गिरिपुष्पितं, मायापिण्डदृष्टान्तस्य राजगृहं, लोभपिण्डदृष्टान्तस्य चम्पा । तथा कृतान् घृतपूर्णानलभमानस्य क्रोधोत्पत्तिः, सेवकिका अलभमानस्य मानस्योत्पत्ति, मोदकभनाभिस्य मायोत्पत्तिः, सिंहकेसरसञ्ज्ञान् मोदकानलभमानस्य लोभोत्पत्तिः । सम्प्रति क्रोधपिण्डस्य सम्भवमाह—

विज्जातवप्पभावं रायकुले वाऽवि वल्लभत्तं से । नाउं ओरस्सबलं जो लब्भइ कोहपिंडो सो ॥ ४६२ ॥

व्याख्या—स साधो 'विद्याप्रभावम्' उच्चाटनमारणादिकं 'तपःप्रभावं' शापप्रदानादिकं राजकुले वल्लभत्वं वा ज्ञात्वा यदि वा औरस्यं बल—सहस्रयोधित्वादिकं ज्ञात्वा यः पिण्डो 'लभ्यते' गृहस्थेन दीयते स क्रोधपिण्डः । अथवाऽन्यथा क्रोधपिण्डसम्भवः,

अन्नेसि दिज्जमाणे जायतो वा अलद्धिओ कुप्पे । कोहफलमिऽवि दिट्ठे जो लब्भइ कोहपिंडो सो ॥ ४६२ ॥

व्याख्या—' अन्येभ्यः ' ब्राह्मणादिभ्यो दीयमाने याचमानोऽपि साधुर्यदा न लभते तदाऽलब्धिमान् सन् कुप्येत, कुपिते च सति तस्मिन् साधुः कुपितो मध्यो न भवतीति यद्दीयते स क्रोधपिण्ड । यदिवा तस्मिन्नन्यत्र वा क्रोधफले मरणादिशापे फलवति दृष्टे यो लभ्यते स क्रोधपिण्डः । अथैवोदाहरणमाह—

करडुय भत्तमलद्धुं अन्नहिं दाहित्य एव वच्चतो । थेरो भोयण तइए आइक्खण खामणा दाणे ॥ ४६४ ॥

व्याख्या—हस्तकल्पे नगरे कचिद्ब्राह्मणगृहे मृतकभक्ते मासिके दीयमाने कोऽपि साधुर्मासक्षपणपर्यवसाने भिक्षार्थं प्रविवेश, तत्राथ तेन घृतपूरा ब्राह्मणेभ्यो दीयमानाः, सोऽपि च साधुः प्रतिषिद्धो दौवारिकेण, ततः कुपितोऽवादीत्, ' अन्नहिं दाहित्य 'त्ति, अस्य चायमर्थः—अस्मिन् मासिके यन्मया न लब्धं ततोऽन्यस्मिन् मासिके दास्यथेति, एव चोक्त्वा निर्गतः, दैवयोगेन च तत्रान्यस्मा तुर्पं पक्षपदृदिनमध्ये मृतं, ततस्तस्य मासिके दीयमाने भूयः स एव साधुर्मासक्षपणपारणे गतः, तथैव च प्रतिषिद्धो दौवारिकेण, ततः भूयो ऽपि कुपितोऽवादीत्—' अन्नहिं दाहित्य 'त्ति, ततः पुनरपि दैवयोगेन तत्रान्यन्मानुषमुपगतं, ततस्तस्यापि मासिके स एव साधुर्मासक्षपणः पारण भिक्षार्थमागत, तथैव च प्रतिषिद्धो दौवारिकेण भणति—'अन्नहिं दाहित्य'त्ति, एतच श्रुत्वा तेन स्थविरेण दौवारिकेण चिन्तितं, पुराऽप्येतेन वारद्वयमित्थं शापो वितीर्णस्ततो द्वे मानुषे उपगते सम्प्रति तृतीयवेला ततो मा किमपि मानुष म्रियतामिति जाताऽनुक-म्पेन सर्वोऽपि वृत्तान्तो गृहनायकाय निवेदितः, तेन च समागत्य सादरं साधुं समर्पित्वा घृतपूरादिकं तस्मै यथेच्छं व्यतारि, स क्रोधपिण्डः । सूत्रं सुगमं, नवरं ' करडुकभक्तं ' मृतकभोजन मासिकादि । तदेवमुक्तः क्रोधपिण्डः । सम्प्रति मानपिण्डस्य सम्भवमाह—

ओच्छाहिओ परेण व लद्धिपसंसाहिं वा समुत्तइओ । अवमाणिओ परेण य जो एसइ माणपिंडो सो ॥ ४९५ ॥

व्याख्या—'उत्साहित' त्वमेवास्य कार्यस्य करणे समर्थ इत्येवमुत्कर्षितः 'परेण' अपरेण साध्वादिना, 'वा' विकल्पे, तथा लब्धिप्रशंसाभ्यां 'समुत्तइओ' गर्वितो यथाऽहं यत्र क्वापि व्रजामि तत्र सर्वमपि लभे तथैव च जनो मां प्रशंसतीत्येवमभिमानवान्, यद्वा न किमपि त्वया सिद्ध्यतीत्येवमपमानितोऽपरेणाहङ्कारवशाद् एषयति पिण्डं स तस्य मानपिण्डः । अत्र च क्षुल्लकोदाहरण—गिरिपुष्पिते नगरे सिंहाभिधानाः सूरयः सपरिवाराः समाययुः, अन्यदा च तत्र सेवकिकाक्षण समभाणि, तस्मिंश्च दिवसे सूत्रपौरुष्यनन्तरमेकत्र तरुणश्रमणानां समवायोऽभवत्, बभूव च परस्परं समुल्लापः, तत्र कोऽप्यवादीत्—को नामैषां मध्ये प्रातरेव सेवकिका आनेष्यति ?, तत्र गुणचन्द्राभिधः क्षुल्लकः प्रत्यवादीत्—अहमानेष्यामि, ततः सोऽभाणीत्—यदि ताः सर्वसाधूनां न परिपूर्णा घृतगुडरहिता वा ततो न ताभिः प्रयोजनं, तस्माद्यथास्माकमभिप्रायस्तथा परिपूर्णा घृतगुडसम्मिश्रा आनेतव्या, क्षुल्लक आह—यादृशीस्त्वमिच्छसि तादृशीरानेष्यामि, एवं च कृत्वा प्रतिज्ञां नान्दीपात्रमादाय भिक्षार्थं निर्जगाम, प्रविष्टश्च क्वापि कौटुम्बिकगृहे, दृष्टाश्च तत्र प्रचुराः सेवकिकाः, घृतगुडादीनि च प्रभूतानि प्रगुणीकृतानि, ततोऽनेकशो वचनभङ्गीभिः सुलोचनाभिधाना कौटुम्बिकगृहिणी याचिता, तया च सर्वथा प्रतिषिद्धो—न किमपि ते ददामीति, ततः सञ्जातामर्षेण श्रमणे क्षुल्लकेन—नियमादिमाः सेवकिकाः सघृतगुडा मया ग्रहीतव्या', सुलोचनाऽपि सामर्षं क्षुल्लकवचः श्रुत्वा सञ्जातप्रकोपा प्रत्युवाच—यदि त्वमेतासां सेवकिकानां किमपि लभसे ततो मे नासापुटे त्वया प्रस्रवणं कृतमिति । ततः क्षुल्लकोऽचिन्तयद्—अवश्यमेतन्मया विधातव्यम्, एवं च विचिन्त्य गृहान्निर्ययौ, पप्रच्छ च कस्यापि पार्श्वे—कस्येदं गृहम् ? इति, सोऽवादीत्—विष्णुमित्रस्य, ततः पुनरपि क्षुल्लकः पृच्छति—स इदानीं क्व वर्तते ?, तेनोक्तं—पर्षदि, ततः पर्षदि गत्वा सर्पं इव पर्षज्जनान्

पृष्टवान्—भो ! युष्माकं मध्ये को विष्णुमित्रः ?, जना अवादिषुः—किं साधो ! तत्र तेन प्रयोजनं ?, साधुरवोचत्—स किमपि याचिष्ये, स च तेषां सर्वेषामपि भ्राता भगिनीपतिरिति सहासं तैरवाचि—कृपणोऽसौ न ते किमपि दास्यतीत्यस्मानेव याचस्व, ततो विष्णुमित्रो मा मेऽपभ्राजना भूदिति तेषामग्रतः कृत्वा बभाण—अहं भो ! विष्णुमित्रोऽहं याचस्व मां किमपि, मा कैश्चिद्वचनममीषां कर्णे कार्षीः, ततोऽवादीत् क्षुल्लकः—याचेऽहं यदि त्वं महेलाप्रधानानां षण्णां पुरुषाणामन्यतमो न भवसि, ततः पर्षज्जना अवादिषुः—के ते षट् पुरुषा महेलाप्रधानाः ? येषामन्यतमोऽयमाशङ्क्यते, ततः क्षुल्लक आह—श्वेताङ्गुलिर्बकोड्डायकः किङ्करः स्नायकः गृध्रइवरिङ्खी हदज्ञ इति, एतेषां च षण्णामपि कथानकान्यमूनि—कश्चिद्ग्रामे कोऽपि पुरुषो निजभार्याच्छन्दानुवर्ती, स च प्रातरेव जातबुभुक्षो निजभार्यां भोजनं याचते, सा च वदति—नाहमालस्येनोत्थातुमुत्सहे ततस्त्वमेव समाकर्ष चुल्ल्या भस्म प्रक्षिप तत्र प्रातिवेश्मिकगृहादानीय वह्निं प्रज्वालय तमिन्धनप्रक्षेपेण समारोपय चुल्ल्याः शिरसि स्थालीं, एवं यावत्पक्त्वा कथय, ततोऽहं परिवेषयामीति, स च तथैव प्रतिदिवसं कुरुते, ततो लोकेन प्रातरेवास्य चुल्ल्या भस्मसमाकर्षणेन श्वेतीभूताङ्गुलिदर्शनात्सहासं श्वेताङ्गुलिरिति नाम कृतम्, एष श्वेताङ्गुलिः । तथा कश्चिद्ग्रामे कोऽपि पुरुषो निजभार्यामुखदर्शनसुखलम्पटस्तदादेशवर्ती, अन्यदा तया भार्यया भणितः—यथाऽहमालस्येन मुक्ता, ततस्त्वमेवोदकं तडागादानय, स च देवताऽऽदेशमिव भार्याऽऽदेशमभिमन्यमानः प्रतिपद्यते—यदादिशसि प्रिये ! तदहं करोमि, ततो दिवसे मा लोको मां ज्ञासीदिति रात्रौ पश्चिमयामे समुत्थाय प्रतिदिवसं तडागादुदकमानयति, तस्य च तत्र गमनागमने कुर्वत पदसञ्चारशब्दश्रवणतो घटभरणबुडुबुडुशब्दश्रवणतश्च तडागपालीवृक्षेषु प्रसुप्ता बका उत्थायोड्डीयन्ते, एष च वृत्तान्तो लोकेन विदितः, ततोऽस्यार्थस्य सूचनार्थं हासेन बकोड्डायक इति नाम कृतं, एष बकोड्डायकः । तथा कश्चिद्ग्रामे कोऽपि पुरुषो भार्यास्तनजघनादिस्पर्शलम्पटो भार्याच्छन्दानुवर्ती, स च

भार्यावशात्याय कृताञ्जलिप्रह्वो वदति—दयिते ! किं करोमि ?, सा च वदति—तडागादुदकमानय, ततो पत्निया समादिशतीत्युदित्वा तडागादुदकमानयति, पुनरपि भणति—किं करोमि प्राणेश्वरि !, सा वदति—कुसूलादाकृष्य तण्डुलान् कण्डय, एवं यावद्भोजनादूर्ध्वं मम पादान् प्रक्षाल्य घृतेन म्रक्षयेति, स च सर्वं तथैव करोति, तत एव लोकेन ज्ञात्वा तस्य किङ्कर इति नाम निवेशितं, एष किङ्करः । तथा कश्चिद्ग्रामे कोऽपि पुरुषो भार्याऽऽदेशवर्ती, स चान्यदा निजभार्यामवादीत्—प्राणेश्वरि ! स्नातुमहमिच्छामि, तयोक्तं—यद्येवं तर्हि मल्लकान् शिलायां वर्त्तय परिधेहि स्नानपोतिकां अभ्यङ्गय तैलेनात्मानं गृहाण च घटं तडागे स्नात्वा घटं च जलेन भृत्वा समागच्छेति, स च देवताशेषामिव भार्याऽऽदेशं शिरसि निधाय तथैव करोति, एवं च सर्वदैव, ततो लोकेनास्यार्थस्य प्रकटनार्थं हासेनास्य स्नायक इति नाम कृतं, एष स्नायकः । तथा कश्चिद्ग्रामे कोऽपि पुरुषो भार्याऽऽदेशविधायी, अन्यदा च सा रसवत्यामासने समुपविष्टा वर्त्तते, सा च तेन भोजनमयाचि, तयोक्तं—मम समीपे स्थालमादाय समागच्छ, सोऽपि पत्निया समादिशति तन्मे प्रमाणमिति कृत्वा तस्याः समीपे गतः, तया परिवेषितं भोजनं, तत उक्तं—भोजनस्थाने गत्वा भुङ्क्ष्व, ततः स भोजनस्थानं गत्वा भोक्तुं प्रवृत्तः, ततः पुनरपि तेन तीमनं याचितं, सा च प्रत्युवाच—स्थालमादाय मम समीपे समागच्छ, ततः स गृध्र इव उत्कुटिको रिङ्खन् स्थालेन सहितेन याति, एवं तक्रादिकमपि गृह्णाति, तत एतल्लोकेन ज्ञात्वा हासेन गृध्रपरिङ्खीति नाम कृतं, एष गृध्रपरिङ्खी । तथा कश्चिद्ग्रामे भार्यामुखमवलोकनसुखलम्पटस्तदादेशकारी कोऽपि पुरुषः, तस्यान्यदा स्वभार्यया सह विषयसुखमनुभवतः पुत्रो बभूव, स च पाल्हनक एव स्थितोऽविवालत्वात् पुरीषमुत्सृजति, तेन च पुरीषेण पाल्हनक वालवस्त्राणि च खरण्टयन्ते, ततः सा भणति—बालस्य पुते प्रक्षालय पाल्हनक बालवस्त्राणि च, ततो पत्निया समादिशति सत्करोमीति सर्वं तथैव करोति, एवं सर्वदैव, ततो लोकेनैतद् ज्ञात्वा हसन् प्रक्षाल

पितुं पाठस्य मानातीतिकृत्वा हस्स इति नाम वस्य कृतं, एष हस्सः । तत एवमुक्ते क्षुल्लकेन सर्वैरपि पर्षज्जनैरेककालमट्टहासेन हस शिरमाणि—क्षुल्लक ! एष षण्णामपि पुरुषाणां गुणानाच्छादाति सन्नैर्न मोक्लामघानं याचिष्ठ, विष्णुमित्रोऽवादीत्—नाहं षण्णां पुरुषाणां समानस्तस्मायाचस्व मामिति, ततः क्षुल्लकेनोक्तं—देहि मे घृतगुडसंयुक्ताः पात्रभरणप्रमाणाः सेवकिकाः, विष्णुमित्रेणोक्तं—ददामि, ततः क्षुल्लकं गृहीत्वा निजगृहाभिमुखं चलितवान्, समागतो निजगृहद्वारे, ततः क्षुल्लकेनाभाणि—प्रथममपि तव गृहे समागतोऽभ्यास परं तव भार्यया मषिता व्यपाधि यया न किमपि ते दास्यामि, तत इदानीं यद्युक्तं तत्समाचर, तत एवमुक्ते विष्णुमित्रोऽवादीत्—यद्येवं तर्हि क्षणमात्रमेव गृहद्वारेऽवतिष्ठस्व यथाऽऽकारयिष्यामि, ततः प्रविष्टो गृहमध्ये मित्रः, पृष्टा च तेन निजभार्या—यथा राज्ञः सेवकिकाः प्रगुणीकृतानि घृतगुडादीनि ?, तयोक्तं—कृतं सर्वं परिपूर्णं, ततो गुडं प्रलोक्य स्तोक एष गुडो नैतावता सरिष्यतीति मालादानय प्रभूतं गुडं येन द्विजान् भोजयामीति, तत सा लघनावारुह्य मालं भपनीता तेन निःश्रेणिः, तत आकार्य क्षुल्लकं पात्रभरणप्रमाणा ददौ तस्मै सेवकिकाः घृतगुडादीनि च दातुमारब्धानि, अत्रान्तरे गुडमादाय सुलोचना मालादुत्तरितुं प्रवृत्ता परं न पश्यति निःश्रेणिं, ततो विस्मितहृदया प्रसरं यावदासेकते तावत्पश्यति क्षुल्लकाय घृतगुडसंयुक्ताः सेवकिका दीयमाना, ततोऽनेन क्षुल्लकेनाभिभूतेत्यभिमानपूरितहृदया माऽस्मै देहि माऽस्मै देहीति महता शब्देन पूत्कुरुते, क्षुल्लकोऽपि तस्याः सम्मुखमवलोक्य मया तव नासिकापुटे मूत्रितमिति निजनासापुटेऽङ्गुल्यभिनयेन दर्शयति, दर्शयित्वा च भृतघृतगुडसेवकिकापात्रो जगाम निजवसतिमिति । एतदेव रूपकाष्टकेन दर्शयति—

इट्टगछणमि परिपिंडियाण ठछात्र को णु हु पगेव । आणिज्ज इट्टगाओ ? खुड्डो पच्चाह आणेमि ॥ ४६६ ॥

जइवि य ता पज्जत्ता अगुलघयाहिं न ताहिं णे कज्जं । जारिसियाओ इच्छह ता आणेमित्ति निक्खतो ॥४६७॥

ओहासिय पडिसिद्धो भणइ अगारिं अवस्सिमा मज्झ । जइ लहसि तो त मे नासाए कुणसु मोयंति[सा माह]॥४६८॥
कस्स घर पुच्छिऊण परिसाए अमुग कहरो पुच्छिसु । किं तेणऽम्हे जायसु सो किविणो दाहिइ न तुज्झ ॥४६९॥
दाहिन्ति तेण भणिए जइ न भवसि छण्हमेसि पुरिसाणं । अभयरो तो तेऽहं परिसामज्झमि पणयामि ॥४७०॥
सेयगुलि वगुज्झाये, किंकरे ण्हायए तहा । गिद्धावरिंखि हदभए य पुरिसाहमा छाठ ॥ ४७१ ॥
जायसु न पुरिसोऽहं इट्टगा देहि पुव्वमइगतुं । माला उत्तारि गुलं मोएमि विएत्ति आरूढा ॥ ४७२ ॥
सिइअवणण पडिलासण दिरिसयरी थोलमगुली नास । वुम्हेगयरपओसो आयन्निवची य उड्डाहो ॥ ४७३ ॥

व्याख्या—सुगम, नवर 'इगच्छामि' सेवकिव्यासणे 'पगेबे'वि भमासे एव 'मोयं'वि मूत्रण 'मणमामि' इवि यावे, 'सिइ-भवणग'वि नि भेम्यपनमन, इत्यम्भूवश्च मानपिण्डो न ग्राह्यः, यवो द्वयोरपि वम्पस्योः मद्वेषो भवति, ववस्वद्वन्यान्यद्रव्यव्यवच्छेदः कदाचित्कारस्य ववस्वथापि स एव दोषः । अपि च-सेवमपमानिवा कदाचिदभिमानवशादात्मविपत्तिं कुर्यात्, वव उड्डाहः-प्रवचनमा-लिन्य ॥ उक्तो मानपिण्डदृष्टान्तः, सम्प्रति मायापिण्डदृष्टान्तमाह—

रायगिहे धम्मरुई असाढभूई य खुड्डओ तस्स । रायनडगेहपविसण समोइय मोयए लभो ॥ ४७४ ॥
आयरियउवज्झाए सघाडगकाणखुज्जतद्दोसी । नडपासणपज्जत्तं निक्कायण वियो स्त्रियो दामं ॥ ४७५ ॥

घूयदुए सवेसो दाणसिणेह करणं रहेगहणं । लिंग मुयत्ति गुरुसिद्ध विवाहे उत्तमा पगई ॥ ४७६ ॥
रायघरे य कयाई निम्महिलं नाडग तडागत्था । ता य विहरंति मचा उवरि गिहे दोवि पासुत्ता ॥ ४७७ ॥
वायाएण नियत्तो दिरस विचेला विराग सयोही । पुगियनाए पुच्छा पजीवण रुद्धवालंभि ॥ ४७८ ॥
इक्खागवंस भरहो आयसघरे य केवलालोओ । हाराइखिवण गहण उवसग्ग न सो नियत्तोत्ति ॥ ४७९ ॥
तेण सम पव्वइया पंच नरसयत्ति नाडए डहण । गेलन्न खमग पाहुण थेरा दिट्ठा य बीय तु ॥ ४८० ॥

व्याख्या—राजगृहं नाम नगर, तत्र सिंहरथो राजा, विश्वकर्मा नाम नटः, तस्य द्वे दुहितरौ, ते च द्वे अप्यतिसुरूपे अविद्यमाने वदनकान्त्या दिनकरकरोद्भासितकमलश्रियं नयनयुगलेन सचञ्चरीककुवलययुगलं पीनोन्नतनिरन्तरपयोधरयुगलेन संहतवालफलयुगल लक्ष्मीं बाहुयुगलेन पल्लवसत्त्वां त्रिवलिभङ्गुरेण मध्यभागेनेन्द्रायुधमध्य जघनविस्तारेण जाह्नवीपुलिनदेशं ऊरुयुगलेन गजकलभनासाभोग जङ्घायुगलेन कुरुविन्दवृत्तसस्थितं चरणयुगलेन कूर्मोन्नताकृतिं सुकुमारतया शिरीषकुसुमसम्भवं वचनमधुरतया वसन्तमासोन्मत्तकोकिला रव, अन्यदा च तत्र यथाविहारक्रमं समायपुर्धर्मरुचयो नाम सूरय', तेषामन्तेवासी महानिधिरापाढभूतिः, स भिक्षार्थमटन् कथमपि विश्वकर्मणो नटस्य गृहे माविसत्, तत्र च लब्धः प्रधानो मोदकः, द्वारे च विनिर्गत्य तेन चिन्तितम्—एष सूरीणां भविष्यति, तत आत्मार्थं रूपपरावर्तमाधायान्य मोदकं मार्गयामि, ततः काणरूपं कृत्वा पुनः प्रविष्टो, लब्धो द्वितीयो मोदकः, ततो भूयोऽपि चिन्तितम्—एष उपाध्यायस्य भविष्यति, ततः कुब्जरूपमभिनिर्वर्त्य पुनरपि प्रविष्टः, लब्धस्तृतीयो मोदकः, एष द्वितीयसङ्घाटकसाधोर्भविष्यतीति

विचिन्त्य क्षुल्लकरूपं कृत्वा चतुर्थवलयां प्रविष्टः, कथमनुयों मोदकः, एतानि च रूपाणि कुर्वन् मालोपरिस्थितेन विश्वकर्मणा नटेन दृष्टो, चिन्तितं चानेन—सम्यगयोऽस्माकं मध्ये नटो भवति, परं केनोपायेन सङ्ग्राह्यव्य इति, एवं च चिन्तयतः समुत्पन्ना तस्य प्रेमुषी—दुहितृभ्यां क्षोभयित्वा ग्राहयितव्य इति, ततो मालादुत्तीर्य सादरमाकार्याऽऽपाढभूतिः पात्रभरणप्रमाणैर्मोदकैः प्रतिलाभितः, भणितश्च सादरं—भगवन्! प्रतिदिवसमस्माकं भक्तपानग्रहणेनानुग्रहोऽनुविधातव्य', ततो गतः स्वोपाश्रयमापाढभूतिः, अथकथयान्यान्यरूपपरावर्तन-दृष्टान्तं विश्वकर्मा निजकुटुम्बस्य, भणिते च दुहितरौ यथा सादरं दानस्नेहदर्शनादिना तथा कर्तव्यो यथा युष्माकमायत्तो भवति प्रतिदिवसमायाति च भिक्षार्थमापाढभूति, दुहितरौ च तं तथैवोपचरतः, ततोऽत्यन्तमनुरक्तमवगम्य रहसि भणितो—यथा वयमत्यन्तं त्वय्यनुरक्ताः ततोऽस्मान् परिणीय त्वं परिभुङ्क्ष्वेति, अत्रान्तरे च तस्योदयमियाय चारित्रावरणं कर्म्मे गलितो गुरूपदेशः प्रणष्टो विवेको दूरीभूतः कुलजात्यभिमानः, ततस्तेनोक्तम्—एवं भवतु, परमहं युष्मादान्तिके लिङ्गं विमुच्य समागच्छामि, गतो गुरुसमीपं प्रणतस्तेषां पादयुगलं प्रकटितो निजाभिप्राय', ततो गुरुभिरवाचि—वत्स! नेदं युष्मादृशां विवेकरत्नाकराणामवगाहितसकलशास्त्रार्थानामुभयलोकजुगुप्सनीयं समाचरितुमुचितं, तथा "दीहरंसीलं परिवालिऊण विसएसु वच्छ! मा रमसु। को गोप्पयंमि बुड्डइ उयहिं तरिऊण बाहाहिं? ॥ १ ॥" इत्यादि, तत उवाचाषाढभूतिः—भगवन्! यथा यूयमादिशथ तथैव केवलं प्रतिकूलकर्मोदयतः प्रतिपक्षभावनारूपकवचदुर्भेदतया मदनशरेण निरन्तरं सम्भ्रमस्तमृगनयनरमणीकटाक्षविक्षिप्तोपनिपातप्रमादपथा जर्जरो मे मर्मरीकृतं हृदयं, एवं चोक्त्वा गुरुपादान् प्रणम्य तदन्तिके रजोहरणं मुक्तवान्, ततः कथमप्यमीषामनुपकृतोपकारिणामपारसंसारोदधिनिमज्जज्जन्तुसमुद्धरणैकचेतसां सकलजग

१ दीर्घं शीलं परिपाल्य विषयेषु वत्स! मा रंस्थाः। को गोष्पदे निमज्जति उदधिं बाहुभ्यां तरित्वा? ॥ १ ॥

स्मरन् पुनस्तानां गुरूणां पृष्ठं ददाति इति पश्चात्कृतपादप्रचारो हा ! कथमहं भूयोऽप्येवंविधगुरूणां चरणकमलं प्राप्स्यामि ? इति विचिन्तयन् वसतेर्विनिर्गत्य विश्वकर्मणो भवनमायातः, परिभावितमस्य सादरमनिमिषदृष्ट्या नटदुहितृभ्यां वपु, प्रत्यभासत सकलजगदाश्चर्यमस्य रूपं, ततोऽचिन्तयतामिमे—अहो ! कौमुदीशशाङ्कमण्डलमिवास्य मनोहरकान्तिवदनं कमलदलयुगलमिव नयनयुगलं गरुत्मत इव तुङ्गमायतं नासानालं कुन्दमुकुलश्रेणिरिव सुस्निग्धा दशनपङ्क्तिः महापुरकपाटमिव विशालमस्य मांसलं वक्षःस्थलं मृगरिपोरिव संवर्तितः कटिप्रदेशः निगूढजानुप्रदेशं जङ्घायुगलं सुप्रतिष्ठितकनककूर्मयुगलमिव चरणयुगलं, ततो विश्वकर्माऽवोचत्—महाभाग ! तवाऽऽयत्ते द्वे अप्यमू कन्यके ततः स्वीक्रियेतामिति, तत परिणीते ते द्वे अपि तेन कन्यके, भणिते च विश्वकर्मणा—यो नामेतादृशीमप्यवस्थां गतो गुरुपादान् स्मरति स नियमादुत्तमप्रकृतिः, तत एतच्चित्तावर्जनार्थं सदैव मद्यपानविरहिताभिर्युष्माभिः स्थातव्यं अन्यथैव विरक्तो यास्यति, आषाढभूतिश्च सकलकलाकलापपरिज्ञानकुशलो नानाविधैर्विज्ञानातिशयैः सर्वेषामपि नटानामग्रणीर्बभूव, लभते च सर्वत्र प्रभूतं द्रव्य वस्त्राभरणानि च, अन्यदा च राज्ञा समादिष्टा नटाः—अद्य निर्महेलं नाटकं नर्तनीयं, ततः सर्वेऽपि नटाः स्वां स्वां युवतिं स्वस्वगृहे विमुच्य राजकुलं गताः, आषाढभूतिभार्याभ्यामपि चिन्तितम्—अद्य राजकुले गतोऽस्माकं भर्ता सकलामपि च रात्रिं गमयिष्यतीति, तत पिबामो यथेच्छमासवमिति, तथैव कृतं, मद्यपानापगतचेतने विगतवस्त्रे द्वितीयभूमिकाया उपरि सुप्ते स्थिते राजकुलेऽपि परराष्ट्रदूतः समायात इति राज्ञो व्याक्षेपो बभूव, ततोऽनवसर इतिकृत्वा प्रतीहारेण मुत्कलिताः सर्वेऽपि नटाः समागताः स्वं स्वं भवनं, आषाढभूतिश्च निजकावासे समागत्य यावद्द्वितीयभूमिकामारोहति तावत्ते द्वे अपि निजभार्ये विगतवस्त्रतया बीभत्से पश्यति, ततः स महात्माऽचिन्तयत्—अहो ! मे मूढता अहो ! मे निर्विवेकता अहो ! मे दुर्विलसितं च एतादृशामप्यशुचिकरण्डकभूतानामयोगविनियोजनानां कृते परमशुचिभूतमिहपरलोककल्याणपरम्पराजनकमक्षेपेण मुक्तिपदनिबन्धनं संयमं उज्झांचभूव, ततो

ऽद्यापि न मे किमपि विनष्टम् अपि गच्छामि गुरुपादान्तिके प्रतिपद्ये चारित्रं प्रक्षालयामि पापपङ्कमिति विचिन्त्य विनिर्गतो गृहात्, दृष्टः कथमपि विश्वकर्मणा, कथित इत्यादिना यथा विरक्त एव यातीति, तत सत्वरं निजदुहितरावुत्थाप्य निर्भर्त्सयति–हा ! दुरात्मिके ! हीनपुण्यचतुर्दशीके ! युष्मद्विलसितमेतादृशमवलोक्य सकलनिधानभूतो युष्मद्भर्त्ता विरक्तो यातीति तद्यदि निर्वर्त्तयितुं शक्नुथस्तर्हि निवर्त्तयेथां नो चेन् प्रजीवनं याचध्वमिति, ततस्ताः ससम्भ्रमं परिहितनिवसनाः पृष्ठतः प्रधाव्य गच्छतः पादयोर्लग्ना, वदन्ति च–हा स्वामिन् ! समस्तैकमपराधं निवर्त्तस्व माऽस्माननुरक्ताः परिहर, एवमुक्तोऽपि स मनागपि न चेतसि रज्यते, ततस्ताभ्यामभ्यधायि–स्वामिन् ! यद्येवं तर्हि प्रजीवनं देहि, येन पश्चादपि युष्मत्प्रसादेन जीवावः, तत एवं भवत्विति दाक्षिण्यवशादनुमत्य प्रतिनिवृत्तः, ततः कृतं भरतचक्रवर्तिचरितप्रकाशकं राष्ट्रपालं नाम नाटकं, ततो विज्ञप्तो विश्वकर्मणा सिंहरथो राजा–देव ! आषाढभूतिना राष्ट्रपालं नाम नाटकं विरचितं, तत्सम्प्रति नर्त्यतामिति, परं तत्र राजपुत्रपञ्चशतैराभरणविभूषितैः प्रयोजनं, ततो राज्ञा दत्तानि राजपुत्राणां पञ्चशतानि, तानि यथायथमाषाढभूतिना शिक्षितानि, ततः प्रारब्धं नाटकं नर्तितुं, तत्राऽऽषाढभूतिरात्मनेक्ष्वाकुवंशसम्भूतो भरतचक्रवर्ती स्थितो राजपुत्राश्च यथायोगं कृताः सामन्तादयः, तत्र च नाटके यथा भरतेन भरतं षट्खण्डं प्रसाधितं यथा चतुर्दश रत्नानि नव महानिधयः प्राप्ता यथा चाऽऽदर्शगृहेऽवस्थितस्य केवलालोकप्रादुर्भावो यथा च पञ्चशतपरिवारेण सह प्रव्रज्यां प्रतिपन्नस्तत्सर्वमप्यभिनीयते, ततो राज्ञा लोकेन च परितुष्टेन सर्वेणापि यथाशक्ति हारकुण्डलादीन्याभरणानि सुवर्णवस्त्राणि च प्रभूतानि क्षिप्तानि, ततः सर्वजनानां धर्मलाभं प्रदाय पञ्चशतपरिवार आषाढभूतिर्गन्तुं प्रावर्तत, ततः किमेतत् ? इति राज्ञा निवारितः, तेनोक्तं–किं भरतचक्रवर्ती प्रव्रज्यायाः निवृत्त ? येनाहं निवर्ते इति गतः सपरिवारो गुरुसमीपं, वस्त्राभरणादिकं च समस्तं निजभार्याभ्यां दत्तवान्, तच्च प्रजीवनकं किल

तयोर्जातं, गृहीता दीक्षा, तदपि च नाटकं विश्वकर्मणा कुसुमपुरे नर्तितुमारब्धं, तत्रापि पञ्चशतसङ्ख्याः क्षत्रियाः प्रव्रज्यां गृहीतवन्तः, ततो लोकेन चिन्तितम्-एवं क्षत्रियाः प्रव्रजन्तो निःक्षत्रियां पृथिवीं करिष्यन्तीति नाटकपुस्तकमग्नौ प्रक्षिप्तं । सूत्रं सुगमं, नवरं 'रायनडगेहपवेसणं 'ति राजविदितो यो नटो विश्वकर्मा तस्य गृहे प्रवेशः, 'खग्गोपी' कुष्ठी, उपसर्गः—प्रव्रज्याग्रहणे निवारणं, दहनं नाटकपुस्तकस्य । अथैतापवादमाह—'गेलण्णे 'त्यादि, ग्लानो—मन्दः, 'खमकः' मासक्षपकादिः, 'पाघूर्णकः' स्थानान्तरादायातः, 'स्थविरः' वृद्धः, आदिशब्दात्सहस्रमल्लादिपरिग्रहः, तेषामर्थाय द्वितीयमपवादपदमिति भावः, सेव्यते—एतदर्थं मायापिण्डोऽपि ग्राह्य इत्यर्थः । उक्तं मायाद्वारम्, अथ लोभद्वारमाह—

लब्भंतंपि न गिण्हइ अन्नं अमुगंति अज्ज घेच्छामि । भद्दरसंति व काउं गिण्हइ खद्धं सिणिद्धाई ॥ ४८१ ॥

व्याख्या—अद्याहममुकं सिंहकेसरादिकं ग्रहीष्यामीति बुद्ध्याऽन्यद्वल्लचणकादिकं लभ्यमानमपि यत्र गृह्णाति, किन्तु तदेवेप्सितं, स लोभपिण्डः । अथवा पूर्वं तथाविधबुद्ध्यभावेऽपि यथाभावं लभ्यमानं 'खद्धं' प्रचुरं 'स्निग्धादि' स्निग्धमधुरादिकं भद्रकरसमिति कृत्वा गृह्णाति स लोभपिण्डः । तत्र प्रथमभेदमाश्रित्योदाहरणं गाथाद्वयेनाह—

चंपा छणंमि घिच्छामि मोयए तेवि सीहकेसरए । पडिसेह धम्मलाभं काऊणं सीहकेसरए ॥ ४८२ ॥

सड्ढुरत्तकेसरभायण भरणं च पुच्छ पुरिमड्ढे । उवओग संत चोयण साहुत्ति विगिंचणे नाणं ॥ ४८३ ॥

व्याख्या—चम्पा नाम पुरी, तत्र सुव्रतो नाम साधुः, अन्यदा च तत्र मोदकोत्सवः समजनि, तस्मिंश्च दिने सुव्रतोऽचिन्तयत्—

अथ मया मोदका एव ग्रहीतव्याः, तेऽपि सिंहकेसरकाः, तत इत्थं सम्प्रधार्य भिक्षां प्रविष्टो कोऽत्युत्सुकतयाऽन्यत्प्रतिषेधेन सिंहकेसरमोदकान्मार्ग-
यमाणस्तावत्परिभ्रमति स्म यावत्सार्द्धं प्रहरद्वयं, ततो न लब्धा मोदका इति मनाग्दूषितो बभूव, ततो गृहद्वारे प्रविशन् धर्मलाभस्य धर्मलाभस्य
स्थाने सिंहकेसरा इति पठति, एवं च सकलमपि दिनं भ्रान्त्वा रात्रौ तथैव परिभ्रमन् प्रहरद्वयसमये श्रावकस्य गृहे प्रविवेश, धर्मलाभ-
भणनस्थाने सिंहकेसरा इत्युवाच, सोऽपि च श्रावकोऽतीव गीतार्थो दक्षश्च, ततस्तेन परिभावयामासे—नूनमेतेन क्वापि न लब्धाः
सिंहकेसरा मोदका इति चित्तस्य भ्रष्टि, ततस्तस्य चित्तसंस्थापनाय सिंहकेसराणां भृतं भाजनमुपढौकितं, भगवन्! प्रतिगृहाण सर्वा-
नप्येतान् सिंहकेसरमोदकानिति, गृहीतेन च परिपूरितं, ततः स्वस्थीभूतं तस्य चित्तं, श्रावकेण चोक्तं—भगवन्! अद्य मया पूर्वार्द्धं
प्रत्याख्यातं स किं पूर्णो न वा? इति, ततः स्वस्थ उपयोगमूर्ध्वं कृतवान्, पश्यति गगनमण्डलमनेकतारानिकरपरिकरितमर्द्धरात्रोपल-
क्षितं, ततो ज्ञातवानात्मनो भ्रमं, हा! मूढेन मया विरूपमाचरितं, धिग् मे लोभाभिभूतस्य जीवितं, भोः श्रावक! सम्यक् कृतं त्वया
यदहं सिंहकेसरप्रदानपूर्वं पूर्वार्द्धप्रत्याख्यानपरिपूर्णतासम्भेन संसारे निमज्जन् रक्षितः, सती मे तव चोदना, तत आत्मानं निन्दन् विधिना
च मोदकान् परिष्ठापयन् तथा कथमपि ध्यानानलं प्रज्वालयितुं प्रवृत्तः यथा क्षणमात्रेण सकलान्यपि घातिकर्माण्युच्चोप, ततः प्रादुर्भूतं
तस्य केवलज्ञानम्। सूत्रं सुगमम्। उक्तं लोभद्वारम्, अथ संस्तवद्वारमाह—

दुविहो उ संथवो खलु सम्बन्धिवयणसंथवो चेव। एक्केक्कोवि य दुविहो पुव्विं पच्छा य नायव्वो ॥ ४८४ ॥

व्याख्या—द्विविधः खलु संस्तवः, तद्यथा—परिचयरूपः श्लाघारूपश्च, तत्र परिचयरूपः सम्बन्धिसंस्तवः श्लाघारूपो वचनसं-

स्तवः । तत्र सम्बन्धिनो-मातादयः श्वश्र्वादयश्च तद्रूपतया यः संस्तवः स सम्बन्धिसंस्तवः, वचनं-भाषा तद्रूपो यः संस्तवः स वचनसंस्तवः । तत्र सम्बन्धिसंस्तवः पूर्वसंस्तवः पश्चात्संस्तवश्च । तत्र सम्बन्धिसंस्तवस्य द्विविधस्यापि संस्तवः, एकैकोऽपि च द्विधा, तद्यथा—'पुव्विं पच्छा य' त्ति पूर्वसंस्तवः पश्चात्संस्तवश्च । तत्र सम्बन्धिसंस्तवस्य द्विविधस्यापि स्वरूपमाह—

मायपिइ पुव्वसंथव सासूसुसराइयाण पच्छा उ । गिहि संथवसंबंधं करेइ पुव्वं च पच्छा वा ॥ ४८५ ॥

व्याख्या—मातापित्रादिरूपतया यः संस्तवः—परिचयः स पूर्वसंस्तवो, मात्रादीनां पूर्वकालभावित्वात्, यस्तु श्वश्रूश्वशुरादिरूपतया संस्तवः स पश्चात्संस्तवः, श्वश्र्वादीनां पश्चात्कालभावित्वात्, तत्र साधुर्भिक्षार्थं प्रविष्टः सन् गृहिभिः सह 'संस्तवसम्बन्धं' परिचयपन्नं 'पूर्वं' पूर्वकालभावि मात्रादिरूपतया 'पश्चाद्' पश्चात्कालभावि श्वश्र्वादिरूपतया वा करोति । कथम्? इत्याह—

आयवयं च परवयं नाउं संबंधए तयणुरूवं । मम माया एरिसिया ससा व धूया व नत्ताई ॥ ४८६ ॥

व्याख्या—इह साधुर्भिक्षार्थं गृहे प्रविष्टः सन्नाहारलम्पटतयाऽऽत्मनः परवयश्च ज्ञात्वा 'तदनुरूपं' वयोऽनुरूपं सम्बध्नाति, यदि सा वयोवृद्धा स्वयं च मध्यमवयाः ततो ममेदृशी माताऽभूदिति ब्रूते, यदि पुनः साऽपि मध्यमवयास्तत ईदृशी मम स्वसाऽभूदिति वदति, अथ बालवयास्ततो दुहिता नप्ता चेत्यादि । सम्प्रत्यस्यैव पूर्वरूपसम्बन्धिसंस्तवस्योदाहरणमाह—

अद्धिइ दिट्ठिपण्हय पुच्छा कहण ममेरिसी जणणी । थणखेवो सबघो विहवासुण्हाइदाणं च ॥ ४८७ ॥

व्याख्या—कोऽपि साधुर्भिक्षार्थं प्रविष्टः काञ्चिज्जिनमातृसमानां स्त्रियमवेक्ष्याऽऽहारादिलम्पटतया मातृस्थानेनाधृत्या दृष्टिभ्यां

पत्–र्पदश्रुविमोचनं करोति, ततः 'पुच्छ गत्ति सा स्त्री पृच्छति, किं त्वमश्रवो इयसे ? इति, ततः साधोः कथन–मम 'ईदृशी ' स्वस-
रुनी जनन्यपूर्वदिति । अत्र दोषानाह–ततस्तया मातृत्वमकृत्वार्थं साधुमुखे स्तनप्रक्षेपः क्रियते, परस्परं च सम्बन्ध स्नेहबुद्धिरूपो जायते,
तथा विपरिणामादिदान च करोति–मृतपुत्रस्य स्थानेऽयं मे पुत्र इति बुद्ध्या स्वस्नुपादानं कुर्यात्, आविश्रम्भात् स्नेहस्तवो दास्यादिदान
च, उक्तं पूर्वसम्बन्धिसंस्तवोदाहरणं, एवं पश्चात्सम्बन्धिसंस्तवोदाहरणमपि भावनीयं । सम्प्रति पुनः पश्चात्सम्बन्धिसंस्तवे दोषानाह—

पच्छासंथवदोसा सासू विहवादिधूयदाण च । भज्जा ममेरिसिच्चिय सज्जो घाठ वयभंगो वा ॥ ४८८ ॥

व्याख्या—पश्चात्सम्बन्धिसंस्तवयिमे दोषाः—मपूरीदृशी ममाऽऽसीदित्युक्ते सा विधवाया आश्रितश्वश्रूरम्यादिरूपायाः सुताया
दान करोति, तथा भार्या ममेदृश्यभवदित्युक्ते यदीर्ष्यालुस्तद्भर्ता समीपे च वर्तते तदा मम भार्योऽनेन स्वभार्या कल्पितेति विचिन्त्य साधो
र्घातं कुर्यात्, अथेर्ष्यालुस्तद्भर्ता न भवति समीपे वा न वर्तते तदा भार्याऽहमनेन कल्पितेत्युन्मत्ता भार्येव समाचरंती चित्तक्षोभमापा
दयेत्, ततो व्रतभङ्ग' । एवं तावत्पूर्वसम्बन्धिसंस्तवस्य पश्चात्सम्बन्धिसंस्तवस्य च प्रत्येकमसाधारण्यान् दोषानभिधाय सम्प्रत्युभयोरपि
साधारणानभिधित्सुराह—

मायावी चडुयारी अम्हं ओहावणं कुणइ एसो । निच्छुभणाई पंतो करिज्ज भद्देसु पडिबंधो ॥ ४८९ ॥

व्याख्या—भक्तिविरहितमप्यवादि कुर्वन्मायावी एषोऽस्माकमावर्जनानिमित्तं चाटूनि करोतीति निन्दा, तथाऽस्माकं स्वस्य कार्पटि
कभावस्य जनन्यादित्वकथनेनापभ्राजनं विधत्ते, तत एवं विचिन्त्य प्रान्तः स्वगृहनिष्कासनादि करोति, अथ ते गृहिणो भद्रा भवेयुस्तर्हि

तेषु मध्येषु साधोरुपरि प्रतिबन्धो भवेत्, प्रतिबन्धे च सत्याभावरूपादिकं कुर्या दयादिति। तक्तो द्विविधोऽपि सम्बन्धिसंस्तव, अथ वचनसंस्तवस्य पूर्वरूपस्य लक्षणमाह—

गुणसथवेण पुव्विं संतासतेण जो थुणिज्जाहि। दायारमदिन्नमी सो पुव्विसंथवो हवइ ॥ ४९० ॥

व्याख्या—'गुणाः' औदार्यादयः तेषां यः 'संस्तवः' प्रशंसारूपो वचनसङ्गतत्वेन सत्यरूपेणासत्यरूपेण वा यः साधुर्दातव्ये भक्तादावदत्ते सति दातारं स्तूयात, स एष पूर्वसंस्तवो भवति। अस्यैवोल्लेखं दर्शयति—

एसो सो जस्स गुणा वियरंति अनारिया दस दिसासु। इहरा कहासु सुणिमो पच्चक्ख अज्ज दिट्ठोऽसि ॥४९१॥

व्याख्या—सुगमं, नवरम् 'इहरा' इतरथा, इदानीं दर्शनात् पूर्वमित्यर्थः। सम्प्रति पश्चाद्रूपस्य वचनसंस्तवस्य लक्षणमाह—

गुणसथवेण पच्छा संतासतेण जो थुणिज्जाहि। दायार दिन्नमी सो पच्छासथवो होइ ॥ ४९२ ॥

व्याख्या—दत्ते भक्तादौ सति पश्चाद्दातारं गुणसंस्तवेन सत्यरूपेणासत्यरूपेण वा यः साधुः स्तूयात् एष पश्चात्संस्तवो भवति। सम्प्रत्यस्यैवोल्लेखं दर्शयति—

विमली कयऽम्ह चक्खू जहत्थया वियरिया गुणा तुज्झं। आसि पुरा मे संका संपय निस्संकिय जायं ॥ ४९३ ॥

व्याख्या—भिक्षार्थं प्रविष्टः साधुर्लब्धे भक्तादौ दातारं वक्ति यथा निजदर्शनेन त्वया विमलीकृते नमक्षुषी, तथा यथार्थास्तव

गुणा सर्वेऽपि विपरीताः, यथा 'पुरा' पूर्वं मे भक्तःऽऽसीत्—यादृग् गुणः श्रूयते स किं तादृशः यद्वोतान्यादृश इति ?, सम्प्रति तु त्वयि दृष्टे निःशङ्कितं मे हृदयं जातम् ॥ उक्तं संस्तवद्वारम्, अथ विद्यामन्त्राख्यं द्वारमाह—

विज्जामतपरूवण विज्जाए भिक्खुवासओ होइ । मंतमि सीसवेयण तत्थ मुरुंडेण दिट्ठंतो ॥ ४९४ ॥

व्याख्या—विद्यामन्त्रयोः प्ररूपणा कर्तव्या, सा चैवं—ससाधना स्त्रीरूपदेवताधिष्ठिता वाऽक्षरपद्धतिर्विद्या, असाधना पुरुषरूपदेवताधिष्ठिता वा मन्त्र, 'तत्थ'त्ति तत्र विद्यायां भिक्षूपासको दृष्टान्तः, मन्त्रे शिरोवेदनायां मुरुण्डेन राज्ञोपलक्षिताः पादलिप्तसूरि । तत्र भिक्षूपासकदृष्टान्तं गाथाद्वयेन भावयति—

परिपिंडियमुल्लावो अइपंतो भिक्खुवासओ दाणे । जइ इच्छह अणुजाणह घयगुलवत्थाणि दावेमि ॥ ४९५ ॥

गंतुं विज्जामंतण किं देमि ? घय गुलं च वत्थाई । दिन्ने पडिसाहरणं केण हिय केण मुट्ठोमि ? ॥ ४९६ ॥

व्याख्या—गन्धसमृद्धे नगरे धनदेवो नाम भिक्षूपासकः, स च साधुभ्यो भिक्षार्थं गृहे समागतेभ्यो न किञ्चिदपि ददाति, अन्यदा च तरुणश्रमणानामेकत्र परिपिण्डितानां परस्परमुल्लापः, तत्रैकेनोक्तम्—अतिप्रान्तोऽयं धनदेवः संयतानां न किमपि ददाति, तदस्ति कोऽपि साधुर्य एनं घृतगुडादिकं दापयति, ततस्तेषां मध्ये केनाप्यूचे—यदीच्छथ ततोऽनुजानीध्वं मां येनाहं दापयामि, तैरनुज्ञातः, ततो गतस्तस्य गृहमभिमन्त्रितो विद्यया, ततो ब्रूते साधून्—किं प्रयच्छामि ?, तैरुक्तं—घृतगुडवस्त्रादि, ततो दापितं तेन संयतेभ्यः प्रचुरं घृतगुडादिकं, तदनन्तरं च प्रतिसंहृता क्षुल्लकेन विद्या, जातः स्वभावस्थो भिक्षूपासकः, ततो यावदभिमानपाति घृतादिकं तावत्स्तोकं पश्यति, ततः केन

मे इत्थं धूयादि ? केनाहं मुषितोऽस्मि ? इति विलपितुं प्रवृत्तः, ततः परिजनेनोक्तं–युष्माभिरेव दापितं सर्वतेभ्यः तत्किं यूयमेवं भणथ ?, ततो मौनमवलम्ब्य स्थितः । अथ दोषानुपदर्शयति—

पडिथिज्ज थंभणाई सो वा अन्नो व से करिज्जाहि । पावाजीवी माई कम्मणगारी य गहणाई ॥ ४९७ ॥

व्याख्या—यो विद्ययाऽभिमन्त्रितः स च स्वभावस्थो जातः सन् कदाचित्प्रद्विष्टोऽन्यो वा तत्पक्षपाती प्रद्विष्टः सन् प्रतिविद्यया ‘स्तम्भनादि’ स्तम्भनोच्चाटनमारणादि कुर्यात्, तथा ‘पापाजीविन’ पापेन–विद्यादिना परव्यंसकरणरूपेण जीवनशीला मायिनः शठा इति लोके जुगुप्सा, तथा कार्मणकारिण इम इति राजकुले ग्रहणाकर्षणक्षेपपरित्यागनकदर्थनमारणादि । सम्प्रति मन्त्रविषये मुरुण्डराजोपलक्षितपादलिप्तोदाहरणमाह—

जह जह पएसिणी जाणुगंमि पालित्तओ भमाडेइ । तह तह सीसे वियणा पणस्सइ मुरुंडरायस्स ॥ ४९८ ॥

व्याख्या—प्रतिष्ठानपुरे मुरुण्डो नाम राजा, पादलिप्ता नाम सूरयः, अन्यदा च मुरुण्डराजस्य प्रभूतातिशयेन शिरोवेदना, न केनापि विद्यामन्त्रादिभिरुपशमयितुं शक्यते, तत आकारिता राज्ञा पादलिप्ताः सूरयः, कथास्तेषामागतानां महती प्रतिपत्तिः, कथितं चाकारणकारणं शिरोवेदना, ततो यथा लोको न जानीते तथा मन्त्रं ध्यायद्भिः प्रावरणमध्ये निजदक्षिणजानुशिरसि पार्श्वतो निजदक्षिणहस्तप्रदेशिनी यथा यथा भ्राम्यते तथा तथा राज्ञः शिरोवेदना अपगच्छति, ततः क्रमेणापगता सकलाऽपि शिरोवेदना, जातोऽतिशयेन सूरीणामुपासकः, ततो विपुलं भक्तपानादिकं तेभ्यो प्रयच्छन् । अथ दोषानाह—

पडिमतथमणाई सो वा अन्नो व से करिज्जाहि । पात्राजीवियमाई कम्मणगारी भवे बीय ॥ ४९९ ॥

व्याख्या—इह कथानके न कोऽपि दोषो जातः, पादलिप्तसूरीणां मुरुण्डराजं प्रत्युपकारित्वात्, केवलं मागुक्तविपाककथानक इव मन्त्रेऽपि प्रयुज्यमाने सम्भाव्यन्ते दोषाः ततस्तदुपदर्शनं क्रियते, तथैव गाथा भागिव व्याख्येया, नवरं 'भवे बीयं' ति पुण्यालम्बनम् धिकृत्य द्वितीयम्—अपवादपदं भवेत्, सङ्घादिप्रयोजने मन्त्रोऽपि प्रयोक्तव्य इति भावार्थः, एवं विद्यायामपि द्रष्टव्यम् । उक्तं विद्याम भारूपं द्वारद्वयम्, अथ चूर्णयोगमूलकर्माख्यं द्वारत्रयमाह—

चुन्ने अंतद्धाणे चाणक्के पायलेवणे जोगे । मूल विवाहे दो दंडिणी उ आयाण परिसाडे ॥ ५०० ॥

व्याख्या—चूर्णेऽन्तर्द्धाने—लोके दृष्टिपथविरोधानकारके दृष्टान्ते चाणक्यविदितौ द्वौ क्षुल्लकौ, पादे—पादलेपनरूपे योगे दृष्टान्ताः समितसूरयः, तथा 'मूले' मूलकर्मणि मक्षतयोनिक्षतयोनिकरणरूपे युवतिद्वयं दृष्टान्तः, विवाहविषयेऽपि मूलकर्मणि युवतिद्वयमुदाहरणं, तथा गर्भाधानपरिसाटरूपे मूलकर्मणि द्वे 'वणिज्यौ' नृपपत्न्यावुदाहरणं । तत्र 'चुम्मे अंतद्धाणे चाणक्के' इत्यवयवं भाष्यकृद्गाथात्रयेण व्याख्यानयति—

जघाहीणा ओमे कुसुमपुरे सिरसजोगरहकरणं । खुड्ड जुगजण सुणणा गमणं देसंतरे सरणं ॥४४॥ (भा० )

भिक्खे परिहायंते थेराण तेसि ओमि दिंताणं । सहभुज्ज चंदगुत्ते ओमोयरियाए दोचल्ल ॥ ४५ ॥ (भा० )

चाणक्क पुच्छ इट्टालचुण्णदार पिहित्तु धूमे य । दट्टुं कुच्छपसंसा थेरसमीवे उवालंभो ॥ ४६ ॥ (भा० )

व्याख्या—कुसुमपुरे नगरे चन्द्रगुप्तो नाम राजा, तस्य मन्त्री चाणक्यः, तत्र च महाबलपरिहीणाः सुस्थिताभिधाः सूरयः, अन्यदा च तत्र दुर्भिक्षमपतत्, ततः सूरिभिश्चिन्तितम्—अमुं समुद्राभिधानं शिष्यं सूरिपदे संस्थाप्य सकलगच्छसमेतं सुभिक्षे क्वापि प्रेषयामि, ततस्तस्मै योनिप्राभृतमेकान्ते व्याख्यातुमारब्धं, तत्र च क्षुल्लकद्वयेन कथमप्यदृश्यीकरणनिमित्तमञ्जनं व्याख्यायमानं शुश्रुवे, यथा अनेनाञ्जनेनाञ्जितचक्षुर्न केनापि दृश्यते इति, योनिप्राभृतव्याख्यानसमर्थनानन्तरं च समुद्राभिधोऽन्तेवासी सूरिपदे स्थापितः, मुत्कलितश्च सकलगच्छसमेतो देशान्तरे, स्वयमेकाकिनस्तत्रैवावतस्थिरे सूरयः, कतिपयदिनानन्तरं चाऽऽचार्यस्नेहवशतस्तत् क्षुल्लकद्वयमाचार्यसमीपे समाजगाम, आचार्या अपि यत्किमपि भिक्षया लभन्ते तत्सर्वं विरिच्य (परिभाज्य) क्षुल्लकद्वयेन सह भुञ्जते, अत आहारापरिपूर्णतया सूरीणां दौर्बल्यमभवत्, ततश्चिन्तितं क्षुल्लकद्वयेन—भवतोऽन्तरा सूरीणां ततो वयं पूर्वश्रुतमञ्जनं कृत्वा चन्द्रगुप्तेन सह भुञ्जावहे इति, तथैव कृतं, ततश्चन्द्रगुप्तस्याहारस्तोकतया बभूव शरीरे कृशता, चाणक्येन पृष्टः—किं ते शरीरदौर्बल्यं ?, स आह—परिपूर्णाहाराऽलाभतः, ततश्चाणक्येन चिन्तितम्—एतावत्याहारे परिवेष्यमाणे कथमाहारस्यापरिपूर्णता?, नूनमञ्जनसिद्धः कोऽपि समागत्य राज्ञा सह भुङ्क्ते, ततस्तेनाञ्जनसिद्धग्रहणाय भोजनमण्डपेऽतीव श्लक्ष्णः इष्टकाचूर्णो विकीर्णो, दृष्टानि मनुष्यपदानि, ततो निश्चिक्ये—नूनं द्वौ पुरुषावञ्जनसिद्धावायातः, ततो द्वारं पिधाय मध्येऽतिबहलो धूमो निष्पादितः, धूमबाधितनयनयोश्च तयोरञ्जनं नयनाश्रुभिः सह विगलितं, ततो बभूवतुः प्रत्यक्षौ क्षुल्लकौ, कृता चन्द्रगुप्तेनात्मनि जुगुप्सा—अहो ! विटालितोऽहमाभ्यामिति, ततश्चाणक्येन तस्य समाधाननिमित्तं प्रवचनमाहात्म्यरक्षार्थं च प्रशंसितो राजा—धन्यस्त्वमसि यो बालब्रह्मचारिभिर्यतिभिः पवित्रीकृत इति, ततो वन्दित्वा मुत्कलितौ द्वावपि क्षुल्लकौ, चाणक्येन रजन्यां वसतावागत्य सूरय उपालब्धाः—यदेतौ युष्मत्क्षुल्लकावुड्डाहं कृतवन्तौ, ततः सूरिभिः स एवोपालब्धः—यथा

त्वमेवासापराधकारी, यो द्वयोरपि क्षुल्लकयोर्न निर्वाहं चिन्तयसि ?, स आह—भगवन् ! एवमेवेदमिति पादयोर्निपत्य सूरयस्तेन क्षामिताः, कृता सकलस्यापि साधुसंघस्य तत ऊर्ध्वं यथायोगं चिन्ता । सूत्रं सुगमम् । अत्राविशेषतः साक्षाद्दोषानाह—

जे विज्जमंतदोसा ते च्चिय वसिकरणमाइचुन्नेहिं । एगमणेगपओसं कुज्जा पत्थारओ वावि ॥ ५०१ ॥

व्याख्या—य एव विद्यायां मन्त्रे चोक्ता दोषास्त एव वशीकरणादिचूर्णेष्वपि द्रष्टव्याः, सूत्रे च तृतीया सप्तम्यर्थे, तथा चूर्णे प्रयुज्यमाने एकस्य चूर्णस्य प्रयोक्तुरनेकेषां वा साधूनामुपरि प्रद्वेषं कुर्यात्, ततस्तत्र भिक्षाद्यभावसम्भवः, 'पत्थारओ वावि' नाशो वा भवेत्, अपिः समुच्चये, तदेवं 'चुण्णे अन्तद्धाणे चाणक्के' इति व्याख्यातं, तद्व्याख्यानाच्च चूर्ण इति द्वारं समर्थितं । इदानीं 'पायलेवणे जोग' इति व्याख्यानयन्नाह—

सूभगदुब्भगकरा जोगा आहारिमा य इयरे य । आघंसधूववासा पायपलेवाइणो इयरे ॥ ५०२ ॥

व्याख्या—योगाः 'सौभाग्यदौर्भाग्यकराः' जनप्रियत्वाप्रियत्वकराः, ते च द्विधा—आहार्या इतरे च, तत्र 'आहार्या' ये पानीयादिना सहाभ्यवह्रियन्ते तद्विपरीता इतरे, तथाचा 'आघर्षधूपवासा' ये पानीयादिना सह घर्षयित्वा पीयन्ते ते आघर्षाः, धूपवासाः प्रतीताः । अथ चूर्णस्य वासानां च परस्परं कः प्रतिविशेषो ?, द्वयोरपि क्षोदरूपत्वाविशेषात्, उच्यते, सामान्यद्रव्यनिष्पन्नः शुष्क आर्द्रो वा क्षोदश्चूर्णः, सुगन्धद्रव्यनिष्पन्नाश्च शुष्कपेषपिष्टा वासाः, इतरे त्वनाहार्या योगाः पादप्रलेपनादयः । तत्राऽऽहार्यरूपस्य पादप्रलेपनरूपस्य योगस्य दृष्टान्तं गाथात्रयेण भावयति—

नइकण्हबिन्न दीवे पंचसया तावसाण निवसंति । पव्वदिवसेसु कुलवइ पालेवुत्तार सक्कार ॥ ५०३ ॥
जण सावगाण खिंसण समियक्खण माइठाण लेवेण । सावय पयत्तकरणं अविणय लोए चलणधोए ॥५०४॥
पडिलाभिय वच्चंता निब्बुड नइकूल मिलण समियाओ । विम्हिय पंचसया तावसाण पव्वज्ज साहाय ॥५०५॥

व्याख्या—अचलपुरं नाम नगरं, तत्र प्रत्यासन्ने द्वे नद्यौ, तद्यथा—कृष्णा वेन्ना च, तयोरपान्तराले ब्रह्मनामा द्वीपः, तत्र चैकोनपञ्चशततापसपरिवृतो देवशर्मनामा कुलपतिः परिवसति, स च संक्रान्त्यादिपर्वसु स्ववीर्यप्रभावनानिमित्त सर्वैरपि तापसैः परिवृतः पादलेपेन कृष्णां नदीमुत्तीर्याचलपुरमागच्छति, लोकश्च तथारूपं तस्यातिशयमवलोक्य विस्मितचेताः सविशेषं भोजनादिसत्कारमाचरति, श्रावकजनांश्च कुत्सयते—यथा न युष्मद्गुरूणामेतादृशी शक्तिरस्तीति, ततः श्रावकैः समिताभिधसूरीणामाख्या यि, तैश्च स्वचेतसि परिभाव्योक्तं—मातृस्थानत एष पादलेपेन नदीमुत्तरति, न तपःशक्तिप्रभावतः, ततः श्रावकैस्तस्य मातृस्थानप्रकटनार्थं सपरिवारो भोजनार्थं निमन्त्रितः कुलपतिः, ततः समाजगाम भोजनवेलायां गृहे, आरब्धं तस्य श्रावकैः पादप्रक्षालनं कर्तुं, स च न ददाति, मा पादलेपः पादयोरपयासीदिति कृत्वा, ततः श्रावकैरुक्तं—माऽस्माकमप्रक्षालितपादान् युष्मान् भोजयतामविनय इति बलादपि प्रक्षालितौ पादौ, ततो भोजनानन्तरं निजस्थानगमनाय प्रचलितः, श्रावका अपि सकलजनानाहूयानुव्रजनबुद्ध्या तेन सह चलितुं प्रवृत्ताः, ततः सपरिवारः कुलपतिः कृष्णां नदीमुत्तरितुं प्रावर्तत, पादलेपाभावे च निमज्जितुं लग्नः, ततो जाता जने तस्यापभ्राजना, अत्रान्तरे च तत्प्रबोधाय समितसूरयस्तत्रागमन्, तैः सकलजनसमक्षं नदीं प्रत्युक्तं—हे कृष्णे ! परं पारं वयं गन्तुमिच्छामः, ततो द्वे

अपि कृष्णानयाः कूले एकत्र मिलिते, जातो विस्मयो लोकस्य सपरिवारस्य च कुलपतेः, ततो गृहीता सपरिवारेण कुलपतिना दीक्षा, सा ब्रह्मशाखा बभूव। सूत्रं सुगमं। तदेवं 'पायलेवणे जोगे' इति व्याख्यातं, तद्व्याख्यानाच्च योगद्वारं समर्थितं। सम्प्रति 'मूल'मिति व्याचिख्यासुराह—

अधिई पुच्छा आसन्न विवाहे भिक्खसाहणया। आयमणपियणओसह अक्खय जज्जीवअहिगरणं ॥ ५०६ ॥

जंघापरिजिय सड्ढी अद्धिइ आणिज्जए मम सवत्ती। जोगो जोणुग्घाडण पडिसेह पओस उड्डाहो ॥ ५०७ ॥

व्याख्या—क्वचित्पुरे धननाम्नः श्रेष्ठिनो भार्या धनप्रिया, तस्य दुहिता सुन्दरी, सा च भिन्नयोनिका, परमेनमर्थं माता जानाति न पिता, सा च पित्रा तत्रैव पुरे कस्यापीश्वरपुत्रस्य परिणयनाय दत्ता, समागतः प्रत्यासन्नो विवाहो, मातुश्चिन्ता बभूव यथा परिणीता सती यदि भर्त्रा भिन्नयोनिका ज्ञास्यते ततस्तेनोज्झिता वराकी दुःखमनुभविष्यति, अत्रान्तरे च समागतः कोऽपि संयतो भिक्षार्थं, तेन सा पृष्टा, तया कथितः सर्वोऽपि वृत्तान्तः, ततः साधुनोक्तं—मा भैषीरहमभिन्नयोनिकां करिष्यामि, तत आचमनौषधं पानौषधं च तस्यै ददौ च, जाता अभिन्नयोनिका। तथा चन्द्राननायां पुरि धनदत्तः सार्थवाहस्तस्य भार्या चन्द्रमुखा, तयोश्चान्यदा परस्परं कलहः समुत्पन्नः, ततोऽभिनिवेशेन तन्नगरवास्तव्यस्यैव कस्यापीश्वरस्य दुहिता धनदत्तेन परिणयनार्थं वृता, ज्ञातमेतं वृत्तान्तं चन्द्रमुखया, ततो बभूव महती तस्या अधृतिः, अत्रान्तरे च जङ्घापरिजितनामा साधुरागतो भिक्षार्थं, दृष्टा तेनाधृतिं कुर्वती चन्द्रमुखा, तया पृष्टा—किं भद्रे! त्वमधृतिमिवी दृश्यसे?, ततः कथितस्तया सपत्नीव्यतिकरः, ततः साधुना समर्पितं तस्या औषधं, भणिता च सा—कथमपि तस्या भक्तस्य पानस्य मध्ये देयं येन सा भिन्नयोनिका भवति, तत स्वयमेव निषेत्स्यते, येन सा न परिणीयते, तथैव कृतं, न परिणीता सा भर्त्रेति। सूत्रं सुगमं। नवरं

'आजीवम्' इति यावज्जीवमधिकरणं-मैथुनप्रवृत्तिः, 'पडिसेहि' त्ति साऽभिनवा परिणेतुमारब्धा भिन्नयोनिकेति ज्ञात्वा प्रतिषिद्धा। अयं चेद्दर्पस्तया ज्ञातो भवेत्, तर्हि तस्याः साधु प्रति महान् प्रद्वेषो भवेत्, प्रवचनस्योड्डाहः। सम्प्रति 'विवाहे' इति पदं व्याख्यानयन्नाह—

मा ते फंसेज्ज कुलं अदिज्जमाणा सुया वयं पत्ता। घम्मो य लोइयस्सा जइ सिंदु तत्तिया नरया ॥ ५०८ ॥

किं न ठविज्जइ पुत्तो पत्तो कुलगोत्तकित्तिसंताणो। पच्छावि य तं कज्जं असग्गहो मा य नासिज्जा ॥५०९॥

व्याख्या—कश्चिद्ग्रामे कोऽपि गृहपतिः, तस्य पुत्रिका वयःप्राप्ता, तत्र कोऽपि साधुर्भिक्षार्थं प्रविष्टः सन् दृष्ट्वा तन्मातरमेवमभिदधाति—तव दुहिता वयःप्राप्ता-यौवनं प्राप्ता, यदि सम्प्रति न परिणी(णाय्यते)यसे तर्हि केनापि तरुणेन सहाकार्यं समाचर्य कुलमालिन्यमुत्पाद यिष्यति, तथा 'धम्मा' त्ति लोके एवं श्रुतिः—यदि कुमारी ऋतुमती भवेत् तर्हि यावन्तस्तस्या रुधिरबिन्दवो निपतन्ति तावतो वारान् तन्माता नरकं याति। तथा कश्चिद्ग्रामे कस्यापि कुटुम्बिनः पुत्रं यौवनिकामधिगतमवलोक्य साधुस्तन्मातरमेवं ब्रूते—यथा कुलस्य गोत्रस्य कीर्तेश्च सन्तानो-निबन्धनमेष तव पुत्रो, यौवनं च प्राप्तः, ततः किं न सम्प्रति परिणाय्यते?, अपि च-परिणीतः सन् कलत्रस्नेहेन स्थिरो भवत्यपरिणीतश्च कयाऽपि स्वच्छन्दचारिण्या सहोत्थाय गच्छेत्, पश्चादपि चैष परिणाययितव्यः ततस्सम्प्रत्यपि कस्मान्न परि णाय्यते? इति। सम्प्रति 'दा दहिणीओ आयाणपरिसाडे' इत्यवयवं व्याचिख्यासुराह—

किं अद्धिइत्ति पुच्छा सविस्तिणी गब्भिणित्ति मे देवी। गब्भाहाणं तुज्झवि करोमि मा अद्धिइं कुणसु ॥५१०॥

जइवि सुओ मे होही तहवि कणिट्ठोत्ति इयरो जुवराया। देह परिसाडण से नाए य पओस पत्थारो ॥ ५११ ॥

व्याख्या—सघुगं नाम नगरं, तत्र सिंधुराजो नाम राजा, तस्य सकलान्तःपुरप्रधाने द्वे पत्न्यौ, तद्यथा—शृङ्गारमतिर्जयसुन्दरी च, तत्रान्यदा बभूव शृङ्गारमतेर्गर्भाधान, इतरा च जयसुन्दरी नूनमस्याः पुत्रो भविष्यतीति विचिन्त्य मात्सर्यवशादधृतिं कुर्वत्यवति ष्ठते, अत्रान्तरे च समागत कोऽपि साधुः, तेन सा पपृच्छे—किं भद्रे! त्वमधृतिमती लक्ष्यसे?, तत सा तस्मै सपत्न्या व्यतिकरमचकथत्, साधुरप्यब्रवीत्—मा कार्षीरधृतिं, तवापि गर्भाधानमहं करिष्ये, ततस्तयोक्तं—भगवन्! यद्यपि युष्मत्प्रसादेन मे पुत्रो भावी, तथापि स कनिष्ठत्वेन यौवराज्यं न प्राप्स्यति, किन्तु सपत्न्या एव सुतः, तस्य ज्येष्ठत्वात्, तत साधुना तस्या भेषजमेकं गर्भाधानाय दत्त, अपरं तु दापितं सपत्न्या गर्भशातनायेति। सूत्रं सुगमं। नवरमेतावत् कर्तव्यं, यतो गर्भशातने साधुकृते ज्ञाते सति प्रद्वेषो भवति, ततः शरीर स्यापि 'प्रस्तार' विनाशः। सम्प्रति सर्वस्मिन्नपि मूलकर्मणि दोषान् प्रदर्शयति—

सत्वडिकरणे काया कामपवित्तिं च कुणइ एगत्थ। एगत्थुड्डाहाई जज्जिय भोगतराय च ॥ ५१२ ॥

व्याख्या—'सत्वडिकरणे मा ते फसेज्ज कुल' तथा 'किं न ठविज्ज' इत्यादिगाथाद्वयोक्ते वीवाहकरणे 'काया' पृथिव्या दयो विराध्यन्ते, एकत्र पुनरक्षतयोनिकत्वकरणे गर्भाधाने च कामप्रवृत्तिं करोति, गर्भाधानाद्धि पुत्रोत्पत्तौ प्राय इष्टा भवति, ततः कम्मा जायते, इति मैथुनसन्ततिः। एकत्र पुनर्गर्भपातने उड्डाहादि—प्रवचनमालिन्यात्मविनाशादि, एकत्र पुनः क्षतयोनिकत्वकरणे यावज्जीवं भोगान्तराय, तदन्याड्डाहादि च, तदेवमभिहित मूलकर्म तदभिधानाच्च व्याख्याता उत्पादनादोषाः, तद्व्याख्याने च सम र्थिता गवेषणैषणा। सम्प्रति ग्रहणैषणाया अवसरमाह—

एव तु गविट्ठस्सा उग्गमउप्पायणाविसुद्धस्स। गहणविसोहिविसुद्धस्स होइ गहणं तु पिंडस्स ॥ ५१३ ॥

व्याख्या—' एवम् ' उक्तेन प्रकारेणोद्गमोत्पादनाविशुद्धस्य—उद्गमोत्पादनदोषपरिहितस्य गवेषितस्य पिण्डस्य ग्रहणं भवति 'ग्रहणविसोधिविशुद्धस्य' ग्रहणविषयशङ्कितादिदोषाभावेन विशुद्धस्य, नान्यथा, ततो ग्रहणैषणादोषानहं वक्ष्ये इति भावः । ते च यत उत्पद्यन्ते तत्समुत्थान् दर्शयति—

उप्पायणाएँ दोसे साहूउ समुट्ठिए वियाणाहि । गहणेसणाइ दोसे आयपरसमुट्ठिए वोच्छं ॥ ५१४ ॥

व्याख्या—उत्पादनाया दोषान् साधुतः समुत्थितान् विजानीहि, ग्रहणैषणाया दोषाँस्त्वात्मपरसमुत्थितान् तानहं वक्ष्ये । तत्र ये आत्मसमुत्था ये च परसमुत्थास्तान् विभागतो दर्शयति—

दोन्नि उ साहुसमुत्था संकिय तह भावओऽपरिणय च । सेसा अट्ठवि नियमा गिहिणो य समुट्ठिए जाण ॥५१५॥

व्याख्या—द्वौ दोषौ साधुसमुत्थितौ, तद्यथा—शङ्कित भावतोऽपरिणतं च, एतच द्वयमपि वक्ष्यमाणस्वरूपं, शेषानष्टावपि दोषान् गृहिणः समुत्थितान् जानीहि । सम्प्रति ग्रहणैषणाया निक्षेपमाह—

नाम ठवणा दविए भावे गहणेसणा मुणेयव्वा । दव्वे वानरजूह भावंमि य दसपया हुति ॥ ५१६ ॥

व्याख्या—चतुर्धा ग्रहणैषणा, तद्यथा—नामग्रहणैषणा स्थापनाग्रहणैषणा द्रव्यग्रहणैषणा भावग्रहणैषणा च, तत्र नामस्थापने द्रव्यग्रहणैषणाऽपि ज्ञशरीरभव्यशरीररूपा गवेषणावद्वक्तव्या, ज्ञशरीरभव्यशरीरव्यतिरिक्तां तु द्रव्यग्रहणैषणामाह—'द्रव्ये ' द्रव्यग्रहणैषणायामुदाहरणं वानरयूथं, भावग्रहणैषणा द्विधा, तद्यथा—आगमतो नोआगमतश्च, तत्राऽऽगमतो ज्ञाता तत्र चोपयुक्तः, नोआगमतस्तु

द्विधा, तद्यथा—प्रशस्ता अप्रशस्ता च, तत्र प्रशस्ता—सम्यग्ज्ञानादिविषया, अप्रशस्ता—शङ्कितादिदोषदुष्टभक्तपानादिविषया, सा च 'दस पदा' वक्ष्यमाणशङ्कितादिभेदैर्दशप्रकारा । तत्र वानरयूथोदाहरणं रूपकत्रयेण भावयति—

पडिसडियपंडुपत्तं वणसंडं दट्ठु अन्नहिं पेसे । जूहवई पडियरए जूहेण समं तहिं गच्छे ॥ ५१७ ॥

सयमेवालोएउं जूहवई तं वणं समंतेण । वियरइ तेसिं पयारं चरिऊण य तो दहं गच्छे ॥ ५१८ ॥

ओयरंतं पयं दट्ठु, नीहरंतं न दीसई । नालेण पियह पाणीयं, नेस निक्कारणो दहो ॥ ५१९ ॥

व्याख्या—विशालशृङ्गो नाम पर्वतः, तत्रैकस्मिन् वनखण्डे वानरयूथमभिरमते, अत्र च तत्रैव पर्वते द्वितीयमपि वनखण्डं सर्वं पुष्पफलसमृद्धं समस्ति, परं तन्मध्यभागवर्तिनि ह्रदे शिशुमारोऽवतिष्ठते, स यत्किमपि मृगादिकं पानीयाय प्रविशति तत्सर्वमाकृष्य भक्षयति, अन्यदा च तद्वनखण्डं परिशटितपाण्डुपत्रमपगतपुष्पफलमवलोक्य यूथाधिपतिरन्यस्य वनखण्डस्य निर्वाहसमर्थस्य गवेषणाय वानरयुगलं प्रेषितवान्, गवेषयित्वा च तेन यूथाधिपतेर्निवेदितम्—अस्ति वनखण्डममुकप्रदेशे सर्वर्तुपुष्पफलप्रसमृद्धमस्माकं निर्वाहयोग्यं, ततो यूथाधिपतिः सह यूथेन तत्र गतवान्, परिभावयितुं च प्रवृत्तः समन्ततस्तद्वनखण्डं, ततो दृष्टस्तन्मध्ये जलपरिपूर्णो ह्रदः, परं तत्र प्रविशन्ति श्वापदानां पदानि दृश्यन्ते, न निर्गच्छन्ति, ततो यूथमाहूय यूथाधिपतिरुवाच—माऽत्र यूयं प्रविश्य पिबत पानीयं, किन्तु तटस्थिता एव नालेन पिबत, यतो नैष ह्रदो निष्कारणो—निरपायः, यथाहि—मृगादीनामत्र पदानि प्रविशन्ति दृश्यन्ते न निर्गच्छन्तीति, एवं चोक्ते यैस्तद्वत् कृतं ते वानराः स्वेच्छविहारसुखभाजिनो जाताः, इतरे तु विनष्टाः । उक्ता द्रव्यग्रहणैषणा, सम्प्रति भावग्रहणैषणा

वक्तव्या, तया चाधिकारोऽमन्तव्या, पिण्डदोषाणां यष्टुं प्रकान्तत्वात्, सा च शङ्कितादिभेदाद्दशप्रकारा, ततस्तानेव शङ्कितादीन् भेदान् प्रदर्शयति—

संकिय मक्खिय निक्खित्त पिहिय साहरिय दायगुम्मीसे । अपरिणय लित्त छड्डिय एसणदोसा दस हवंति ॥५२०॥

व्याख्या—'शङ्कितं' सम्भावितआधाकर्मादिदोषं 'म्रक्षितं' सचित्तपृथिव्यादिनाऽवगुण्ठितं 'निक्षिप्तं' सचित्तस्योपरि स्थापितं 'पिहितं' सचित्तेन स्थगितं 'संहृतम्' अन्यत्र क्षिप्तं 'दायकं' दायकस्योपयुक्तम् 'उन्मिश्रितं' पुष्पादिसम्मिश्रम् 'अपरिणतम्' अप्रासुकीभूतं, लिप्तं, 'छर्दितं' भूमावा वेरित, एते दश एषणादोषा भवन्ति । तत्र शङ्कितपदं व्याचिख्यासुराह—

संकाए चउभंगो दोसुवि गहणे य भुंजणे लग्गो । जं संकियमावन्नो पणवीसा चरिमए सुद्धो ॥ ५२१ ॥

व्याख्या—'शङ्कायां' शङ्किते 'चतुर्भङ्गी' चत्वारो भङ्गाः, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्, सा चेयं चतुर्भङ्गी—ग्रहणे शङ्कितो भोजने चेति प्रथमो भङ्गः, ग्रहणे शङ्कितो न भोजने इति द्वितीयः, भोजने शङ्कितो न ग्रहणे इति तृतीयः, न ग्रहणे न भोजने इति चतुर्थः, अत्र दोषानाह—'दोसुवी'त्यादि, द्वयोरपि शङ्कितस्य ग्रहणभोजनयोरपि यो वर्तते यत्र 'गहणे य'त्ति ग्रहणेऽप्यपरया न भोजने तथा भोजने सामर्थ्यात् ग्रहणे स सर्वोऽपि 'लग्गो' दोषेण सम्बद्धः, केन दोषेण ?, इत्याह—'जं संकिय' इत्यादि, षोडशो द्गमदोषनवैषणादोषरूपाणां पञ्चविंशतिदोषाणां मध्ये येन दोषेण शङ्कितं—सम्भावितमापन्नः—वर्तते तेन दोषेण सम्बद्धः, इदमुक्तं भवति—यद्याधाकर्मत्वेन शङ्कितं यद् गृह्णानो भुञ्जानो वाऽऽधाकर्मदोषेण सम्बध्यते, यदि पुनरौद्देशिकत्वेन तत औद्देशिकेनेत्यादि, चरमे चतुर्थभङ्गे पुनर्वर्तमानः शुद्धो, न केनापि दोषेण सम्बध्यते इत्यर्थः । इह 'पणवीसा' इत्युक्तं, ततस्तानेव पञ्चविंशतिं दोषानाह—

उग्गमदोसा सोलस आहाकम्माइ एसणादोसा । नव मक्खियाइ एए पणतीसा चरिमए सुद्धो ॥ ५२२ ॥

व्याख्या—आधाकर्मादयः षोडश उद्गमदोषाः, नव च म्रक्षितादय एषणादोषाः, एते मिलिताः पञ्चत्रिंशत्, चरमे तु भङ्गे न ग्रहणे न भोजने इत्येवंरूपे वर्तमानो यतिः शुद्धः, यत इत्थाशुद्धमपि छद्मस्थपरीक्षया निःशङ्कित गृहीत शुद्धं भवतीति । एतदेवोप दर्शयति—

छउमत्थो सुयनाणी उवउत्तो उज्जुओ पयत्तेण । आवन्नो पणवीसं सुयनाणपमाणओ सुद्धो ॥ ५२३ ॥

व्याख्या—छद्मस्थः श्रुतज्ञानी 'ऋजुकः' मायारहितः 'प्रयत्नेन' यथाऽऽगमप्रामाण्येन गवेषयन् पञ्चविंशतेर्दोषाणामन्यतमदोष मापन्नोऽपि 'श्रुतज्ञानप्रमाणतः' आगमप्रामाण्येन शुद्धः । एतमेवार्थं स्पष्टयति—

ओहो सुओवउत्तो सुयनाणी जइवि गिण्हइ असुद्धं । तं केवलीवि भुंजइ अपमाण सुयं भवे इहरा ॥ ५२४ ॥

व्याख्या—'ओहो' इत्यत्र प्रथमा तृतीयार्थे, ततः ओघेन—सामान्येन 'श्रुते' पिण्डनिर्युक्त्यादिरूपे आगमे उपयुक्तः संस्तदनुसारेण कल्प्याकल्प्यं परिभावयन् श्रुतज्ञानी यद्यपि कथमप्यशुद्धं गृह्णाति तथापि तत् 'केवल्यपि' केवलज्ञान्यपि भुङ्क्ते, इतरथा श्रुतज्ञानमप्रमाणं भवेत्, तथाहि—छद्मस्थः श्रुतज्ञानबलेन शुद्धं गवेषयितुमीष्टे, न प्रकारान्तरेण, ततो यदि केवली श्रुतज्ञानिना यथाऽऽगमं गवेषितमप्यशुद्धमितिकृत्वा न भुञ्जीत ततः श्रुतेऽनाश्वासः स्यादिति न कोऽपि श्रुतं प्रमाणत्वेन प्रतिपद्येत, श्रुतज्ञानस्य चाप्रामाण्ये सर्वक्रियाविलोपप्रसङ्गः, श्रुतमन्तरेण छद्मस्थानां क्रियाकलापस्य परिज्ञानासम्भवात् । ततः किम् ? इत्याह—

सुत्तस्स अप्पमाणे चरणाभावो तओ य मोक्खस्स । मोक्खस्सऽविय अभावे दिक्खपवित्ती निरत्था उ ॥५२५॥

व्याख्या—सूत्रस्याप्रामाण्ये 'चरणस्य' चारित्रस्याभावः, श्रुतमन्तरेण यथावत् सावद्येतरविधिप्रतिषेधपरिज्ञानासम्भवात्, चर णाभावे च मोक्षाभावो, मोक्षाभावे च दीक्षा निरर्थिका, तस्या अनन्यार्थत्वात् । सम्प्रति 'ग्रहणे शङ्कितो भोजने चे'त्यस्य प्रथमभङ्गस्य सम्भवमाह—

किंतु(ति)ह खद्धा भिक्खा दिज्जइ न य तरइ पुच्छिउ हिरिमं । इअ सकाए घेत्तुं तं भुंजइ संकिओ चेव ॥५२६॥

व्याख्या—कोऽपि साधुः स्वभावतो लज्जावान् भवति, स च क्वापि गृहे भिक्षार्थं प्रविष्टः सन् प्रचुरां भिक्षां लभमानः स्वचेतसि शङ्कते-किमत्र प्रचुरा भिक्षा दीयते ?, न च लज्जया प्रष्टुं शक्नोति, ततः एव शङ्कया गृहीत्वा शङ्कित एव वङ्क्ते इति प्रथमभङ्गे वर्तते । सम्प्रति 'ग्रहणे शङ्कितो न भोजने' इति द्वितीयस्य भङ्गस्य सम्भवमाह—

हियएण संकिएण गहिआ अन्नेण सोहिया सा य । पगय पहेणग वा सोउ निस्संकिओ भुंजे ॥ ५२७ ॥

व्याख्या—इह केनापि साधुना लज्जादिना प्रागुक्तप्रकारेण प्रथमतः शङ्कितेन हृदयेन या गृहीता भिक्षा साऽन्येन सङ्घाटकेन शोधिता-यथा 'प्रकृतं' प्रकरणं किमपि प्राघूर्णभोजनादिकं, पाचिता प्रहेणकं कृतमिदं यस्मादुद्वारायातामिति, ततो द्वितीयसङ्घाटकपदे तच्छ्रुत्वा यो निःशङ्कितो भुङ्क्ते स द्वितीये भङ्गे वर्तते । तृतीयभङ्गस्य सम्भवमाह—

जारिसए च्चिय लद्धा खद्धा भिक्खा मए अमुयगेहे । अन्नेहिंवि तारिसिया त्रियडत निसामए तइए ॥ ५२८ ॥

व्याख्या—इह कोऽपि साधुर्लब्धमधुरभिक्षाको विकटयतां-गुरोरग्रतः सम्यगालोचयतामालोचनाभवणे सति शङ्कते—पाश्चयेष मया भिक्षा मधुरा लब्धा तास्मयेवान्यैरपि सङ्घाटकैः, तन्नूनमेतदाधाकर्मादिदोषदुष्टं भविष्यतीति भुञ्जानो यतिस्तृतीये भङ्गे वर्तते। अत्र पर आह—

जइ संका दोसकरी एव सुद्धपि होइ अविसुद्ध। निस्सकमेसियति य अणेसणिज्जपि निद्दोस ॥ ५२९ ॥

व्याख्या—यदि शङ्का दोषकरी तत एव सतीनमायात—शुद्धमपि शङ्कितं सत् तदशुद्धं भवति, शङ्कादोषदुष्टत्वात्, तथा अनेषणीयमपि निःशङ्कितमन्वेषित शुद्धं प्राप्नोति, शङ्कारहितत्वात्, न चैवं युक्तं, स्वभावतः शुद्धस्याशुद्धस्य वा शङ्काभावाभावमात्रेणान्यथा कर्तुमशक्यत्वात्। तत्र आचार्य आह—सत्यमेतत्, तथाहि—

अविसुद्धो परिणामो एगयरे अवडिओ य पक्खमि। एसिपि कुणइ णेसिं अणेसिमेसिं विसुद्धो उ ॥ ५३० ॥

व्याख्या—अविशुद्धः 'परिणामः' अध्यवसायः, किं रूपोऽविशुद्धः? इत्याह—एकतरस्मिन्नपि शुद्धमेवेदं भक्तादिकं यदिवाऽशुद्धमेवेत्यन्यतरस्मिन्नपि पक्षेऽवस्थितः 'एसिपि'त्ति एषणीयमपि—शुद्धमपि करोति अनेषणीयम्—अशुद्धं, विशुद्धस्तु परिणामो यथोक्ताऽऽगमविधिना गवेषयतः शुद्धमेवेदमित्यध्यवसायः अनेषणीयमपि—स्वभावतोऽशुद्धमपि शुद्धं करोति, श्रुतज्ञानस्य प्रामाण्यात्, तस्मान्न कश्चित् प्रागुक्तो दोषः। तदेवमुक्तं शङ्कितद्वारम्, अधुना म्रक्षितद्वारमाह—

दुविहं च मक्खियं खलु सच्चित्तं चेव होइ अच्चित्त। सच्चित्त पुण तिविह अच्चित्त होइ दुविह तु ॥ ५३१ ॥

व्याख्या—म्रक्षितं द्विधा, तद्यथा-सचित्तमचित्तं च, सचित्तम्रक्षितमचित्तम्रक्षितं चेत्यर्थः, तत्र यत्सचित्तेन पृथिव्यादिनाऽवगुण्ठितं तत्सचित्तं, यत्पुनरचित्तेन पृथिवीरजःप्रभृतिनाऽवगुण्ठितं तदचित्तं, तत्र 'सचित्तं' सचित्तम्रक्षितं पुनस्त्रिधा। एतदेव व्याख्यानयति—

पुढवी आउ वणस्सइ तिविहं सच्चित्तमक्खियं होइ। अच्चित्त पुण दुविहं गरहियमियरे य भयणा उ ॥५३२॥

व्याख्या—सचित्तम्रक्षितं त्रिधा, तद्यथा-पृथिवीकायम्रक्षितमप्कायम्रक्षितं वनस्पतिकायम्रक्षितं च, सूत्रे च पदैकदेशे पदसमुदायोपचारात् पृथिव्यादिभिरिव पृथिवीत्याद्युक्तम्। अचित्तं-अचित्तम्रक्षितं पुनर्द्विविधं, तद्यथा-गर्हितमितरच्च, तत्र 'गर्हितं' वसादिना म्रक्षितम्, इतरद् घृतादिना, अत्र च कल्प्याकल्प्यविधौ 'भजना' विकल्पना, सा चाग्रे वक्ष्यते। सम्प्रति सचित्तपृथिवीकायम्रक्षितं भावयति—

सुक्केण सरक्खेणं मक्खियं मोल्लेण पुढविकाएण। सव्वंपि मक्खियं तं एत्तो आउंमि वोच्छामि ॥ ५३३ ॥

व्याख्या—इह सचित्तपृथिवीकायो द्विधा, तद्यथा-शुष्क आर्द्रश्च, तत्र शुष्केण सरजस्केनातीव श्लक्ष्णतया भस्मकल्पेन यदेयं पात्रं हस्तो वा म्रक्षितो यच्चार्द्रेण पृथिवीकायेन सचित्तेन म्रक्षितं तत्सर्वं हस्तादि म्रक्षितं-सचित्तपृथिवीकायम्रक्षितमवगन्तव्यं, अत ऊर्ध्वमप्कायविषये म्रक्षितं वक्ष्यामि—

पुरपच्छकम्म ससिणिद्धुदउल्ले चउरो आउभेयाओ।

व्याख्या—अप्काये अप्कायम्रक्षिते चत्वारो भेदाः, तद्यथा पुरःकर्म पश्चात्कर्म सस्निग्धमुदकार्द्रं च, तत्र भक्तादेर्दानात् पूर्वं

परार्थं कर्म हस्तमात्रादेर्भक्तप्रक्षालनार्थं क्रियते तत्पुरःकर्म । यत्पुनर्भक्तादेर्दानात्पश्चात्क्रियते तत्पश्चात्कर्म । साम्प्रतम्—ईषल्लक्ष्यमाणमल्पत्वाद्भिन्न इत्यादि, तदर्थं सप्तोपलभ्यमानसत्वम् । सम्प्रति वनस्पतिकायम्रक्षितं प्रपञ्चयति—

उक्किट्ठरसालित्तं च परित्तऽणंतं महिरुहेसु ॥ ५३४ ॥

व्याख्या—'उत्कृष्टरसानि' मधुररसोपेतानि यानि 'परित्तानां' प्रत्येकवनस्पतीनां चूतफलादीनाम्, अनन्तानाम्—अनन्तकायिकानां च पनसफलादीनां सत्कानि श्लक्ष्णखण्डानि इति सामर्थ्याद्गम्यते, तैः 'आलिप्तं' खरण्टितं पत्रस्थादि, तन्महीरुहेषु, अत्र च तृतीयार्थे सप्तमी, महीरुहैर्म्रक्षितमवसेयं, 'परित्तणंतं' इत्यत्र प्राकृतत्वाद्विभक्तिवचनव्यत्यय इति षष्ठीबहुवचनं व्याख्यातं ।

सेसेहिं काएहिं तीहिवि तेउसमीरणतसेहिं । सच्चित्तं मीसं वा न मक्खितं अत्थि उल्लं वा ॥ ५३५ ॥

व्याख्या—'शेषैस्तेज'समीरणत्रसरूपैस्त्रिभिरपि सचित्तरूपं मिश्ररूपमार्द्ररूपं वा म्रक्षितं न भवति, सचित्तादितेजस्कायादिसंसर्गेऽपि लोके म्रक्षितशब्दप्रवृत्त्यदर्शनात्, अचित्तैस्तु तैर्भस्मादिरूपैः पृथिवीकायेनैव म्रक्षितत्वसम्भव इति न तस्य प्रतिषेधः, वायुकायेन त्वचित्तेनापि न म्रक्षितत्वं घटते, तथा लोके प्रतीत्यभावात् । सम्प्रति सचित्तपृथिवीकायादिम्रक्षिते हस्तमात्रे आश्रित्य भङ्गान् कल्प्याकल्प्यविधिं च प्रतिपादयति—

सच्चित्तमक्खियम्मी हत्थे मत्ते य होइ चउभंगो । आइतिए पडिसेहो चरिमे भंगे अणुन्नाओ ॥ ५३६ ॥

व्याख्या—'सचित्तैः' पृथिवीकायादिभिर्म्रक्षिते हस्ते मात्रे च 'चतुर्भङ्गी' चत्वारो भङ्गाः, सूत्रे च पुंस्त्वनिर्देश आर्षत्वात्,

त च चत्वारो भङ्गा अमी, तद्यथा—हस्तो म्रक्षितो मात्रं च, हस्तो म्रक्षितो न मात्रं, मात्रं म्रक्षितं न हस्त, नापि मात्रं नापि हस्तः तत्राऽऽद्यिमे भङ्गत्रिके प्रतिषेधो, न कल्पते ग्रहीतुमिति भावः, चरमे भङ्गे पुनरनुज्ञातो यतिस्तीर्थकरगणधरैः, तत्र दोषाभावात् । अचित्तम्रक्षितमाश्रित्य कल्प्याकल्प्यविधिमाह—

अच्चित्तमक्खियंमि उ चउसुवि भंगेसु होइ भयणा उ। अगरहिएण उ गहणं पडिसेहो गरहिए होइ ॥५३७॥

व्याख्या—अचित्तम्रक्षितेऽपि हस्तमात्रे अधिकृत्य प्राग्वच्चत्वारो भङ्गाः, तत्र च चतुर्ष्वपि भङ्गेषु 'भजना' विकल्पना, तामेवाह—'अगर्हितेन' लोकानिन्दितेन घृतादिना म्रक्षिते ग्रहणं, गर्हितेन तु वसादिना म्रक्षिते भवति प्रतिषेधः, तथापि चतुर्थो भङ्गः शुद्ध एवेति ग्रहणम् । अगर्हितम्रक्षितमप्यधिकृत्य विशेषमाह—

संसज्जिमेहिं वज्ज अगरहिएहिंपि गोरसदवेहिं । महुघयतेल्लगुलेहि य मा मच्छिपिपीलियाघाओ ॥ ५३८ ॥

व्याख्या—संसक्तिमद्भ्यां तन्मध्यनिपतितजीवयुक्ताभ्यां 'गोरसद्रवाभ्यां' दध्यादिपानकाभ्यामगर्हिताभ्यामपि म्रक्षितं म्रक्षिताभ्यां हस्तमात्राभ्यां वा दीयमानं 'वर्ज्यं' परिहार्यं, न ग्रहीतव्यमित्यर्थः, तथा मधुघृततैलगुडैरगर्हितैरपि म्रक्षितं म्रक्षिताभ्यां वा हस्तमात्राभ्यां दीयमानं वर्ज्यं, कुत इत्याह—'मा मच्छिपिपीलियाघाओ' मा मक्षिकापिपीलिकानाम्, उपलक्षणमेतत्, पतङ्गादीनां पातादिवशतो लग्नानां घातो—विनाशो भूदितिकृत्वा, एतच्चोत्कृष्टानुष्ठानं जिनकल्पिकाद्यधिकृत्योक्तमवसेयं, स्थविरकल्पिकास्तु यथाविधि यतनया घृताद्यपि गुडादिम्रक्षितमल्पलोकपर्यायापि च गृह्णन्ति ॥ सम्प्रति गर्हितागर्हितविशेषमाह—

मसवससोणियासव लोए या गरहिएहिवि वज्जेज्जा । उभओऽवि गरहिएहिं मुत्तुच्चारेहिं छिचंपि ॥ ५३९ ॥

व्याख्या—मांसवसाशोणितासवैः अत्र सूत्रे विभक्तिलोप आर्षत्वात्, लोके गर्हितैरपि, चाशब्दः पूर्वापेक्षया समुच्चये, म्रक्षितं वर्जयेत्, तथा 'उभयस्मिन्नपि' लोके लोकोत्तरे च गर्हिताभ्यां मूत्रोच्चाराभ्यामास्तां म्रक्षितं स्पृष्टमपि वर्जयेत् । उक्तं म्रक्षितद्वारम्, अथ निक्षिप्तद्वारमाह—

सच्चित्त मीसएसु दुविहं काएसु होइ निक्खित्त । एक्केक्कं त दुविहं अणतर परपर चेव ॥ ५४० ॥

व्याख्या—इह कायेषु निक्षिप्तं द्विधा, तद्यथा-'सचित्तेषु' पृथिव्यादिषु मिश्रेषु च । एकैकमपि द्विधा, तद्यथा—अनन्तरं परम्परं च, तत्र 'अनन्तरम्' अव्यवधानेन 'परम्परं' व्यवधानेन, यथा सचित्तपृथिवीकायस्योपरि स्थापनिका तस्या उपरि देय वस्त्विति, इह परिहार्यापरिहार्यविभाग विना सामान्यतो निक्षिप्तं सचित्ताचित्तमिश्ररूपभेदाद्‌त्रिधा, तत्र च प्रत्य(त्रि)चतुर्भङ्ग्यः, तद्यथा—सचित्ते सचित्तं १ मिश्रे सचित्त २ सचित्ते मिश्र ३ मिश्रे मिश्र ४ मित्येका चतुर्भङ्गी, तथा सचित्ते सचित्तम् अचित्ते सचित्तं सचित्तेऽचित्तम् अचित्ते अचित्तमपि द्वितीया चतुर्भङ्गी, तथा मिश्रे मिश्रम् अचित्ते मिश्रं मिश्रेऽचित्तम् अचित्तेऽचित्तमिति तृतीया चतुर्भङ्गी । सम्प्रत्यनन्तरपरम्परविभागमाह—

पुढवी आउक्काए तेऊवाऊवणस्सइतसाण । एक्केक्क दुहाणंतर परपरगणमि सत्तविहा ॥ ५४१ ॥

व्याख्या—पृथिव्यप्तेजोवायुवनस्पतित्रसकायानां सचित्तानां प्रत्येकं सचित्तपृथिव्यादिषु निक्षेपः सम्भवति, तत्र पृथिवीकायस्य

निक्षेपः षोढा, तद्यथा—पृथिवीकायस्य पृथिवीकाये निक्षेप इत्येको भेदः, पृथिवीकायस्याप्काये इति द्वितीयः, पृथिवीकायस्य तेजस्काये इति तृतीयः, वायुकाये इति चतुर्थः, वनस्पतिकाये इति पञ्चमः, त्रसकाये इति षष्ठः । एवमप्कायादीनामपि निक्षेपः प्रत्येकं षोढा भावनीयः, सर्वसङ्ख्यया षट्त्रिंशद्भङ्गाः, एकैकोऽपि च भेदो द्विधा, तद्यथा—अनन्तरः परम्परया च, अनन्तरपरम्परव्याख्यानं च प्रागेव कृतं, केवलमधिकाये पृथिव्यादीनां निक्षेपं सप्तधा, पुनः स्वयमेव वक्ष्यति ॥ सम्प्रति पृथिवीकाये निक्षेपस्य यदुक्तं प्राक् षोढात्वं तत्सूत्रकृत्साक्षाद्दर्शयति—

सच्चित्त पुढविकाए सच्चित्तो चेव पुढविनिक्खित्तो । आउत्तेउवणस्सइसमीरणतसेसु एमेव ॥ ५४२ ॥

व्याख्या—सचित्ते पृथिवीकाये सचित्तः पृथिवीकायो निक्षिप्तः, एवमेव—पृथिवीकाये इत्यातेजोवनस्पतिसमीरणत्रसेषु सचित्त एव पृथिवीकायो निक्षिप्त इति पृथिवीकायनिक्षेपः षोढा । एवं शेषकायेष्वप्यतिदेशमाह—

एमेव सेसयाणवि निक्खेवो होइ जीवकाएसुं । एक्केक्को सट्ठाणे परठाणे पंच पंचेव ॥ ५४३ ॥

व्याख्या—'एवमेव' पृथिवीकायस्येव 'शेषाणाम्' अप्कायादीनां निक्षेपो भवति 'जीवनिकायेषु' पृथिव्यादिषु, तत्रैकैको भङ्गः स्वस्थाने शेषाः पञ्च पञ्च परस्थाने, तथाहि—पृथिवीकायस्य पृथिवीकाये निक्षेपः स्वस्थाने, अप्कायादिषु शेषेषु पञ्चसु परस्थाने, एवमप्कायादीनामपि भावनीयं, ततः स्वस्थाने एकैको भङ्गः, परस्थाने पञ्च पञ्च, तदेवं प्रथमचतुर्भङ्गिकायाः सचित्ते सचित्तमित्येवरूप प्रथमे भङ्गे षट्त्रिंशद्भेदाः ॥ सम्प्रति प्रथमचतुर्भङ्ग्या एव शेषं भङ्गत्रयं द्वितीयतृतीयचतुर्भङ्ग्यो चातिदेशतः प्रतिपादयति—

एमेव मीसएसुवि मीसाण सचेयणेसु निक्खेवो । मीसाण मीसेसु य दोण्हपि य होइऽचित्तेसु ॥ ५४४ ॥

व्याख्या—'एवमेव' सचित्तेषु सचित्तमिव 'मिश्रेष्वपि' मिश्रपृथिव्यादिष्वपि सचित्तपृथिव्यादिनिक्षेपः षड्त्रिंशद्भेदोऽवगन्तव्यः, एतेन प्रथमचतुर्भङ्ग्या द्वितीयो भङ्गो व्याख्यातः, तथा एवमेव सचेतनेषु-सचित्तपृथिव्यादिषु मिश्राणां पृथिव्यादीनां निक्षेप षड्त्रिंशद्भेदः, एतेन प्रथमचतुर्भङ्ग्यास्तृतीयो भङ्गो व्याख्यातः, एवमेव मिश्राणां पृथिव्यादीनां मिश्रेषु पृथिव्यादिषु निक्षेपः षड्त्रिंशद्भेदः, अनेन प्रथमचतुर्भङ्ग्याश्चतुर्थो भङ्गो व्याख्यातः, सर्वसङ्ख्यया प्रथमचतुर्भङ्ग्यां चतुश्चत्वारिंशं भङ्गशतम्, एवमेव द्वयोरपि सचित्तमिश्रयोरचित्तेषु निक्षिप्यमाणयोर्ये द्वे चतुर्भङ्ग्यौ भाव्ये, तत्रापि प्रत्येकं चतुश्चत्वारिंशं भङ्गशतं भवति, सर्वसङ्ख्यया भङ्गानां शतानि चत्वारि द्वात्रिंशदधिकानि भवन्ति, उक्ता निक्षेपस्य भेदाः । सम्प्रत्यस्यैव निक्षेपस्य पूर्वोक्तं चतुर्भङ्गीत्रयमधिकृत्य कल्प्याकल्प्यविधिमाह—

जत्थ उ सचित्तमीसे चउभंगो तत्थ चउसुवि अगिज्झं । तं तु अणंतर इयरं परित्तऽणंतं च वणकाए ॥ ५४५ ॥

व्याख्या—यत्र निक्षेपे सचित्तमिश्रे आश्रित्य चतुर्भङ्गी भवति, प्रथमा चतुर्भङ्गी भवतीत्यर्थः, तत्र चतुर्ष्वपि भङ्गेषु अपिशब्दाद् द्वितीयतृतीयचतुर्भङ्ग्योरप्याद्येषु त्रिषु भङ्गेषु वर्तमानमनन्तरं परम्परं च वनस्पतिविषये प्रत्येकमनन्तं वा वस्त्वग्राह्यं, सामर्थ्याद् द्वितीयतृतीयचतुर्भङ्ग्योश्चतुर्थे भङ्गे वर्तमानं ग्राह्यं, तत्र दोषाभावात् । सम्प्रति सचित्तादित्रिभिरपि पदान्तरेणैकामेव चतुर्भङ्गीं कल्प्याकल्प्यविधिं च प्रदर्शयति—

अहव ण सचित्तमीसो उ एगओ एगओ उ अच्चित्तो । एत्थं चउक्कभेओ तत्थाइतिए कहा नत्थि ॥ ५४६ ॥

व्याख्या—'अथवे'ति प्रकारान्तरद्योतकः, ओति पादपूरणे, इह चतुर्भङ्गी प्रतिपक्षपदोपन्यासे भवति, तत्रैकस्मिन् पक्ष सचित्तमिश्रे, एकत्र तु पक्षेऽचित्त, ततः प्राक्तनक्रमेण चतुर्भङ्गी भवति, तद्यथा—सचित्ते सचित्तमिश्रम्, अचित्ते सचित्तमिश्रं, सचित्तमिश्रेऽचित्तम्, अचित्तेऽचित्तमिति, अत्रापि मार्गितेऽेकस्मिन् भङ्गे पृथिव्यप्तेजोवायुवनस्पतित्रसभेदात् षट्त्रिंशत् षट्त्रिंशद्भेदाः, सर्वसङ्ख्यया चतुश्चत्वारिंशं शतम्, तत्र 'आदिमिके' आदिमे भङ्गत्रये 'कथा नास्ति' ग्रहणे वार्त्ता न विद्यते, सामर्थ्याच्चतुर्थे भङ्गे कथ्यते ॥ तदेवं 'पृथिवी'त्यादिमूलगाथाया पूर्वार्द्धं व्याख्यातं, सम्प्रति 'एकेक्कि दुयारंतरम्' इत्यवयवं व्याचिख्यासुर्द्वितीयतृतीयचतुर्थ भङ्गयोः सत्कस्य तृतीयस्य तृतीयस्य भङ्गस्य सामान्यतोऽभ्युक्तस्य विषये विशेषं बिभणिषुरनन्तरपरम्परमार्गणां करोति—

जं पुण अचित्त दव्वं निक्खिप्पइ चेयणेसु मीसेसु। तहिं मग्गणा उ इणमो अणंतरपरंपरा होइ ॥ ५४७ ॥

व्याख्या—यत्किमपि अचित्त द्रव्यमोदनादि 'चेतनेषु' सचित्तेषु मिश्रेषु वा निक्षिप्यते तत्रेयमनन्तरं परम्परया वा मार्गणा परिभावनं भवति। तदेवाह—

ओगाहिमायणंतर परंपर पिढरगाइ पुढवीए। नवणीयाइ अणंतर परंपर नावमाईसु ॥ ५४८ ॥

व्याख्या—'अवगाहिमादि' पक्वान्नमण्डकप्रभृति पृथिव्यामानन्तर्येण स्थापितमनन्तरनिक्षिप्तं, पृथिव्या एवोपरि स्थिते पिठरकादौ पक्षिप्तमवगाहिमादि तत्परम्परनिक्षिप्तं, एष पृथिवीकायमाश्रित्यानन्तरपरम्परया निक्षेप उक्तः। सम्प्रत्यप्कायमाश्रित्याह—'नवणी' त्यादि, नवनीतादि—म्रक्षणस्त्यानीभूतघृतादि सचित्तादिरूपे उदके निक्षिप्तमनन्तरनिक्षिप्तं, तदेव नवनीतावगाहिमादि वा प्रक्षमत्स्यस्थि-

तेषु नापादिषु स्थितं परम्परनिक्षिप्तम् । सम्प्रति तेजःकायमधिकृत्यानन्तरपरम्परे व्याख्यानयन् 'अगणिंमि सत्तविहो' इत्यक्षपदं व्याख्यानयति—

विज्झायमुम्मुरिंगालमेव अप्पत्तपत्तसमजाले । वोक्कंते सत्तचुग जंतोलित्ते य जयणाए ॥ ५४९ ॥

व्याख्या—इह सप्तधा वह्निः, तद्यथा-विध्यातो मुर्मुरोऽङ्गारोऽप्राप्त' प्राप्तः समज्वालो व्युत्क्रान्तश्च । तत्र यः स्पष्टतया प्रथमं नोपलभ्यते पश्चात्त्विन्धनप्रक्षेपे प्रवर्द्धमान' स्पष्टमुपलभ्यते स विध्यातः, आपिङ्गला अर्धविध्याता अग्निकणा मुर्मुरः, ज्वालारहितो वह्निरङ्गारः, य पुनश्चुल्ल्या उपरि स्थापितं पिठरं ज्वालाभिर्न प्राप्नोति सोऽप्राप्तः, य पुनर्ज्वालाभि' पिठरं बुध्ने स्पृशति स प्राप्तः, यः पुनः पिठरस्य बुध्नादूर्ध्वमपि यावत्कर्णौ ज्वालाभिः स्पृशति स समज्वालः, यस्य पुनर्ज्वालाः पिठरकर्णाभ्यामूर्ध्वमपि गच्छन्ति स व्युत्क्रान्तः, एवं सप्त भेदास्तेज'कायस्य, तत्रैकैकस्मिन् भेदे द्विकं, तद्यथा-अनन्तरनिक्षिप्तं परम्परनिक्षिप्तं च, तत्र यद्विध्यातादिरूपे वह्नौ मण्डकादि निक्षिप्तं तदनन्तरनिक्षिप्तं, यत्पुनरग्नेरुपरि स्थापिते पिठरादौ निक्षिप्तं तत्परम्परनिक्षिप्तं, तत्र सप्तानां भेदानां मध्ये यमेव तमेव वा भेदमधिकृत्य 'यन्त्रे' इक्षुरसपाकस्थाने कटाहादौ 'प्रवलिप्ते' मृत्तिकावलिप्ते यतनया परिशाटिपरिहारेण अशणमिक्षुरसस्य कल्पते । सम्प्रत्येनामेव गाथां व्याख्यानयन् प्रथमतो विध्यातादीनां स्वरूप गाथाद्वयेनाह—

विज्झाउत्ति न दीसइ अग्गी दीसेइ इंधणे छूढे । आपिंगल अगणिकणा मुम्मुर निज्जाल इंगाले ॥ ५५० ॥

अप्पत्ता उ चउत्थे जाला पिठर तु पचमे पत्ता । छट्ठे पुण कण्णसमा जाला समइच्छिया चरिमे ॥ ५५१ ॥

व्याख्या—सुगमं । नवरम् 'अण्णधा उ चउत्थे जाला' इति चतुर्थेऽप्याताख्ये भेदे पिठरमाला ज्वाला द्रष्टव्या, एवमन्यत्राप्यस्य गमनिका कार्या । सम्प्रति 'सतोलित्ते य जयणाए' इत्यवयवं व्याचिख्यासुराह—

पासोलित्त कडाहे परिसाडी नत्थि तंपि य विसाल । सोवि य अचिरच्छूढो उच्छुरसो नाइउसिणो य ॥५५२॥

व्याख्या—इह यदीति सर्वत्राप्याहियते, यदि कटाह—पिठरविशेषः सर्वतः पार्श्वेषु मृत्तिकयाऽवलिप्तो भवति दीयमाने चेक्षुरसे यदि परिशाटिर्नोपजायते तदपि च कटाहरूपं भाजनं यदि 'विशालं' विशालमुखं भवति, सोऽपि चेक्षुरसोऽचिरक्षिप्त इतिकृत्वा यदि नात्युष्णो भवति तदा स दीयमान इक्षुरसः कल्पते, इह यदि दीयमानस्येक्षुरसस्य कथमपि बिन्दुर्बहिः पतति तर्हि स लेप एवावतिष्ठते, न तु चुल्लीमध्यस्थिततेजस्कायमध्ये पतति ततः पार्श्वावलिप्त इति कटाहस्य विशेषणमुक्तं, तथा विशालमुखात्समाकृष्यमाण उदञ्चनः पिठरस्य कर्णे न लगति ततो न पिठरस्य भङ्ग इति न तेजःकायविराधनेति विशालग्रहणम्, अनत्युष्णग्रहणे तु कारणं स्वयमेव वक्ष्यति । सम्प्रत्युदकमधिकृत्य विशेषमाह—

उसिणोदगंपि घेप्पइ गुडरसपरिणामियं अणच्चुसिण । जं च अघट्टियकन्नं घट्टियपडणंमि मा अग्गी ॥ ५५३ ॥

व्याख्या—उष्णोदकमपि गुडरसपरिणामितमनत्युष्णं गृह्यते, किमुक्तं भवति ?—यत्र कटाहे गुडः पूर्वं क्वथितो भवति, तस्मिन्भिन्नं भल्मीपक्षमपि कटाहसंसक्तगुडरसमिश्रणात् सस्वरमचित्तीभवति, ततस्तदनत्युष्णमपि कल्पते, अत्रापि पार्श्वावलिप्तकटाहस्थितमपरिशाटिमदेति विशेषणद्वयमनुपात्तमपि द्रष्टव्यं, तथा 'अघट्टितकर्णं' न यस्मिन् दीयमाने पिठरस्य कर्णावुदञ्चनेन प्रविशता निर्गच्छता

वा पक्षेपेते दीयमान कल्पते, तत इत्याह—' घट्टियपडणंमि वा अग्गी ' इत्यनेन प्रदिस्सता निर्गच्छता वा पिठरस्य कर्णयोर्घट्टयमानयो र्लेपस्योद्गतस्य वा पतनेन माऽग्निर्विराध्यतेतिकृत्वा, एतेन च वक्ष्यमाणषोडशभङ्गानामाद्यो भङ्गो दर्शित । सम्प्रति तानेव षोडश भ ङ्गान् दर्शयति—

पासोलित्तकडाहेऽनच्चुसिणे अपरिसाडऽघट्टंते । सोलसभंगविगप्पा पढमेऽणुन्ना न सेसेसु ॥ ५५४ ॥

व्याख्या—पार्श्वावलिप्त कटाह, अनत्युष्णो दीयमान इक्षुरसादिः, अपरिशाटिः परिशाटयभावः, ' अघट्टंते ' इति चत्स्वनेन पिठरकर्णाघट्टने, इत्यमूनि चत्वारि पदान्यधिकृत्य षोडश भङ्गा भवन्ति । भङ्गानां चानयनार्थमियं गाथा—

पयसमदुगअब्भासे माण भगाण तेसिमा रयणा । एगतरिय लहुगुरु दुगुणा दुगुणा य वामेसु ॥ ५५५ ॥

अस्या व्याख्या—इह यावतां पदानां भङ्गा आनेतुमिष्यन्ते तावन्तो द्विका ऊर्ध्वाधःक्रमेण स्थाप्यन्ते, ततस्तेषामभ्यासे सति यदन्तिमे द्विके समागच्छति तद्भङ्गानां ' मानं ' प्रमाणं, तथाहि—इह चतुर्णां पदानां भङ्गा आनेतुमिष्टास्ततश्चत्वारो द्विका ऊर्ध्वाधःक्रमेण स्थाप्यन्ते, ततः प्रथमो द्विको द्वितीयेन द्विकेन गुण्यते, जाताश्चत्वार., तैस्तृतीयो द्विको गुण्यते जाता अष्टौ, तैरपि चतुर्थो द्विको गुण्यते, जाताः षोडश, एतावन्तश्चतुर्णां पदानां भङ्गा भवन्ति, तेषां च पुनर्भङ्गानामेषा रचना, प्रथमपङ्क्तावेकान्तरितं लघुगुरु, प्रथमं लघु ततो गुरु, पुनर्लघु पुनर्गुरु, एवं यावत् षोडशो भङ्गः, तत प्रथमपङ्क्त्यपेक्षया ' वामेसु ' वामपार्श्वेषु द्विगुणद्विगुणा लघुगुरवः, तद्यथा—द्वितीयपङ्क्तौ प्रथमं द्वौ लघू ततो द्वौ गुरू ततो भूयोऽपि द्वौ लघू एवं यावत्षोडशो भङ्गः, तृतीयपङ्क्तौ प्रथमं चत्वारो लघवः, ततश्चत्वारो गुरवः,

स्य. पुनरथमत्वारो छ्यस्तवमत्वारो गुरवः, षड्विंशपङ्क्त्यां प्रथममष्टौ लघवस्ततोऽष्टौ गुरवः । स्थापना चेयम्—।।।। ।।ऽ ।।ऽ। ।।ऽऽ ।ऽ।। ।ऽ।ऽ ।ऽऽ। ।ऽऽऽ ऽ।।। ऽ।।ऽ ऽ।ऽ। ऽ।ऽऽ ऽऽ।। ऽऽ।ऽ ऽऽऽ। ऽऽऽऽ अत्र प्रथमः भंगः शुद्धो वक्ष्यमाणशुद्ध्या, इह षोडशानां मध्ये नाद्ये भङ्गेऽनुज्ञा, न शेषेषु पञ्चदशसु भङ्गेषु । सम्प्रत्यत्युष्णग्रहणे दोषानाह—

मुविहविराहण उसिणे छड्डण हाणी य भाणभेओ य ।

व्याख्या—'उष्णे' अत्युष्णे इक्षुरसादौ दीयमाने द्विधा विराधना, आत्मविराधना परविराधना च, तथाहि—यस्मिन् भाजने तदत्युष्णं गृह्णाति तेन तप्तं सत्ताज्जन् हस्तेन साधुर्दहन् दह्यते इत्यात्मविराधना । येनापि स्थापितेन स्थानेन सा दात्री ददाति तेनाप्य त्युष्णेन सा दह्यत इति । तथा 'छड्डणे हाणी य' त्ति अत्युष्णमिक्षुरसादि कष्टेन दात्री दातुं शक्नोति, कष्टेन च दाने कथमपि साधु सत्कभाजनात्परिक्षिप्ते हानिर्दीयमानस्येक्षुरसादेः, तथा 'भाणभेओ' इति तस्य भाजनस्य साधुना वसवाचानपनापोत्पादितस्य पतद्गृहस्य दात्र्या वा दानापोत्पादितस्योष्णनस्य गण्डरिकस्यात्युष्णतया झगिति भूमौ मोचने भङ्गः स्यात्, तथा च षड्जीवनिकायविराधनेति संयमविराधना । सम्प्रति वातकायमधिकृत्यानन्तरपरम्परे दर्शयति—

वाउक्खित्ताणंतरपरंपरा पप्पडिय वत्थी ॥ ५५९ ॥

व्याख्या—'वातोत्क्षिप्ताः' समीरणोत्पादिताः 'पर्पटिकाः' शालिपर्पटिका अनन्तरनिक्षिप्ता, परम्परनिक्षिप्तं 'वत्थि' त्ति त्रिमिकोपायस्तो, उपलक्षणमेतत्, समीरणापूरितवस्तिदृतिप्रभृतिबस्थितं मण्डकादि । सम्प्रति सचित्तमिश्रभेदभिन्नं द्विविधमपि निक्षिप्तमाह—

हरियाइअणंतरिया परंपरं पिढरगाइसु वणम्मि । पूयाइ पिट्ठणतर भरए कुडगाइसू इयरा ॥ ५५७ ॥

व्याख्या—'वने' वनस्पतिविषये 'अनन्तरनिक्षिप्तं' हरितादिषु सचित्तव्रीहिकाप्रसृतिषु अनन्तरिता निक्षिप्ता अपूपादय इति ज्ञेय, हरितादीनामेवोपरि स्थितेषु पिठरादिषु निक्षिप्ता अपूपादयः परम्परनिक्षिप्तं, तथा व्रीहिसोयीनां पृष्ठेऽनन्तरनिक्षिप्ता अपूपादयस्तसे-ऽनन्तरनिक्षिप्तं, व्रीहिसर्वादिपृष्ठ एव भरके कुतुपादिषु वा भाजनेषु निक्षिप्ता मोदकादय परम्परनिक्षिप्तम् । इह सर्वत्रानन्तरनिक्षिप्त न ग्राह्यं, सचित्तसङ्घट्टनादिदोषसम्भवात्, परम्परनिक्षिप्तं तु सचित्तसङ्घट्टनादिपरिहारेण यतनया ग्राह्यमिति सम्प्रदायः । उक्तं निक्षिप्त-रम्, अथ पिहितद्वारमाह—

सच्चित्ते अच्चित्ते मीसग पिहियम्मि होइ चउभंगो । आइतिगे पडिसेहो चरिमे भंगम्मि भयणा उ ॥ ५५८ ॥

व्याख्या—इह 'सचित्ते' इत्यादौ सप्तमी तृतीयार्थे, ततोऽयमर्थः—सचित्तेनाचित्तेन मिश्रेण वा पिहिते चतुर्भङ्गी भवति, अत्र जात्यपेक्षमवचनं, तेन तिस्रश्चतुर्भङ्गयो भवन्तीति द्रष्टव्यं, तत्रैका सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, तृतीया मिश्राचित्तप-दाभ्यां, तत्र सचित्तेन सचित्तं पिहितं, मिश्रेण सचित्तं, सचित्तेन मिश्रं, मिश्रेण मिश्रमिति प्रथमा चतुर्भङ्गी, तथा सचित्तेन सचित्तं पिहितम्, अचित्तेन सचित्तं, सचित्तेनाचित्तम्, अचित्तेनाचित्तमिति द्वितीया चतुर्भङ्गी, तथा मिश्रेण मिश्रं पिहितं, मिश्रेणाचित्तम्, अचित्तेन मिश्रम्, अचित्तेनाचित्तमिति तृतीया । तत्र गाथापर्यन्तवर्तिचशब्दवचनात् प्रथमचतुर्भङ्ग्यां सर्वेष्वपि भङ्गेषु न कल्पते, द्वितीयतृतीययश्चतुर्भङ्गिकयोस्तु प्रत्येकमादिमेषु त्रिषु भङ्गेषु न कल्पते इत्यर्थः, चरमे तु भङ्गे भजना, सा च 'गुरुगुरुणे' इत्यादिना स्वयमेव वक्ष्यति । सम्प्रति चतुर्भङ्गीत्रयविषयावान्तरभङ्गकथनेऽतिदेशमाह—

जह चेव उ निक्खित्ते संजोगा चेव होंति भंगा य । एमेव य पिहियम्मिवि नाणत्तमिणं तइयभंगे ॥ ५५९ ॥

व्याख्या—यथैव 'निक्षिप्त' इति निक्षिप्तद्वारे सचित्ताचित्तमिश्राणां संयोगा' आगुक्ताः यथैव च सचित्तपृथिवीकायः सचित्तपृथिवीकायस्योपरि निक्षिप्त इत्येवं स्वस्थानपरस्थानापेक्षया चतुर्भङ्गीत्रयभङ्गेष्वेकैकस्मिन् भङ्गे षट्त्रिंशत् षट्त्रिंशद्भेदा उक्ताः, सर्वसङ्ख्यया चत्वारि शतानि द्वात्रिंशदधिकानि, तथाऽत्रापि पिहितद्वारे द्रष्टव्याः, तथाहि—मार्गितात्रापि चतुर्भङ्गीत्रयम्, एकैकस्मिंश्च भङ्गे सचित्तः पृथिवीकायः सचित्तपृथिवीकायेन पिहित इत्यादिरूपतया स्वस्थानपरस्थाने भविष्यन्ति षट्त्रिंशत् षट्त्रिंशद्भेदा', सर्वसङ्ख्यया ( शतानि ) चत्वारि द्वात्रिंशदधिकानि भङ्गानां । नवरं द्वितीयतृतीयचतुर्भङ्गयोः प्रत्येकं तृतीये भङ्गेऽनन्तरपरम्परमार्गेणविधौ निक्षिप्तद्वारादिदं—वक्ष्यमाणं नानात्वमवसेयं, निक्षिप्तेऽन्येन प्रकारेणानन्तरपरम्परमार्गणा कृता अत्र त्वन्येन प्रकारेण करिष्यते इति भावः । तत्र सचित्तपृथिवीकायेनानन्तरं मण्डकादि सचित्तपृथिवीकायानन्तरपिहितं, सचित्तपृथिवीकायगर्भपिठरादिपिहितं सचित्तपृथिवीकायपरम्परपिहितं, तथा हिमादिना ऽनन्तरं मोदकादि सचित्ताप्कायानन्तरपिहितं हिमादिगर्भपिठरादिना पिहितं सचित्ताप्कायपरम्परपिहितं । सचित्ततेजस्कायादिविषयमनन्तरं परम्परं च गाथाद्वयेनाह—

अंगारधूवियाई अणन्तरो संतरो सरावाई । तत्थेव अइर वाऊ परंपर वत्थिणा पिहिए ॥ ५६० ॥

अइरं फलाइपिहितं वणमि इयरं तु छब्बपिठराई । कच्छवसचाराई अणंतराणंतरे छट्ठे ॥ ५६१ ॥

व्याख्या—इह यदा स्थाल्यादौ संस्वेदिमादीनां मध्येऽङ्गारं स्थापयित्वा हिङ्ग्वादिना धूमो दीयते तदा तेनाङ्गारेण केषाञ्चि

त्तस्यन्दिमादीनां सस्पर्शोऽस्तीति सा अनन्तरपिहिता, आदिशब्दाद्घनकाठिके मुर्मुरादिविक्षिप्तमनन्तरपिहितमवगन्तव्यम्, अङ्गारभूतेन वाष्पादिना स्थगित पिठरादि परम्परपिहितं । तथा 'तमेव' अङ्गारभूपितादौ 'अहर'त्ति अतिरोहितमनन्तरपिहितं वायोर्द्रष्टव्यं, 'यथा प्रिस्तम वायु'रिति वचनात्, समीरणभृतेन तु बस्तिना, उपलक्षणमेतत्, बस्तिदृतिप्रभृतिना पिहितं परम्परपिहितमवसेयं । तथा 'घने' वनस्पतिकायविषये फलादिना 'अहर'त्ति अतिरोहितेन पिहितमनन्तरपिहितं, 'छब्बपिठरादौ' छब्बकस्यास्यादौ स्थितेन फलादिना पिहितम् 'इयरं'ति परम्परपिहितं । तथा 'तसे' त्रसकायविषये कच्छपेन सञ्चारादिना च-कीटिकापङ्क्त्यादिना पिहितं तदनन्तरपिहितं, कच्छपसञ्चारादिगर्भपिठरादिना पिहितं परम्परपिहितम्, इहानन्तरपिहितमकल्प्यं, परम्परपिहितं तु यतनया ग्राह्यं । यदुक्तं–'चरमे भंगमि भयणा उ' इति, द्वारस्थानपमाह–

गुरु गुरुणा गुरु लहुणा लहुय गुरुएण दोऽवि लहुयाइं । अचित्तेणवि पिहिए चउभंगो दोसु अग्गेज्झ ॥ ५६२ ॥

व्याख्या–'अचित्तेनापि' अचित्ते देये वस्तुनि पिहिते 'चतुर्भङ्गी' चत्वारो भङ्गाः, तद्यथा–गुरु गुरुणा पिहितमित्येको भङ्गः, गुरु लघुनेति द्वितीयः, लघु गुरुणेति तृतीयः, 'दोवि लहुयाइं'ति लघु लघुना पिहितमिति चतुर्थः । एतेषु च चतुर्षु भङ्गेषु मध्ये द्वयोः प्रथमतृतीययोर्भङ्गयोरग्राह्य, गुरुद्रव्यस्योत्पाटने कथमपि तस्य पाते पादादिभङ्गसम्भवात्, अतः पारिशेष्याद् द्वितीयचतुर्थयोर्ग्राह्यमुक्तदोषाभावात, देयवस्त्वाधारस्य पिठरादेर्गुरुत्वेऽपि ततः करोटिकादिना दानसम्भवात् । उक्तं पिहितद्वारम्, अथ संहृतद्वारमाह–

सच्चित्ते अच्चित्ते मीसग साहारणे य चउभंगो । आइतिए पडिसेहो चरिमे भंगमि भयणा उ ॥ ५६३ ॥

व्याख्या—दा येन मात्रकेण कृत्वा भक्तादिकं दातुमिच्छति दात्री तत्रान्यददातव्यं किमपि सचित्तमचित्तं मिश्रं वाऽस्ति तत्स-दन्यत्र भूम्यादौ क्षिप्त्वा तेनान्यद्ददाति, तच्च कदाचित्सचित्तेषु पृथिव्यादिषु मध्ये क्षिपति कदाचिदचित्तेषु कदाचिन्मिश्रेषु, क्षेपणं च संहरणमुच्यते, ततः संहरणे सचित्ताचित्ताधिकृत्य चतुर्भङ्गी, अत्र जातावेकवचनं, तिस्रश्चतुर्भङ्ग्यो भवन्तीत्यर्थः, तथाहि—एका—चतुर्भङ्गी सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, मिश्राचित्तपदाभ्यां तृतीयेति, तत्र सचित्ते सचित्तं संहृतं मिश्रे सचित्तं सचित्ते मिश्रं मिश्रे मिश्रमिति प्रथमा चतुर्भङ्गी, तथा सचित्ते सचित्तं संहृतम्, अचित्ते सचित्त, सचित्तेऽचित्तम्, अचित्तेऽचित्तमिति द्वितीया, तथा मिश्रे मिश्रं संहृतम्, अचित्ते मिश्रं, मिश्रेऽचित्तम्, अचित्तेऽचित्तमिति तृतीया। अत्र गाथापर्यन्ततुशब्दसामर्थ्यात्प्रथमचतुर्भङ्गीकायाः सर्वेष्वपि भङ्गेषु प्रतिषेधः, द्वितीयतृतीयचतुर्भङ्गीकयोस्तु 'आदिमिके' आदिमेषु त्रिषु त्रिषु भङ्गेषु प्रतिषेधः, चरमे भजना। अधुना चतुर्भङ्गीप्रपसत्कावान्तरभङ्गकथनेऽतिदेशमाह—

जह चेव उ निक्खित्ते संजोगा चेव होंति भंगा य। तह चेव उ साहरणे नाणत्तमिणं तइयभंगे ॥ ५६४ ॥

व्याख्या—यथैव 'निक्षिप्ते' निक्षिप्तद्वारे सचित्ताचित्तमिश्रपदानां संयोगाः कृताः, यथैव च सचित्तपृथिवीकायः सचित्तपृथिवीकायस्योपरि निक्षिप्त इत्येवं स्वस्थानपरस्थानापेक्षया चतुर्भङ्गीप्रथमभङ्गेष्वेकैकस्मिन् भङ्गे षट्त्रिंशत् षट्त्रिंशद्भङ्गा उक्ताः, सर्वसङ्ख्यया चत्वारि शतानि द्वात्रिंशदधिकानि भङ्गानां, तथाऽत्रापि संहरणद्वारे द्रष्टव्या, तथाहि—आगिचाभावि चतुर्भङ्गीप्रथमैकैकस्मिन् भङ्गे सचित्तः पृथिवीकायः सचित्तपृथिवीकायमध्ये संहृत इत्यादिरूपतया स्वस्थानपरस्थाने अधिकृत्य षट्त्रिंशत् षट्त्रिंशद्भङ्गाः, सर्वसङ्ख्यया भङ्गानां चत्वारि शतानि द्वात्रिंशदधिकानि। नवरं द्वितीयतृतीयचतुर्भङ्गिकयोः प्रत्येकं तृतीये तृतीये भङ्गेऽनन्तरपरम्परमार्गणाविधौ निक्षिप्तद्वारादिह वक्ष्यमाण

नानात्मवरोयं, निक्षिप्तद्वारेऽन्येन प्रकारेणानन्तरपरम्परमार्गणा कृता मम तु संहृतद्वारेऽन्यथा करिष्यते इति भावः । तदेवान्यथात्वं दर्शयन् संहरणलक्षणमाह—

मत्तेण जेण दाहिइ तत्थ अदिज्जं तु होज्ज असणाई । छोढु तयन्नहिं तेण देई अह होइ साहरणं ॥५९५॥

व्याख्या—येन मात्रकेण दास्यति दात्री तत्रादेयं किमप्यस्ति 'अशनादिकं' भक्तादि सचित्तपृथिवीकायादिकं वा, ततस्तद् 'अदेयम्' अन्यत्र स्थानान्तरे क्षिप्त्वा ददाति 'अह'त्ति एतत्संहरणं, तत्र एतल्लक्षणानुसारेणानन्तरपरम्परमार्गणा अनुसरणीया, तद्यथा—सचित्तपृथिवीकायमध्ये यदा संहरति तदाऽनन्तरसचित्तपृथिवीकायसंहृतं, यदा तु सचित्तपृथिवीकायस्योपरि स्थिते पिठरादौ संहरति तदा परम्परया सचित्तपृथिवीकाये संहृतम् । एवमप्कायादिष्वपि भावनीयम् । अनन्तरसंहृते न ग्राह्यं, परम्परासंहृते सचित्तपृथिवीकायाद्यसङ्घट्टने ग्राह्यमिति । सम्प्रति द्वितीयतृतीयचतुर्भङ्गीसत्क तृतीय तृतीय भङ्गमाश्रित्य येषु वस्तुषु मात्रकस्थितमदेयं वस्तु संहरति तान्युपदर्शयति—

भूमाइएसु तं पुण साहरणं होइ छसुवि काएसु । जं तं दुहा अचित्तं साहरणं तत्थ चउभंगो ॥ ५९६ ॥

व्याख्या—तत्पुनर्मात्रकस्थितस्यादेयस्य वस्तुनः संहरणम् 'भूम्यादिकेषु' सचित्तपृथिवीकायादिषु षट्सु जीवनिकायेषु 'भवति' जायते, तत्र चानन्तरोक्तमनन्तरपरम्परामार्गणमवधार्यम्, अनन्तरोक्त एव च कल्प्याकल्प्यविधिरवधारणीयः, तथा यत्संहरणं द्विधाऽपि आधारापेक्षया संह्रियमाणापेक्षया च अचित्तमचित्ते यत्संह्रियते इत्यर्थः, तत्र 'चतुर्भङ्गी' चत्वारो भङ्गाः । तानेवाह—

सुक्के सुक्कं पढमो सुक्के उल्लं तु बिइयओ भंगो । उल्ले सुक्कं तइओ उल्ले उल्लं चउत्थो उ ॥ ५९७ ॥

व्याख्या—शुष्के शुष्कं संहृतमिति प्रथमो भङ्गः, शुष्के आर्द्रमिति द्वितीयः, आर्द्रे शुष्कमिति तृतीयः, आर्द्रे आर्द्रमिति चतुर्थः—

एक्केक्के चउभंगो सुक्काईएसु चउसु भंगेसु। थोवे थोवं थोवे बहु च विवरीय दो अन्ने ॥ ५६८ ॥

व्याख्या—(शुष्कादिषु) शुष्के शुष्कं संहृतमित्यादिषु चतुर्ष्वपि भङ्गेषु मध्ये एकैकस्मिन् भङ्गे चतुर्भङ्गी, तथथा—स्तोके शुष्के स्तोकं शुष्कं, स्तोके शुष्के बहु शुष्कं, 'विवरीय दो अन्ने' त्ति एतद्विपरीतौ द्वौ अन्यौ भङ्गौ ग्राह्यौ, तथथा—शुष्के बहुके स्तोकं शुष्कं, बहुके शुष्के बहु शुष्कमिति, एवं शुष्के आर्द्रमित्यादिष्वपि त्रिषु भङ्गेषु स्तोके स्तोकमित्यादिरूपा चतुर्भङ्गी प्रत्येकं भावनीया, सर्वसंख्यया षोडश भङ्गाः। अथ कल्प्याकल्प्यविधिमाह—

जत्थ उ थोवे थोवं सुक्के उल्लं च छुहइ तं भम्मं (गेज्झं)। जइ त तु समुक्खेउं थोवाधारं दलइ अन्नं ॥५६९॥

व्याख्या—यत्र तु भङ्गे स्तोके शुष्कमार्द्रके च संहृतं भवति तदपि शुष्के शुष्कं कल्पते एव, अथवा शुष्के आर्द्रं भाजनगतादार्द्रं शुष्कमार्द्रं आर्द्रं वा यदा ददाति, न शेषं, कुतः? इत्याह—'जइ' इत्यादि, यदि तदादेयं वस्तु 'स्तोकाधारं' बहुभाररहितमन्यत्र समुत्क्षिप्यान्यद्दाति तर्हि तत्कल्पते नान्यथा। बहुकं च संक्षिप्यमाणं बहुभारं भवति, तत शुष्के शुष्कमित्यादिषु चतुर्ष्वपि भङ्गेषु प्रत्येकं स्तोके स्तोकं बहुके स्तोकमिति प्रथमतृतीयभङ्गौ कल्पेते, न द्वितीयचतुर्थौ। अथ दोषानाह—

उक्खेवे निक्खिवणे महल्लभाणमि लुद्ध वह डाहो। अचियत्त वोच्छेओ छक्कायवहो य गुरुमत्ते ॥ ५७० ॥

व्याख्या—'महति भाजने' प्रभूताद्येयवस्तुभारयुक्ते गुरुभाजनरूपे 'उत्क्षेपे' उत्पाट्यमाने 'निक्षेपे' निक्षिप्यमाणे दात्र्याः

पीडा भवति, यथा दुग्धोऽय न परपीडां गणयतीति निन्दा, यथा तत्रागमने कदाचिदुष्णभक्तादिस्थं स्थापतस्तस्योत्पाटने कथमपि तस्य 'घपे' विनाशे दाम्याः साधोर्वा दाहः स्यात्, यथा मुण्डस्य भिक्षादानायोत्पाटितमिदं ममाभिस्येवं स्वैरवशवः कदाचिदमीतिरुपनायते, स्वस्त्वन्यान्यद्रव्यस्य चेष्टा, यथा महति भाजने मध्ये तन्मध्यस्थिते भक्तादौ सर्वतो विसर्पति भूम्यादिस्थितपृथिवीकायादिजन्तुविनाशः। एव एवमेते दोषाः तत्र स्तोके बहुकं बहुके बहुकमिति द्वौ भङ्गौ सर्वथापि न कल्पेते। एतदेवाह—

थोवे थोव छूढ सुक्के उल्ल तु व तु आइन्न। बहुय तु अणाइन्न कडदोसो सोचि काऊणं ॥ ५७१ ॥

व्याख्या—स्तोके स्तोकम्, उपलक्षणमेतत्, बहुके वा स्तोकं प्रक्षिप्तं, तदपि शुष्के शुष्कं कल्पत एव, तत शुष्के आर्द्रे, तु शब्दादार्द्रे शुष्कमार्द्रे आर्द्रं च कल्पति आचीर्णं कल्पते इति भावः, यत्तु बहुकं स्तोके बहुके बहुकं वा संहियते तदनाचीर्णं, कुतः? इत्याह—स बहुकसंहारः कृतदोषः—अनन्तरगाथाप्रोक्तदोष इतिकृत्वा। उक्तं संहृतद्वारम्, अथ दायकद्वारं गाथाषट्केनाह—

बाले वुड्ढे मत्ते उम्मत्ते वेविरे य जरिए य। अधिल्लए [य] पगलिए आरूढे पाउयाहिं च ॥ ५७२ ॥

हत्थिंदुनियलबद्धे विवज्जिए चेव हत्थपाएहिं। तेरासि गुव्विणी बालवच्छ भुजंती घुसुलिंती ॥ ५७३ ॥

भज्जंती य दलंती कडंती चेव तह य पीसंती। पीजंती रुंचती कत्तंति पमद्दमाणी य ॥ ५७४ ॥

छक्कायवग्गहत्था समणट्ठा निक्खिवित्तु ते चेव। ते चेवोगाहंती संघट्टंतारभंती य ॥ ५७५ ॥

ससत्तेण य दव्वेण लित्तहत्था य लित्तमत्ता य । उव्वत्तंती साहारणं व दिंती य चोरियं ॥ ५७६ ॥

पाहुडियं च ठवंती सपच्चवाया परं च उद्दिस्स । आभोगमणाभोगेण दलंती वज्जणिज्जा ए ॥ ५७७ ॥

व्याख्या—भक्ताद्यपो वर्जनीया इति क्रियायोगः, तत्र 'बाल' जन्मतो वर्षाष्टकाभ्यन्तरवर्ती, १ 'वृद्धः' सप्ततिवर्षाणां मतान्तरापेक्षया षष्टिवर्षाणां वोपरिवर्ती २ 'मत्तः' पीतमदिरादिः ३ 'उन्मत्तः' दृप्तो ग्रहगृहीतो वा ४ 'वेपमानः' कम्पमानशरीर ५ 'ज्वरितः' ज्वररोगपीडितः ६ 'अन्धः' चक्षुर्विकलः ७ 'प्रगलितः' गलत्कुष्ठः ८ 'आरूढः' पादुकयोः काष्ठमयोपानहोः ९ तथा 'हस्तान्दुना' करविषयकाष्ठमयबन्धनेन १० 'निगडेन च' पादविषयलोहमयबन्धनेन बद्धः ११ हस्ताभ्यां पादाभ्यां वा विवर्जितश्छिन्न त्वात् १२ 'त्रैराशिक.' नपुंसकः १३ 'गुर्विणी' आपन्नसत्त्वा १४ 'बालवत्सा' स्तन्योपजीविशिशुका १५ 'भुञ्जाना' भोजनं कुर्वती १६ 'घुसुलिंती' दध्यादि मथ्नती १७ 'भर्जमाना' चुल्ल्यां कविल्लकादौ चनकादीन् स्फोटयन्ती १८ 'दलयन्ती' घरट्टेन गोधूमादि चूर्णयन्ती १९ 'कण्डयन्ती' उदूखले तण्डुलादिकं छटयन्ती २० 'पिंषन्ती' शिलायां तिलामलकादि मर्दयन्ती २१ 'पिञ्जयन्ती' पिञ्जनेन रूतादिकं विरलं कुर्वती २२ 'रुञ्चन्ती' कर्पासं लोठिन्यां लोठयन्ती २३ 'कृन्तन्ती' कर्तनं कुर्वती २४ 'प्रमृद्नन्ती' रूतं कराभ्यां पौनःपुन्येन विरलं कुर्वती २५ 'षट्कायव्यग्रहस्ता' षट्कायगुक्तहस्ता २६ तथा श्रमणस्य भिक्षादानाय तानेव षट्कायान् भूमौ निक्षिप्य ददती २७ तानेव षट्कायानवगाहमाना पादाभ्यां चालयन्ती २८ 'सङ्घट्टयन्ती' तानेव षट्कायान् शेषशरीरावयवेन स्पृशन्ती २९ 'आरभमाणा' तानेव षट्कायान् विनाशयन्ती ३० 'संसक्तेन' दध्यादिना द्रव्येण 'लिप्तहस्ता' खरण्टितहस्ता ३१ तथा तेनैव द्रव्येण दध्यादिना संसक्तेन 'लिप्तमात्रा' खरण्टितमात्रा ३२ 'उद्वर्तयन्ती' महत्पिठरादिकमुद्वर्त्य स्थानात् ददती ३३ साधारणं

महूनां सत्कं ददती १४ तथा चौरितं ददति(ती) तथा चोरितं ददाति(ती) १२ प्राभृतिकां स्थापयन्ती—मण्डकादिनिमित्तं मूल-स्याल्या आकृष्य स्थगनिकादौ मुञ्चन्ती १६ 'समस्यपाया' सम्भाव्यमानापाया दात्री १७ तथा विवक्षितसाधुव्यतिरेकेण परमन्य साध्वा दिकमुद्दिश्य यत्स्थापितं तद्ददती, १८ तथा 'आभोगेन' साधूनामित्थं न कल्पत इति परिज्ञानेऽप्युपेत्याशुद्धं ददती १९ अथवाऽनाभोगेनाशुद्धं ददती ४० सर्वसङ्ख्यया चत्वारिंशद्दोषाः । इह असितादिद्वारेषु 'संसज्जिमेहिं वज्ज अगरहिएहिंपि गोरसद्दवेहिं' इत्यादिना ग्रन्थेन संसक्तादिदोषाणामभिधानेऽपि यद्भूयोऽप्यत्र 'संसत्तेण य दव्वेण लित्तहत्था य लित्तमत्ता य' इत्याद्यभिधानं तदक्षेपदायकदोषाणामेकत्वेऽप्यन्यत्वमित्यदोषः । सम्प्रत्येतेषामेव दायकानामपवादमधिकृत्य ग्रहणाग्रहणविभागमाह—

एएसि दायगाणं गहणं केसिंचि होइ भइयव्वं । केसिंची अग्गहणं तव्विवरीए भवे गहणं ॥ ५७८ ॥

व्याख्या—'एतेषां' बालादीनां दायकानां मध्ये केषाञ्चित् मूलत आरभ्य पञ्चविंशतिसङ्ख्यानां ग्रहणं भजनीयं, कदाचित् यादृशं महत्प्रयोजनमुद्दिश्य कल्पते, शेषकाले नेति, तथा केषाञ्चित् षट्कायव्यग्रहस्तादीनां पञ्चदशानां हस्ताद्ग्रहणं भिक्षायाः, 'तद्विपरीते तु' बालादिविपरीते तु दातरि भवेद्ग्रहणं । सम्प्रति बालादीनां हस्ताद्भिक्षाग्रहणे ये दोषाः सम्भवन्ति ते दर्शनीयाः, तत्र प्रथमतो बालमधिकृत्य दोषानाह—

कप्पट्ठिग अप्पाहण दिन्ने अन्नन्न गहण पज्जत्तं । खतिय मग्गणदिन्ने उड्डाह पओस चारभडा ॥ ५७९ ॥

व्याख्या—काचिदभिनवा श्राविका भवनेभ्यो भिक्षां दद्या इति निजपुत्रिकाम् 'अप्पाहिऊण' ति सन्दिश्य मक्तं गृहीत्वा क्षेत्रे गता, गतायां तस्यां कोऽपि साधुसङ्घाटको भिक्षार्थमागतः, तया च बालिकया तस्मै तण्डुलौदनो वितीर्णः, सोऽपि च सङ्घाटकमुख्यः

साधुस्तां श्राविकां मुग्धतरामवगत्य साम्प्रतपद्यो भूयो भूय उवाच—पुनर्देहि पुनर्देहीति, ततस्तया समस्तोऽप्योदनो दत्तः, तत्र एव-मेवं मुद्गघृतक्रदध्यादिकमपि, अपराह्णे च समागता जननी, उपविष्टा भोजनाय, भणिता च निजपुत्रिका—देहि पुत्रि ! मममोदनमिति, साऽवोचत्—दत्तः समस्तोऽप्योदनः साधवे, साऽब्रवीत्—शोभन कृतवती, मुद्गान् मे देहि, सा माह—मुद्गा अपि साधवे सर्वे प्रदत्ताः, एवं च यद्यत् किमपि सा याचते तत्सर्वं साधवे दत्तमिति ब्रवीति, तत' पर्यन्ते काञ्जिकमात्रमयाचत, तदपि श्राविका भणति—साधवे दत्तमिति, ततः साऽभिनवश्राद्धिका रुष्टा सती पुत्रिकामेवमपप्रच्छत्—किमिति त्वया सर्वं साधवे प्रदत्तं ?, सा ब्रूते—स साधुर्भूयो भूयोऽयाचत ततो मया सर्वमदायि, ततः सा साधोरुपरि कोपावेशमाविशन्ती सूरीणामन्तिकमगमत्, अचकथत सकलमपि साधुवृत्तान्तं, यथा भवदीयः साधुरित्थमित्थं मत्पुत्रिकायाः सकाशाद्याचित्वा याचित्वा सर्वमोदनादिकमानीतवानिति, एवं तस्यां महता शब्देन कथयन्त्यां शब्दश्रवणतः प्रातिवेश्मिकजनोऽन्योऽपि च परम्परया भूयान्मिलितो श्रावश्च सर्वैरपि साधुवृत्तान्तः, ततो विदधाति तेऽपि कोपावेशात् साधूनामवर्णवादं—नूनममी साधुवेषविडम्बिनश्चारभट्टा इव लुण्टाका न साधुस्पृहा इति, ततः प्रवचनावर्णवादापनोदाय सूरिभिस्तस्याः सर्वजनस्य च समक्षं स साधुर्निर्भर्त्स्योपकरणं च सकलमादाय वसतेर्निष्काशितः, तत एवं तस्मिन्निष्काशिते श्राविकायाः कोपः शममगमत्, ततः सूरीणां क्षमाश्रमणमादायोक्तवती—भगवन् ! मा मन्निमित्तमेष निष्काश्यतां, क्षमस्वैकं ममापराधमिति, ततो भूयोऽपि यथावत्साधुः शिक्षित्वा प्रवेशितः । सूत्रं सुगमं । नवरम् 'चड्डाह पभास चारभडा' इति, लोके चड्डाः ततो लोकस्य प्रदेषमाततश्चारभट्टा इव लुण्टाका अमी न साधव इत्यवर्णवादः। यत एवं बालानिक्षाग्रहणे दोषास्ततो बालस्य ग्राह्यमिति । सम्प्रति स्थवि रदायकदोषानाह—

थेरो गलतलालो कपणहत्थो पडिज्ज वा देंतो । अपहुच्चि य अचियत्त एगयरे वा उभयओ वा ॥ ५८० ॥

व्याख्या—अत्यन्तस्थविरो हि मायो गलल्लालो भवति, ततो देयमपि वस्तु लालया खरण्टितं भवतीति तद्ग्रहणे लोके जुगुप्सा, तथा कम्पमानहस्तो भवति, ततो हस्तकम्पनवशादेयं वस्तु भूमौ निपतति, तथा च षड्जीवनिकायविराधना, तथा स्वयं वा स्थविरो ददत्पतेत्, तथा च सति तस्य पीडा भूम्याश्रितषड्जीवनिकायविराधना च, अपि च मायः स्थविरो गृहस्याप्रभुः—अस्वामी भवति, ततस्तेन दीयमानेन मधुरेण इति विचिन्त्य गृहे स्वामित्वेन नियुक्तस्याचियत्त—प्रद्वेषः स्यात्, स चैकतरस्मिन्–साधौ वृद्धे वा, यद्वा–उभयोरपीति । मत्तोन्मत्तावाश्रित्य दोषानाह—

अवयास भाण(घाय)भेओ वमण असुइत्ति लोगगरिहा य । एए चेव उ मत्ते वमणविवज्जा य उम्मत्ते ॥५८१॥

व्याख्या—'मत्त' कदाचिन्मत्ततया साधोरालिङ्गनं विदधाति, तथा कोऽपि मत्तः मदनवशविह्वलतया रे मुण्ड ! किमत्रा यात ? इति ब्रुवन् घातमपि विदधाति, भाजनं वा भिनत्ति, यद्वा कदाचित्पीतमासवं ददानो वमति, वमँश्च साधु साधुपात्रं वा खरण्टयति, ततो लोके जुगुप्सा, धिगमी साधवोऽशुचयो ये मत्तादपीत्थं भिक्षां गृह्णन्तीति, तत एवं यतो मत्तेऽवयासादयो दोषास्तस्मान्न ततो ग्राह्यम्, एत एवालिङ्गनादयो दोषा वमनवर्जा उन्मत्तेऽपि, तस्मात्ततोऽपि न ग्राह्यम् । सम्प्रति वेपितज्वरिताश्रित्य दोषानाह—

वेविय परिसाडणया पासे व छुभेज्ज भाणभेओ वा । एमेव य जरियम्मि जरसंकमणं च उड्डाहो ॥ ५८२ ॥

व्याख्या—वेपिताद्धि सकम्पाञ्जिसाग्रहणे देयवस्तुनः परिशाटनं भवति, यद्वा पार्श्वे साधुभाजनादहिः सर्वतोऽपि देयं वस्तु

दिपित्, यद्वा येन स्थाल्यादिना भाजनेन कृत्वा भिक्षामानयति तस्य भूमौ निपाते भेद—स्फोटनं स्यात्, एवमेव ज्वरितेऽपि दोषा भावनीयाः, किं च—ज्वरिताद्ग्रहणे ज्वरसङ्क्रमणमपि साधोर्भवेत्, तथा जने उड्डाहो—यथाऽहो ! अमी आहारलम्पटा यदित्थं ज्वरपीडितादपि भिक्षां गृह्णन्तीति । अन्धगलत्कुष्ठव्याधितस्य दोषानाह—

उड्डाह कायपडण अंधे भेओ य पास छुहण च । तद्दोसी सकमण गलतभिसभिन्नदेहे य ॥ ५८३ ॥

व्याख्या—अन्धाद्भिक्षाग्रहणे उड्डाहः, स चायम्—अहो ! अमी औदरिका यदन्धादपि भिक्षां दातुमसमर्थतो भिक्षां गृह्णन्तीति, तथा 'अन्धः' अपश्यन् पादाभ्यां भूम्याश्रितषड्जीवनिकायघातं विदधाति, तथा लोष्टादौ स्खलितः सन् भूमौ निपतेत्, तथा च सति भिक्षादानायोत्पाटितस्वगृहीतस्थाल्यादिभाजनभङ्गः, तथा स देयं वस्तु पार्श्वे—भाजनबहिस्तात् प्रक्षिपेददर्शनात्, तस्मादन्धादपि न ग्राह्यम् । तथा त्वग्दोषिणि, किंविशिष्टे ? इत्याह—'गलन्भिन्नदेहे' आर्षत्वादुपन्यासेन पदयोजना, सा चैवम्—'स्रवत्' अतिशयेन 'गलत्' अर्द्धपक्वं रुधिरं च यस्मिन् भिन्नः—स्फुटितो देहो यस्य स तथा तस्मिन् दातरि 'सङ्क्रमणं' कुष्ठव्याधिसङ्क्रान्तिः स्यात्, तस्मात्ततोऽपि न ग्राह्यम् । सम्प्रति पादुकारूढादिचतुष्टयदोषानाह—

पाउयदुरूढपडण बद्धे परियाव असुइखिसा य । करछिन्नासुइ खिसा ते च्चिय पायेऽवि पडण च ॥ ५८४ ॥

व्याख्या—पादुकारूढस्य भिक्षादानाय प्रचलतः कदाचिदस्थिरत्वेन पतनं स्यात्, तथा बद्धे दातरि भिक्षां प्रयच्छति 'परितापः' दुःखं तस्य भवेत्, तथा 'अशुचि'रिति मूत्राद्युत्सर्गादौ जलेन तस्य शौचकरणासम्भवात्ततो भिक्षाग्रहणे लोके जुगुप्सा, यथा—

अमी मनुजयो यदेतस्मादप्यशुचिभूतान्भिक्षामादवतीति, एवं छिन्नकरेऽपि भिक्षां प्रयच्छति लोके जुगुप्सा, तथा हस्ताभावेन प्रायकरणासम्भवात्, एतच्चोपलक्षणं, तेन हस्ताभावे येन कृत्वा भाजनेन भिक्षां ददाति यद्वा देयं वस्तु तस्य पतनमपि भवति, तथा च सति षड्जीवनिकायव्याघातः, एत एव दोषाः पादेऽपि—छिन्नपादेऽपि दातरि ज्ञातव्याः, केवलं पादाभावेन तस्य भिक्षादानाय चलतः प्रायो नियमतः 'पतन' पातो भवेत्, तथा च सति भूम्याश्रितकीटिकादिकसत्त्वव्याघातः। सम्प्रति नपुंसकमधिकृत्य दोषानाह—

आयपरोभयदोसा अभिक्खगहणमि खोभण नपुंसे। लोगदुगुंछा संका एरिसया नूणमेएऽवि ॥ ५८५ ॥

व्याख्या—नपुंसके भिक्षां प्रयच्छति आत्मपरोभयदोषाः, तथाहि—नपुंसकात् अभीक्ष्णं भिक्षाग्रहणेऽतिपरिचयो भवति, भतीव परिचयाच्च तस्य नपुंसकस्य साधोर्वा क्षोभो—वेदोदयरूपः समुत्पद्यते, ततो नपुंसकस्य साधुविषयाप्रतिसेवनेन द्वयस्यापि मैथुन सेवया कर्मबन्धः, अभीक्ष्णग्रहणस्य्चोपादानात् कदाचिद्भिक्षाग्रहणे दोषाभावमाह परिचयाभावात्, तथा लोके जुगुप्सा यथैते नपुंसकादपि निकृष्टाद्भिक्षामाददत इति, साधूनामप्युपरि जनस्य शङ्का भवति—यथैतेऽपि साधवो नूनमीदृशा'—नपुंसकाः, कथमन्यथा अनेन सह भिक्षाग्रहणव्याजतोऽतिपरिचयं विदधतः इति। सम्प्रति गुर्विणीबालवत्से आश्रित्य दोषानुपदर्शयति—

गुब्विणि गब्भे संघट्टणा उ उट्ठुवेसमाणीए। बालाई मंसुंडग मज्जाराई विराहेज्जा ॥ ५८६ ॥

व्याख्या—गुर्विण्या भिक्षादानार्थमुत्तिष्ठन्त्या भिक्षां दत्त्वा स्वस्थाने उपविशन्त्याश्च 'गर्भे' गर्भस्य 'संघट्टनं' संचलनं भवति, तस्माच्च तदो प्रायः, 'बालाई मंसुंडग' त्ति, अत्राऽर्थस्यासत्यासेन पदयोजना, 'बाल'मिति शिशुं भूमौ मञ्चकादौ वा निक्षिप्य यदि भिक्षां ददाति तर्हि सं बालं 'मार्जारादिः' विडालसारमेयादिः 'मांसोंडुगमिति' मांसखण्डं शशकशिशुरिति वा कृत्वा 'विराधयेत्'

विनाशयेत्, तथाऽऽहारखरण्टितौ शुष्कौ हस्तौ कर्कशौ भवतः, ततो भिक्षां दत्त्वा पुनर्धौताभ्यां हस्ताभ्यां गृह्यमाणस्य बालस्य पीडा भवेत्, ततो बालवत्सातोऽपि न ग्राह्यम् । भुञ्जानां सचित्तां चाश्रित्य दोषानाह—

भुजती आयमणे उदगं छोट्टी य लोगगरिहा य । घुसुलंती ससत्ते करमि लित्ते भवे रसगा ॥ ५८७ ॥

व्याख्या—भुञ्जाना दात्री भिक्षादानार्थमाचमनं करोति, आचमने च क्रियमाणे उदकं विराध्यते, अथ न करोत्याचमनं तर्हि लोके छोट्टिरितिकृत्वा गर्हा स्यात्। तथा ' घुसुलंती ' दध्यादि मथ्नती यदि अरण्यादि संसक्तं मथ्नाति तर्हि तेन संसक्तदध्यादिना लिप्ते करे तस्या भिक्षां ददत्यास्तेषां रसजीवानां वधो भवति, ततस्तस्या अपि हस्तान्न कल्पते । सम्प्रति पेषणादि कुर्वत्या दोषानुपदर्शयति—

दगवीए संघट्टण पीसणकडदल भज्जणे डहण । पिंजत रुचणाई दिन्ने लित्ते करे उदगं ॥ ५८८ ॥

व्याख्या—पेषणकण्डनदलनानि कुर्वतीनां हस्तान्निक्षाग्रहणे उदकबीजसङ्घट्टनं स्यात्, तथाहि–पिंषन्ती यदा भिक्षादानायोत्तिष्ठति तदा पिष्यमाणतिलादिसत्काः कांश्चिद्भक्तिकाः सचित्ता अपि हस्तादौ लगिताः सम्भवन्ति, ततो भिक्षादानाय हस्तादि प्रस्फोटने भिक्षां वा ददत्या भिक्षासम्पर्केणतासां विराधना भवति, भिक्षां च दत्त्वा भिक्षावयवखरण्टितौ हस्तौ जलेन प्रक्षाल्येत्, ततः पेषणे उदकबीजसङ्घट्टनम्, एवं कण्डनदलनयोरपि यथायोगं भावनीयं, तथा ' भर्जने ' भिक्षां ददत्यां वेलालगनेन कश्चिद्भ्राष्ट्रिक्षिप्तगोधूमादीनां दहनं स्यात्, तथा पिञ्जनं रुञ्चनमादिशब्दात्कर्तनमर्दने च कुर्वती भिक्षां दत्त्वा भिक्षावयवखरण्टितौ हस्तौ जलेन प्रक्षालयेत्, ततस्तमाप्युदकं विनश्यतीति न ततोऽपि भिक्षा कल्पते । सम्प्रति षट्कायव्यग्रहस्तादिपञ्चकस्वरूपं गाथाद्वयेनाह—

लोण दग अगणि वत्थी फलाइ मच्छाइ सजिय हत्थमि । पाएणोगाहणया संघट्टण सेसकाएण ॥ ५८९ ॥

खणमाणी आरभए मज्जइ धोयइ व सिंचए किंचि । छेयविसारणमाई छिंदइ छट्टे फुरुफुरंते ॥ ५९० ॥

व्याख्या—इह सा षट्कायव्यग्रहस्ता उच्यते यस्या हस्ते सजीवं लवणमुदकमग्निर्वायुपूरितो वा बस्तिः फलादिकं बीजपूरादिकं मत्स्यादयो वा विद्यन्ते, ततः सा यथैतेषां सजीवलवणादीनामन्यतमदपि श्रमणभिक्षादानार्थं भूम्यादौ निक्षिपति तर्हि न कल्पते। तथाऽवगाहना नाम यदेतेषां षण्णां जीवनिकायानां पादेन सङ्घट्टनं, शेषकायेन हस्तादिना सम्मर्दनं सङ्घट्टनम्, आरभमाणा कुश्यादिना भूम्यादि खनन्ती, अनेन पृथिवीकायारम्भ उक्तः, यद्वा 'मज्जती' शुद्धेन जलेन स्नान्ती, अथवा 'धावंती' शुद्धेनोदकेन वस्त्राणि प्रक्षालयन्ती, यद्वा किञ्चिद् वृक्षस्थ्यादि सिञ्चन्ती, एतेनाप्कायारम्भो दर्शितः, उपलक्षणमेतत्, उज्ज्वलयन्ती वा फूत्कारेण वैश्वानरं बस्त्यादिकं वा सचित्तवायुस्वभावतः मक्षिपन्ती, एतेनाग्निवायुसमारम्भ उक्तः, तथा शाकादेश्छेदविशारणे कुर्वती, तत्र छेद—पुष्पफलादेः खण्डनं विशारण-तेषामेव खण्डानां शोषणायातपे मोचनम्, आदिशब्दाच्चणकमुद्गादीनां शोधनादिपरिग्रहः, तथा छिन्दती षट्ठान् त्रसकायान् मत्स्यादीन् 'फुरुफुरंते' इति परिस्फुरमाणान् पीडयोद्भव इत्यर्थः, अनेन त्रसकायारम्भ उक्तः। इत्थं षड्जीवनिकायानारभमाणाया हस्तान्न कल्पते। सम्प्रति षट्कायव्यग्रहस्तेति पदस्य व्याख्याने मतान्तरमुपदर्शयति—

उच्छायवग्गहत्था केई कोलाइकन्नलइयाई । सिद्धत्थगपुप्फाणि य सिरंमि दिन्नाई वज्जति ॥ ५९१ ॥

व्याख्या—केचिदाचार्याः षट्कायव्यग्रहस्तेतिपदस्य 'कोलादीनि' बदराणीनि, आदिशब्दात्करीरादिपरिग्रहः, 'कन्नलइयाइं'ति

कर्णे पिनद्धानि यथा सिद्धार्थकपुष्पाणि शिरसि दूर्वादीनि पर्वसु धारयन्ति, हस्तग्रहणं हि किल सूत्रे उपलक्षणं, तेन कर्णे शिरसि वा जीव-निकायसम्भवे वस्तुतस्तु सत्त्वे, तन्मतेन पट्कायव्यग्रहस्तोऽपि दाता पट्कायं सङ्घट्टयन्तीत्यस्य पदस्य विशेषो दुरुपपादः ।

अन्ने भणंति दससुवि एसणदोसेसु नत्थि तग्गहणं । तेण न वज्जं भण्णइ नणु गहण दायगग्गहणा ॥ ५९२ ॥

व्याख्या—अन्ये स्वाचार्यदेशीया भणन्ति—यथा दशस्वपि शङ्कितादिषु एषणादोषेषु मध्ये न तद्ग्रहणं—पट्कायव्यग्रहस्तेत्यु-पादानमस्ति, तेन कारणेन कोलादियुक्तहस्तया भिक्षाग्रहणं न वर्ज्यं, तदेतत् पापात्पापीयो, यत आह—' भण्यते ' अत्रोत्तरं दीयते ननु दायकग्रहणादेषणादोषमध्ये पट्कायव्यग्रहस्तेत्यस्य ग्रहणं विद्यते, तस्मादुच्यते—न ग्रहणमिति ? । सम्प्रति ससक्तिमद्रव्यदात्या दिशोपानाह—

ससत्तिमम्मि देसे ससत्तिमदव्वलित्तकरमत्ता । संचारो ओयत्तण उक्खिप्पंतेऽवि ते चेव ॥ ५९३ ॥

व्याख्या—संसक्तिमद्रव्यवति देशे-मण्डले संसक्तिमता द्रव्येण लिप्तः करो मात्रं वा यस्याः सा तथाविधा दात्री भिक्षां ददती करादिलग्नान् सत्त्वान् हन्ति, तस्मात्सा वर्ज्यते, तथा महतः पिठरादेरपवर्तने ' सञ्चारः ' ' मूसनासङ्ग 'मिति सञ्चारिमकीटिकाप्र-त्ययादिसत्त्वव्यापादः, इदमुक्तं भवति—महत्पिठरं यत्र तत्र वा नोत्पाट्यते नापि यथा तथा वा सञ्चार्यते, महत्त्वादेव, किन्तु प्रयोजन-विशेषोत्पत्तौ सत्यां, ततस्तदाश्रिताः प्रायः कीटिकादयः सत्त्वाः सम्भवन्ति, ततो यत्र तत्पिठरादिकमुद्वर्त्य किञ्चिद्ददाति तत्र तदा-श्रितजन्तुव्यापादः, एते च दोषा उत्पाट्यमानेऽपि महति पिठरादौ, तत्रापि हि भूयो निक्षेपणे हस्तसंस्पर्शतो वा सञ्चारिमकीटिकादि-

सम्बन्धाघात', अपि च तथाभूतस्य मरत उत्पाटने दाम्प्याः पीडाऽपि भवति, तस्मात्तदुत्पाटनेऽपि भिक्षा कल्पते। साम्प्रतं साधारणं चौर्येण वा दत्त्वा दोषानाह—

साधारण बहूणं तत्थ उ दोसा जहेव अणिसिट्ठे। चोरियए गहणाई भयए सुण्हाइ वा देंते॥ ५९४॥

व्याख्या—बहूनां साधारणं यदि ददाति तर्हि तत्र यथा प्रागनिसृष्टे दोषा उक्तास्तथैव द्रष्टव्याः। तथा चौर्येण भृतके—कर्मकरे स्नुषादौ वा ददति 'ग्रहणादयः' ग्रहणबन्धनताडनादयो दोषा द्रष्टव्याः, तस्मात्तदोऽपि न कल्पते। साम्प्रतं प्राभृतिकास्थापनादिद्वार-द्वयदोषानाह—

पाहुडि ठवियगदोसा तिरिउड्ढमहे तिहा अवायाओ। धम्मियमाई ठविय परस्स परसंतियं वावि॥ ५९५॥

व्याख्या—प्राभृतिकां यत्यादिनिमित्तं संस्थाप्य या ददाति भिक्षां तत्र दोषाः प्रवर्चनादयः। साम्प्रतं 'अपाये'ति द्वारेऽपाया-स्त्रिविधाः, तद्यथा—तिर्यगूर्ध्वमधश्च, तत्र तिर्यगपायादिभ्य ऊर्ध्वमुत्तरककाष्ठादेरधः सर्पकण्टकादेः, इत्थं च त्रिविधानामप्यपायानामन्य-तममपायं बुद्ध्या सम्भाव्यमानं ततो भिक्षां गृह्णीयात्, 'परं चोरिये'ति यदुक्तं, तमाह—'धार्मिकाद्यर्थम्' अपरसाधुकार्पटिकप्रभृति निमित्तं यत् स्थापितं तत्परस्य परमार्थतः सम्बन्धीति न गृह्णीयात्, तद्ग्रहणेऽदत्तादानदोषसम्भवात्, तथा 'परसंतियं व'त्ति परस्य-म्लानादेः सत्कं यद्ददाति तदपि स्वयमादातुं न कल्पते, अदत्तादानदोषात्, किन्तु यस्मै ग्लानाय दापितं तस्मै नीत्वा दातव्यं, स चेन्न गृह्णाति तर्हि भूयोऽपि दाम्याः समानीय समर्पणीयं, यदि पुनरेव दात्री वदति—यदि ग्लानादिको न गृह्णाति तर्हि स्वयं ग्राह्यमिति, तर्हि ग्लानाद्यभावे तस्य कल्पत इति। साम्प्रतमाभोगानाभोगदायकस्वरूपमाह—

अणुकपा पाडणायट्ठया य स कुणइ जाणमाणोऽवि । एसणदोस पयइओ कुणइ ...

व्याख्या—सर्वैरेवै महानुभावा यतयोऽन्तमान्वमशनमश्नन्ति तस्मात्करोम्येनेषां शरीरोपष्टम्भाय घृतपूरादीनीत्येवमनुकम्पया यदिवा मयैतेषामनेषणीयाग्रहणनियमभङ्गो भङ्क्त्व्य इति प्रत्यनीकार्थतया जानानोऽपि दानाधाकर्मादिरूपानेषणादोषान् करोति, द्वितीयस्तु करोति अजानानः भद्रकभावः । सदेवं व्याख्यातानि चत्वारिंशदपि भाष्यविहाराणि, सम्प्रति यदुक्तम्—' एएसि ठायणाणं गहणं केसिंचि होइ भइयव्वं ' इत्यादि, तत्राचिख्यासुः प्रथमतो बाल्यमाश्रित्य भजनामाह—

भिक्खामित्ते अवियालणा उ बालेण दिज्जमाणंमि । संदिट्ठे वा गहणं अइबहुय वियालणेऽणुन्ना ॥ ५९७ ॥

व्याख्या—मातुः परोक्षे भिक्षामात्रे बालेन दीयमाने यदिवा पार्श्ववर्तिना मात्रादिना सन्दिष्टे सति तेन बालेन दीयमानेऽविचारणा—कल्पते इदं न वेति विचारणाया अभावः, किन्तु ग्रहण भिक्षाया भवति, अतिबहुके तु बालेन दीयमाने किमद्य त्वं प्रभूतं ददासीति विचारणे सति पर्यनुज्ञा—पार्श्ववर्तिमात्रादिसत्कमुत्कलना भवति तदा ग्राह्यं नान्यथा । सम्प्रति स्थविरमत्तविषयां भजनामाह—

थेर पहु थरथरंते धरिए अन्नेण दढसरीरे वा । अव्वत्तमत्तसड्ढे अविंभले वा असागारिए ॥ ५९८ ॥

व्याख्या—स्थविरो यदि प्रभुर्भवति, 'थरथरंते 'त्ति कम्पमानो यद्यन्येन विधृतो वर्तते स्वरूपेण वा दृढशरीरो भवति तर्हि तदा कल्पते, तथाऽव्यक्तं मनाक् यो मत्तः सोऽपि यदि श्राद्धोऽविह्वल—अपरवशश्च भवति तदा तस्मादेवंविधान्मत्तात् तत्र सागारिको न विद्यते तर्हि कल्पते नान्यथा ॥ उन्मत्तादिविषयां भजनामाह—

पढग अप्पडिसेवी वेला थणजीवि भ्रूयर सव्वपि । उक्खित्तमणात्ताए न किंचि लग्गं ठवतीए ॥ ६०१ ॥

व्याख्या—नपुंसकोऽपि यदि 'अप्रतिसेवी' स्त्रीसेवनासेवकस्तर्हि ततः कल्पते, तथाऽऽसन्नप्रसवाऽपि यदि 'वेल'त्ति 'मूलनात्सूत्र'मितिन्यायादेकामासप्राप्ता भवति, नवममासगर्भा यदि भवतीत्यर्थः, तर्हि स्थविरकल्पिकैः परिहार्या, मर्यादापरीतायाः इत्था स्थविरकल्पिकानामुपकल्पते इति द्रष्टव्यं, तथा याऽपि बालवत्सा स्तन्यमात्रोपजीविशिशुका सा स्थविरकल्पिकानां परिहार्या, न ततः स्थविरकल्पिकानामपि कल्पते किमपीति भावः, यस्यास्तु बाल आहारेऽपि लगति तस्या हस्तात्कल्पते, स हि भाव शरीरेण महान् भवति, ततो न मार्जारादिविराधनादोषसम्भवः, ये तु भगवन्तो जिनकल्पिकास्ते मूलत एवापन्नसत्त्वां बालवत्सां च सर्वथा परिहरन्ति, एवं भुञ्जानादिष्वपि भजना भावनीया, सा चैवं—भुञ्जाना अनुच्छिष्टा सती यावदद्यापि न कवलं मुखे प्रक्षिपति तावत्तद्धस्तात्कल्पते, भर्जमानाऽपि यत्सचित्तं गोधूमादि कविल्लके क्षिप्तं तदभृष्टोत्तारितमन्यच्च नाद्यापि हस्तेन गृह्णाति, अत्रान्तरे यदि साधुरायातो भवति सा चेद्ददाति तर्हि कल्पते, तथा दलयन्ती सचित्तमुद्गादिना दलयमानेन सा घरट्टं मुक्तवती अत्रान्तरे च साधुरायातो भवति सा चेत्ततो यदुत्तिष्ठति, अचेतनं वा मुद्गमुद्गादिकं दलयति तर्हि तद्धस्तात्कल्पते, कण्डयन्त्या कण्डनायोत्पादितं मुसलं, न च तस्मिन् मुसले किमपि काच्च्या बीजं लग्नमस्ति, अत्रान्तरे च समायातः साधुस्ततो यदि साऽनपाये प्रदेशे मुसलं स्थापयित्वा भिक्षां ददाति तर्हि कल्पते । पिञ्जनादिविषयां भजनामाह—

पीसती निप्पिट्ठे फासु वा घुसुलणे असंसत्तं । कत्तणि असंखचुन्न चुन्न वा जा अचोक्खलिणी ॥ ६०२ ॥

उव्वट्टणिऽसंसत्तेण वावि अट्ठीछुए न घट्टेइ । पिंजणपमद्दणेसु य पच्छाकम्मं जहा नत्थि ॥ ६०३ ॥

व्याख्या—पिंषन्ती 'निप्पिट्ठे' पेषणपरिसमाप्तौ, प्रासुकं वा पिंषन्ती यदि ददाति तर्हि तस्या हस्तात्कल्पते, तथा 'घुसुळमे' सचूर्णपरुषसक्तं दध्यादि मथ्नन्त्याः कल्पते, तथा कर्त्तने या असक्तचूर्णं—असंसक्तमपि तद्रूतं कृन्तति, इह कार्पासस्याविक्षयेन चेतवापादनाय शङ्खचूर्णेन हस्तौ मङ्क्ता च सरस्थयित्वा कृन्तति, तत उच्यते 'असक्तचूर्णं' मिति । अथवा चूर्णमपि—शङ्खचूर्णमपि गृहीत्वा कृन्तन्ती वा 'अचोक्खलिणी' अनुत्सारीता न जलेन हस्तौ प्रक्षालयतीति भावः, तस्या हस्तात्कल्पते । तथा 'उद्वर्तने' कार्पासलोठने 'असंसत्तेण वावि' त्ति असंसक्तेनाष्टीककार्पासेन हस्तेनोपलक्षिता सती वधुपिजन्ती 'अट्ठीछुए' अस्थिकान् कार्पासिकानित्यर्थः न घट्टयति तदा तद्धस्तात्कल्पते । पिञ्जनप्रमर्दनयोरपि पश्चात्कर्म न भवति तथा ग्राह्यमिति ।

सेसेसु य पडिवक्खो न संभवइ कायगहणमाईसु । पडिवक्खस्स अभावे नियमा उ भवे तयग्गहणं ॥ ६०४ ॥

व्याख्या—शेषेषु द्वारेषु 'कायगहणमाईसु' षट्कायव्यग्रहस्तादिषु प्रतिपक्षः उत्सर्गापेक्षयाऽपवादरूपो न विद्यते—न सम्भवति, ततः प्रतिपक्षस्याभावे नियमात्तत्र भवति तेषामग्रहणमिति । उक्तं दायकद्वारम्, अथोन्मिश्रद्वारमाह—

सच्चित्ते अच्चित्ते मीसग उम्मीसगंमि चउभंगो । आइतिए पडिसेहो चरिमे भंगंमि भयणा उ ॥ ६०५ ॥

व्याख्या—इह यद्येनोन्मिश्र्यते ते द्वे अपि वस्तुनी त्रिधा, तद्यथा—सचित्तेऽचित्ते मिश्रे च, तत्र उन्मिश्रके—मिश्रणे चतुर्भङ्गी, अत्र भावैकवचनं, ततस्तिस्रश्चतुर्भङ्ग्यो भवन्तीति वेदितव्यं, तत्र प्रथमा सचित्तमिश्रपदाभ्यां, द्वितीया सचित्ताचित्तपदाभ्यां, तृतीया मिश्रा-

चित्तपदाभ्यामिति । तत्र सचित्तमिश्रपदाभ्यामियं—सचित्ते सचित्तं मिश्रे सचित्त सचित्त मिश्र [illegible]
सचित्तम् अचित्ते सचित्तं सचित्तेऽचित्तम् अचित्तेऽचित्तमिति, तृतीयेयं—मिश्रे मिश्रम् अचित्ते मिश्रं मिश्रेऽचित्तम् अचित्तेऽचित्तमिति, तत्र गाथापर्यन्तसूत्रस्यानुक्तसमुच्चयार्थत्वादाद्यायां चतुर्भङ्गिकायां सकलायामपि प्रतिषेधः, शेषे तु चतुर्भङ्गीद्वये प्रत्येकम्, 'आदिमिके' आदिमेषु त्रिषु त्रिषु भङ्गेषु प्रतिषेधः, चरमे तु भङ्गे भजना वक्ष्यमाणा । अत्रैवातिदेशं कुर्वन्नाह—

जह चेव य संजोगा कायाणं हेट्ठओ य साहरणे । तह चेव य उम्मीसे होइ विसेसो इमो तत्थ ॥ १०६ ॥

व्याख्या—यथा चैवाधः प्राक् संहरणद्वारे 'कायानां' पृथिवीकायादीनां सचित्ताचित्तमिश्रभेदभिन्नानां स्वस्थानपरस्थानाभ्यां संयोगा—भङ्गाः प्रदर्शिता द्वात्रिंशदधिकचतुःशतसङ्ख्यामानाः, तथैव 'उन्मिश्रितेऽपि' उन्मिश्रद्वारेऽपि दर्शनीयाः, तद्यथा—सचित्तपृथिवीकायः सचित्तपृथिवीकाये उन्मिश्रः, सचित्तपृथिवीकायः सचित्ताप्काय उन्मिश्र इत्येवं स्वस्थानपरस्थानापेक्षया षट्त्रिंशत्संयोगाः, एकैकस्मिंश्च संयोगे सचित्तमिश्रपदाभ्यां सचित्ताचित्तपदाभ्यां च प्रत्येकं चतुर्भङ्गीति द्वादशभिर्गुणिता जातानि चत्वारि शतानि द्वात्रिंशदधिकानि, ननु संहृते उन्मिश्रे च सचित्तादिवस्तुनिक्षेपान्नास्ति परस्परं विशेषः, अत आह—'तत्र' तयोः संहृतोन्मिश्रयोर्भवति परस्परमयं विशेषो—वक्ष्यमाणः । तमेवाह—

दायव्वमदायव्वं च दोऽवि दव्वाइं देइ मीसेउं । ओयणकुसुणाईणं साहरण तयन्नहिं छोढुं ॥ १०७ ॥

व्याख्या—'दातव्यं' साधुदानयोग्यमितरत् अदातव्यं, तत्र सचित्तं मिश्रं तुषादिकं, ते द्वे अपि द्रव्ये मिश्रयित्वा ददाति,

यदोदनं कुसनेन—दध्यादिना मिश्रयित्वा ददाति, एवंविधमुन्मिश्रमुक्तमित्यर्थः, 'संहरणं' तु यत्राभाजनस्थमदेयं वस्तु अन्यत्र क्वापि स्थगितकादौ संहृत्य ददाति, ततोऽनयोः परस्परं विशेषः । द्वितीयतृतीयचतुर्भङ्गीसत्कचतुर्भङ्गभावनामाह—

तंपि य सुक्के सुक्के भंगा चत्तारि जह उ साहरणे । अप्पबहुएऽवि चउरो तहेव आइण्णऽणाइण्णे ॥ १०८ ॥

व्याख्या—यच्चित्तेऽचित्तं मिश्रयति 'तदपि' तथापि शुष्के शुष्कं मिश्रितमित्येवं भङ्गाभ्यासारो यथा संहरणे, तद्यथा—शुष्के शुष्कमुन्मिश्रं, शुष्के आर्द्रम्, आर्द्रे शुष्कम् आर्द्रे आर्द्रमिति । तत्र एकैकस्मिन् भङ्गे संहरणे इवाल्पबहुत्वे अधिकृत्य 'चत्वार' चत्वारो भङ्गाः, तद्यथा—स्तोके शुष्के स्तोकं शुष्कं, स्तोके शुष्के बहुकं शुष्कं, बहुके शुष्के स्तोकं शुष्कं, बहुके शुष्के बहुकं शुष्कमिति । एवं शुष्के आर्द्रमित्यादावपि भङ्गत्रिके प्रत्येकं चतुर्भङ्गी भावनीया, सर्वसंख्यया भङ्गाः षोडश, तथा 'तथैव' संहरणे इवाऽऽचीर्णानाचीर्णे—कल्प्याकल्प्ये उन्मिश्रे भावये, तद्यथा—शुष्के शुष्कमित्यादीनां चतुर्णां भङ्गानां प्रत्येकं यौ द्वौ द्वौ भङ्गौ स्तोके स्तोकमुन्मिश्रं बहुके स्तोकमित्येवंरूपौ तौ कल्प्यौ दाहीपीडादिदोषाभावात्, स्तोके बहुकं बहुके बहुकमित्येवंरूपौ तु यौ द्वौ द्वौ भङ्गौ तावकल्प्यौ, तत्र दाहीपीडादिदोषसम्भवात्, शेषा तु भावना यथासम्भवं संहरण इव द्रष्टव्या । उक्तमुन्मिश्रद्वारम्, इदानीमपरिणतद्वारमाह—

अपरिणयंपि य दुविहं दव्वे भावे य दुविहमेक्केक्कं । दव्वंमि होइ छक्कं भावंमि य होइ सज्झिलगा ॥१०९॥

---

१ दातृग्रहीतृयोगादिति शेषः, तत्र द्रव्ये द्रव्यविषयं भवति एवं सचेतनपृथ्वीकायादिकं, द्रव्यत्वस्यास्य, भावे चाप्यपरिणतं पुन भवति 'सज्झिलगा' भ्रातरो वक्ष्यमाणाः, भावापरिणतत्वेनोदाहरणस्य, तत्रापि भ्रातृद्वयेन सम्बन्धिनां साधुसम्बन्धिसङ्घाटकी सङ्घाटोऽत्र मतः ।

व्याख्या—अपरिणतमपि द्विविध, तद्यथा—'द्रव्ये' द्रव्यविषयं 'भावे' भावविषयं, द्रव्यरूपमपरिणतं भावतोऽपरिणतं चेत्यर्थः पुनरप्येकैकं दातृग्रहीतृसम्बन्धाद्द्विधा, तद्यथा—द्रव्यापरिणतं दातृसत्कं ग्रहीतृसत्कं च, एवं भावापरिणतमपि । तत्र द्रव्यापरिणतस्वरूपमाह—

जीवत्तमि अविगए अपरिणय परिणयं गए जीवे । दिट्ठंतो दुद्धदही इय अपरिणय परिणय त च ॥ ६१० ॥

व्याख्या—'जीवत्वे' सचेतनत्वे 'अविगते' अनष्टे पृथिवीकायादिकं द्रव्यमपरिणतमुच्यते, गते तु जीवे परिणतम् । अत्र दृष्टान्तो दुग्धदधिनी, यथा हि दुग्धं दुग्धत्वात् परिभ्रष्टं दधिभावमापन्नं परिणतमुच्यते, दुग्धभावे चावस्थितेऽपरिणतम्, एवं पृथिवीकायादिकमपि स्वरूपेण सजीवं सजीवत्वापरिभ्रष्टमपरिणतमुच्यते, जीवेन विप्रमुक्तं परिणतमिति । तत्र यदा दातृ सत्तायां वर्तते तदा दातृसत्कं, यदा तु ग्रहीतुः सत्तायां तदा ग्रहीतृसत्कमिति । सम्प्रति दातृविषयं भावापरिणतमाह—

दुगमाई सामन्ने जइ परिणमई उ तत्थ एगस्स । देमिंति न सेसाणं अपरिणय भावओ एय ॥ ६११ ॥

व्याख्या—यत् 'द्विकादिसामान्ये' आत्मादिद्विकादिसाधारणे देयवस्तुनि यद्येकस्य कस्यचिद्दातुरीदृशो भावः परिणमति, न शेषाणां, एतद् भावतोऽपरिणतं, न भावापेक्षया देयतया परिणतमित्यर्थः । अथ साधारणानिसृष्टस्य दातृभावापरिणतस्य च कः परस्परं प्रतिविशेषः ?, उच्यते, साधारणानिसृष्टं दायकपरोक्षत्वे, दातृभावापरिणतं तु दायकसमक्षत्वे इति । सम्प्रति ग्रहीतृविषयं भावापरिणतमाह—

एगेण वावि एसिं मणमि परिणामिय न इयरेण । तंपि हु होइ अगिज्झं सज्झिलगा सामि साहू वा ॥ ११२ ॥

व्याख्या—एकेनापि केनचिदमेवनेन पाश्चात्येन मैषणीयमिति मनसि परिणामितं, नेतरेण–द्वितीयेन, तदपि मापतोऽपरिणतमिति कृत्वा साधूनामग्राह्यं, शङ्कितत्वात्कलहादिदोषसम्भवाच्च, सम्प्रति द्विविधस्यापि भावापरिणतस्य विषयमाह–'सज्झिलगा' इत्यादि, तत्र दातृविषय भावापरिणतं भ्रातृविषयं स्वामिविषयं च, ग्रहीतृविषय भावापरिणतं साधुविषयम् । उक्तमपरिणतद्वारं, सम्प्रति लिप्तद्वारं वक्तव्यं, तत्र लिप्तं यत्र दध्यादिद्रव्यलेपो लगति, तच्च न ग्राह्यं, यत आह—

घेत्तव्वमलेवकडं लेवकडे मा हु पच्छकम्माई । न य रसगेहिपसंगो इय वुत्ते चोयगो भणइ ॥ ११३ ॥

व्याख्या—इह साधुना सदैव ग्रहीतव्यमलेपकृत्–वल्लचनकादि, माऽभूवन् लेपकृति गृह्यमाणे पश्चात्कर्मादयो दध्यादिलिप्तहस्तादिप्रक्षालनादिरूपा दोषाः, मादिशब्दात्त्रीटिकादिसंसक्तकरादिना भोक्तनादिपरिग्रहः, अतो लेपकृत्त्व ग्रहीतव्यम् । अलेपकृद्ग्रहणे गुणमाह–न च सदैवालेपकृतो ग्रहणे 'रसगृद्धिप्रसङ्गः' रसाभ्यवहारलम्पटत्वलक्षणः, तस्मात्सदैव साधुभिः सदैवाभ्यवहार्यम् । एवमुक्ते सति चोदको भणति—

जइ पच्छकम्मदोसा हवंति मा चेव भुंजऊ सययं । तवनियमसंजमाणं चोयग ! हाणी खमतरस ॥ ११४ ॥

व्याख्या—यदि लेपकृद्ग्रहणे पश्चात्कर्मप्रभृतयो दोषा भवन्ति ततस्तत्र गृह्यते तर्हि मा कदाचनापि साधुर्भुङ्क्ताम्, एवं हि दोषाणां सर्वेषां मूलत एवोत्थानं निषिद्धं भवति, सूरिराह–हे चोदक ! सर्वकालं क्षपणतः अभूतनतपोरूपं तपर्न कुर्वतः सामोऽस्तु-

कालमानितपोनियमसंयमानां हानिर्भवति, तस्मान्न यावज्जीवं क्षपणं कार्यं । पुनरपि परः आह—यदि सर्वकालं क्षपणं कर्तुमशक्तस्तर्हि षण्मासक्षपणं कृत्वा पारणकमस्यैककृता विधया, गुरुराह—यद्येवं कुर्वंस्तपःसंयमयोगान् कर्तुं शक्नोति तर्हि करोतु, न कोऽपि तस्य निषेद्धा, ततो भूयोऽपि चोदको ब्रूते—यद्यपि तर्हि षण्मासानुपोष्याचाम्लेन भुङ्क्तां, न चेच्छक्नोति तत एकदिनादिहान्या तावत्परिभावयेत् यावच्चतुर्थमुपोष्याचाम्लेन पारयेत्, एवमप्यसस्तरणे सर्वेषामेकत्वं गृह्णीयात् । अमुमेव गाथया निर्दिशति—

लिच्चति भाणिऊण छम्मासा हायए चउत्थ तु । आयंबिलस्स गहणं असथरे अप्पलेव तु ॥ ६१५ ॥

व्याख्या—लिप्तं सलेपमिति मत्वाऽलेपकृतोत्कृष्टं तीर्थकरगणधरैरनुज्ञातमिति गुरुवचनम् । अत्र चोदक आह—यावज्जीवमेव मा भुङ्क्तां, नो चेत् यावज्जीवमभोजनेन शक्नोति तर्हि षण्मासानुपोष्य आचाम्लेन भुङ्क्तां, न चेदेवमपि शक्नोति तत एकदिनादिहान्या तावदा स्थानं तोलयेत् यावच्चतुर्थमुपोष्याचाम्लस्य ग्रहणं करोतु, एवमप्यसंस्तरणे—अल्पलेपकृतमल्पलेपं गृह्णातु । एनामेव गाथां गाथाद्वयेन विवृणोति—

आयंबिलपारणए छम्मास निरंतरं तु खविऊण । जइ न तरइ छम्मासे एगदिणूण तओ कुणउ ॥ ६१६ ॥

एवं एक्केक्कदिण आयंबिलपारणं खवेऊणं । दिवसे दिवसे गिण्हउ आयबिलमेव निल्लेव ॥ ६१७ ॥

व्याख्या—यदि सर्वकालं क्षपणं कर्तुमशक्तस्तर्हि षण्मासाभिरन्तरं क्षपयित्वा पारणके आचाम्लं करोतु, यदि षण्मासानुपवस्तुं न शक्नोति तत एकदिनोनान् करोतु, एवं षण्मासावधिरेकैकं दिनं परित्यज्याचाम्लेन पारणकं तावत्करोतु यावच्चतुर्थं, एवमप्यसामर्थ्ये दिवसे दिवसे गृह्णात्वाचाम्लं निर्लेपमिति ॥ गुरुराह—

जइ से न जोगहाणी संपइ एसे य होइ तो खमओ । खमणंतरेण आयंबिलं तु नियय तत्र कुणइ ॥ ९१८ ॥

व्याख्या—यदि 'से' तस्य साधोः 'सम्प्रति' वर्तमाने एष्यति वा काले न योगहानिः—प्रत्युपेक्षणादिरूपसंयमयोगभ्रंशो न भवति तर्हि भवतु क्षपकः—षष्ठाष्टमादिचतुर्थादिक्षपणकर्ता । तत्र च क्षपणानामेकैकविनाशान्या पूर्वोक्तस्वरूपाणामन्तरान्तरा पारणकमाचाम्लं करोतु, एवमप्यशक्तो 'नियतं' सदैवाचाम्लरूपं तपः करोतु, केवलं सम्प्रति सेवार्त्तसंहननानां नास्ति तादृशी शक्तिरिति न तदुपदेशो विधीयते । पुनरपि पर आह—

हेट्ठावणि कोसलगा सोवीरगकूरभोइणो मणुया । जइ तेऽवि जवेंति तहा किं नाम जई न जाविंति ? ॥ ९१९ ॥

व्याख्या—'अयोध्यनंयः' महाराष्ट्राः 'कोसलकाः' कोशलदेशोद्भवाः सदैव सौवीरककूरमात्रभोजिनः तेऽपि च सेवार्त्तसंहननाः, ततो यदि तेऽपीत्थं यापयन्ति यावज्जीवं तर्हि तथा—सौवीरककूरमात्रभोजनेन किं न यतयो मोक्षगमनैकबद्धकक्षा यापयन्ति ?, ततः सुकरा मेवं यापनीयं, प्रभूतगुणसम्भवात् । अत्र सूरिराह—

तिय सीय समणाणं तिय उण्हं गिहीण तेणणुन्नाय । तक्काईणं गहणं कट्टरमाईसु भइयव्वं ॥ ९२० ॥

व्याख्या—त्रिकं—वक्ष्यमाणं शीतं श्रमणानां, तेन मतिदिवससमाचाम्लकरणे तत्कायमावत आहारपाकासम्भवेनाजीर्णादयो दोषाः प्रादुष्यन्ति, तथैव त्रिकमुष्णं गृहिणां तेन सौवीरकूरमात्रभोजनेऽपि तेषामाहारपाकभावतो नाजीर्णादिदोषा जायन्ते, तस्मात् तथा यापयतामपि न कश्चिद्दोषः । साधूनां तूक्तनीत्या दोषाः, तेन कारणेन तक्रादिग्रहणं साधूनामनुज्ञातम् । इह भावो यतिना त्रिकविपरि

भोगपरित्यागेन सर्वैरात्मशरीरं यापनीयं, कदाचिदेव च शरीरस्यापाटवे संयमयोगवृद्धिनिमित्तं बलाधानाय विकृतिपरिभोगः, यथा चोक्तं सूत्रे—'अभिक्खणं निव्विगई गया य' इति, विकृतिपरिभोगे च तक्रादेवोपयोगीति तक्रादिग्रहणं, 'कट्टरादिषु' घृतवटिकोन्मिश्रतीमनादिषु ग्रहणं भाज्यं—विकल्पनीयं, ग्लानत्वादिप्रयोजनोत्पत्तौ कार्यं, न शेषकालमिति भावः, तेषां बहुलेपत्वात् मूर्च्छादि-जनकत्वाच्च । अथ किं तक्रादिकम्?, इत्यत आह—

आहार उवहि सेज्जा तिण्णिवि उण्हा गिहीण सीएऽवि । तेण उ जीरइ तेसिं दुहओ उसिणेण आहारो ॥ ६२१ ॥

व्याख्या—आहार उपधिः शय्या एतानि त्रीण्यपि गृहिणां 'शीतेऽपि' शीतकालेऽप्युष्णानि भवन्ति, तेन तेषां तक्रादिग्रहणमन्तरेणापि 'दुहओ'त्ति उभयतो बाह्यतोऽभ्यन्तरतश्च 'उष्णेन' तापेनाहारो जीर्यते, तत्राभ्यन्तरो भोजनवशात्, बाह्यः शय्योपधिवशात् ॥

एयाइं चिय तिन्निवि जईण सीयाइं होंति गिम्हेऽवि । तेणुवहम्मइ अग्गी तओ य दोसा अजीराई ॥ ६२२ ॥

व्याख्या—एतान्येवाहारोपधिशय्यारूपाणि त्रीणि यतीनां 'ग्रीष्मेऽपि' ग्रीष्मकालेऽपि शीतानि भवन्ति, तत्राहारस्य शीतता भिक्षाचर्यायां प्रविष्टस्य बहुषु गृहेषु स्तोकस्तोकलाभेन गृहदेशस्थापनात्, उपधिरप्येकवारं वर्षमध्ये वर्षाकालादर्वाक् प्रक्षालनेन मलिनत्वात् शय्यायास्तु प्रत्यासन्नाग्निकरणाभावेन, तेन कारणेन ग्रीष्मकालेऽप्याहारादीनां शीतत्वसम्भवरूपेणोपहन्यते 'अग्निः' जाठरो वह्निः, तस्मादग्न्युपघाताद्दोषाः 'अजीर्णादय' अजीर्णबुभुक्षामान्द्यादयो जायन्ते, ततस्तक्रादिग्रहणं साधूनामनुज्ञातं, तक्रादिनापि हि जाठरोऽग्निरुद्दीप्यते, तेषामपि तथास्वभावत्वात् । सम्प्रत्यलेपानि द्रव्याणि प्रदर्शयति—

ओयण मउग सत्तुग कुम्मासा रायमास कल वल्ला । तूयरि मसूर मुग्गा मासा य अलेवडा सुक्का ॥ १२३ ॥

व्याख्या—'ओदनः' तण्डुलास्त्रिमक्तं 'मण्डकाः' कणिक्कमयाः प्रतीता एव 'सक्तवः' यवक्षोदरूपाः 'कुल्माषाः' उडदाः 'राजमाषाः' सामान्यतमवल्याः श्वेतचवलिका वा, 'कल' वृत्तचनकाः, सामान्येन वा चनकाः 'वल्लाः' निष्पावाः, 'तुवरी' आढकी 'मसूरा' द्विदलविशेषा मुद्गा माषाश्च प्रतीताः, चशब्दादन्येऽप्येवंविधा धान्यविशेषाः शुष्का अनार्द्रा—अलेपकृतः । सम्प्रत्यल्पलेपानि द्रव्याणि प्रदर्शयति—

उब्भिज्ज पिज्ज कग तक्कोल्लणसूवकंजिकढियाई । एए उ अप्पलेवा पच्छाकम्मं तहिं भइयं ॥ १२४ ॥

व्याख्या—'उद्भेद्या' वस्तुलप्रभृतिशाकभर्जिका 'पेयाः' यूषाग्रः 'कंगूः' कोद्रवौदनः 'तक्रं' तक्रास्यम् 'उल्लणं' येनौदनमार्द्रीकृत्योपभुज्यते 'सूपः' राजमुद्गदाल्यादिः 'काञ्जिकं' सौवीरं 'क्वथितं' तीमनादि, आदिशब्दादन्यस्यैवंविधस्य परिग्रहः, एतानि द्रव्याण्यल्पलेपानि । एतेषु पश्चात्कर्म भाज्यं—कदाचिद्भवति कदाचिन्नेति भावः । सम्प्रति बहुलेपानि द्रव्याणि दर्शयति—

खीर दहि जाउ कट्टर तेल्ल घय फाणिय सपिंडरसे । इच्चाई बहुलेव पच्छाकम्म तहिं नियमा ॥ १२५ ॥

व्याख्या—'क्षीरं' दुग्धं 'दधि' प्रतीतं 'जाउ' क्षीरपेया 'कट्टरं' माणुकसरूपं तैलं घृतं च प्रतीतं, 'फाणितं' गुडपानकं 'सपिण्डरसम्' प्रतीव रसाधिकं सखर्जूरादि इत्यादि द्रव्यजातं बहुलेपं ग्राह्यं । तत्र च पश्चात्कर्म नियमतः, अत एव यतयो दोषभीरव स्तानि न गृह्णन्ति । यदुक्तं—'पच्छाकम्मं तहिं भइय'त्ति सम्प्रति तामेव भजनामष्टभङ्गिकया दर्शयति—

संसट्ठेयर हत्थो मत्तो वि य दव्व सावसेसियर । एएसु अट्ठ भंगा नियमा गहणं तु ओएसु ॥ १२६ ॥

व्याख्या—दातुः सम्बन्धी हस्तः संसृष्टोऽसंसृष्टो वा भवति, मात्रकमपि च येन कृत्वा भिक्षां ददाति तदपि मात्रं संसृष्टमसंसृष्टं वा, द्रव्यमपि सावशेषं निरवशेषं वा, एतेषां च त्रयाणां पदानां संसृष्टस्वसंसृष्टमात्रसावशेषद्रव्यरूपाणां समातिपक्षाणां परस्परं संयोगतोऽष्टौ भङ्गा भवन्ति, ते चामी—संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं १, संसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं २, संसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ३, संसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ४, असंसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं ५, असंसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं ६, असंसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं ७, असंसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ८, एतेषु चाष्टसु भङ्गेषु मध्ये 'नियमात्' निश्चयेन 'ओजस्सु' विषमेषु भङ्गेषु प्रथमतृतीयपञ्चमसप्तमेषु 'ग्रहणम्' आदानं कर्त्तव्यं, न समेषु-द्वितीयचतुर्थषष्ठाष्टमरूपेषु, इयं चात्र भावना—यः हस्तो मात्रं वा द्वे वा स्वयोगेन संसृष्टे वा भवतोऽसंसृष्टे वा न तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि ?—द्रव्यवशेन, तथाहि—यत्र द्रव्यं सावशेषं तत्रैते साध्वर्थं खरण्टिते अपि न दात्री प्रक्षालयति, भूयोऽपि परिवेषणसम्भवात्, यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतस्तद्भाजनव्यापारस्याभावात् हस्तं मात्रं वा प्रक्षालयति, ततो द्वितीयादिषु भङ्गेषु द्रव्ये निरवशेषे पश्चात्कर्मसम्भवान्न कल्पते, प्रथमादिषु तु पश्चात्कर्मासम्भवात्कल्पते इति । उक्तं लिप्तद्वारम्, अथ छर्दितद्वारमाह—

सच्चित्ते अच्चित्ते मीसग तह छड्डुणे य चउभंगो । चउभंगे पडिसेहो गहणे आणाइणो दोसा ॥ १२७ ॥

व्याख्या—छर्दितमुज्झितं त्यक्तमिति पर्यायाः, तच्च त्रिधा, तद्यथा—सचित्तमचित्तं मिश्रं च, तदपि च कदाचित्छर्द्यते 'सचित्ते'

सचित्तमध्ये कदाचिदचित्ते कदाचिन्मिश्रे, तत्र एवं छर्दने सचित्ताचित्तमिश्रद्रव्याणामाधारभूतानामाधेयभूतानां च संयोगचतुर्भङ्गी भवति, अत्र गाथापेक्षवचनं, ततोऽयमर्थः—त्रिस्रश्चतुर्भङ्ग्यो भवन्ति, तद्यथा—सचित्तमिश्रपदाभ्यामेका, सचित्ताचित्तपदाभ्यां द्वितीया, मिश्राचित्तपदाभ्यां तृतीया, तत्र सचित्ते सचित्तं छर्दितं मिश्रे सचित्तं सचित्ते मिश्रं मिश्रे मिश्रमिति प्रथमा, सचित्ते सचित्तम् अचित्ते सचित्तं सचित्तेऽचित्तम् अचित्तेऽचित्तमिति द्वितीया, मिश्रे मिश्रम् अचित्ते मिश्रं मिश्रेऽचित्तम् अचित्तेऽचित्तमिति तृतीया, सर्व सङ्ख्यया द्वादश भङ्गा, सर्वेषु च भङ्गेषु सचित्तः पृथिवीकायः सचित्तपृथिवीकायमध्ये छर्दित इत्यादिरूपतया स्वस्थानपरस्थानाभ्यां षट्त्रिंशत् षट्त्रिंशद्भिन्ना., ततः षट्त्रिंशता द्वादशभिर्गुणिता जातानि चत्वारि शतानि द्वात्रिंशदधिकानि। एतेषु च सर्वेषु भङ्गेषु प्रतिषेधो—भक्तादिग्रहणनिवारणं, यदि पुनर्ग्रहणं कुर्यात्ततः 'आज्ञादय' आज्ञाऽनवस्थामिथ्यात्वविराधनारूपा दोषाः। इह 'आद्यन्तग्रहणे मध्यस्यापि ग्रहण'मिति न्यायादौद्देशिकादिदोषदुष्टानामपि भक्तादीनां ग्रहणे आज्ञादयो दोषा द्रष्टव्या'। सम्प्रति छर्दितग्रहणे दोषानाह—

उसिणस्स छड्डणे देंतओ व डज्झेज्ज कायदाहो वा। सीयपडणम्मि काया पडिए महुबिंदुआहरणं ॥ ६२८ ॥

व्याख्या—उष्णस्य द्रव्यस्य 'छर्दने' समुज्झने ददमानो वा भिक्षां दह्यते, भूम्याश्रितानां वा 'कायानां' पृथिव्यादीनां दाहः स्यात्, शीतद्रव्यस्य भूमौ पतने भूम्याश्रिताः 'कायाः' पृथिव्यादयो विराध्यन्ते, तत्र पतिते मधुबिन्दूदाहरणं—वारत्तपुरं नाम नगरं, तत्राभयसेनो नाम राजा, तस्यामात्यश्च वारत्तकः, अन्यदा च्युतरितमयपरमसम्भ्रान्तसमेषणासमितिसमेतो धर्मघोषनामा संयतो भिक्षार्थं तस्य गृहं प्राविशत्, तद्भार्या च तस्मै भिक्षादानाय घृतखण्डसम्मिश्रपायसपूर्णं स्थालमुत्पाटितवती, अत्रान्तरे च कथमपि ततः

तस्य तन्मिश्रयो घृतबिन्दुर्भूमौ निपतितः, ततो भगवान् धर्मघोषो मुक्तिकाङ्क्षैकनिहितमानसो महोदधिरिव गम्भीरो मेरुरिव निष्प्रकम्पो वसुधेव सर्वसहः शङ्ख इव रागादिभिरनञ्जनो महासुभट इव कर्मरिपुनिवारणनिबद्धकक्षो भगवदुपदिष्टभिक्षाग्रहणविधिविधानकृतोद्यमो भिक्षेयं छर्दितदोषदुष्टा तस्मान्न मे कल्पते इति परिभाव्य ततो निर्जगाम, वारत्तकेन चामात्येन मत्तवारणस्थितेन दृष्टो भगवान् निर्गच्छन्, चिन्तयति च स्वचेतसि—किमनेन भगवता न गृहीता मम गृहे भिक्षेति ?, एवं च यावच्चिन्तयति तावत्तं भूमौ निपतितं स्तोकं घृतबिन्दुं मक्षिकाः समागत्याभिलिलिषन्, तासां च भक्षणाय प्रधाविता गृहगोधिका, गृहगोधिकाया अपि वधाय प्रधावितः सरटः, सरटस्यापि च भक्षणाय प्रधावति स्म मार्जारी, तस्या अपि च वधाय प्रधावितः प्राघूर्णकः श्वा, तस्यापि च प्रतिद्वन्द्वी प्रधावितोऽन्यो वास्तव्य श्वा, ततो द्वयोरपि तयोः शुनोरभूत् परस्परं कलहः, ततः स्वस्वसारमेयपराभवदूनमनस्कतया प्रधावितयोर्द्वयोरपि तत्स्वामिनोरभूत् परस्परमस्त्रास्त्रि युद्धम्, एतच्च सर्वं वारत्तकामात्येन परिभावितं, ततश्चिन्तयति स्वचेतसि—घृतादेर्बिन्दुमात्रेऽपि भूमौ निपतिते यत एवमधिकरणप्रवृत्तिः अत एवाधिकरणभीरुर्भगवान् घृतबिन्दुं भूमौ निपतितमवलोक्य भिक्षां न गृहीतवान्, अहो ! सुदृष्टो भगवता धर्मः, को हि नाम भगवन्तं सर्वज्ञमन्तरेणेत्थमनपायिनं धर्ममुपदेष्टुमीशः ?, न ह्यसर्वज्ञो रूपविशेषं जानाति, एवमसर्वज्ञोऽपि नेत्थं सकलकल्मषमनपायं धर्ममुपदेष्टुमलम्, तस्माद्भगवानेव सर्वज्ञः, स एव च मे जिनो देवता, तदुक्तमेवानुष्ठानं मयाऽनुष्ठातव्यमित्यादि विचिन्त्य संसारविमुखमना मुक्तिवनितासंश्लेषसुखलम्पटः सिंह इव गिरिकन्दराया निजप्रासादाद्विनिर्गत्य धर्मघोषस्य साधोरुपकण्ठं प्रव्रज्यामग्रहीत्, स च महात्मा शरीरेऽपि निःस्पृहो यथोक्तभिक्षाग्रहणादिविधिसेवी संयमानुष्ठानपरायणः स्वाध्यायभावितान्तःकरणो दीर्घकालं संयममनुपाल्य जातस्वल्पकर्मा समुच्छलितदुर्निवार्यवीर्यप्रसरः क्षपकश्रेणिमारुह्य घातिकर्मचतुष्टयं समूलघातं हत्वा, केवलज्ञानलक्ष्मीमासा-

त्रितवान्, तत्र कालक्रमेण सिद्ध इति । उक्तमेषणाद्वारं, सम्प्रति संयोजनादीनि द्वाराणि वक्तव्यानि, तानि च ग्रासैषणारूपाणीति प्रथमतो ग्रासैषणाया निक्षेपमाह—

णामं ठवणा दविए भावे घासेसणा मुणेयव्वा । दव्वे मच्छाहरणं भावंमि य होइ पंचविहा ॥ ६२९ ॥

व्याख्या—ग्रासैषणा चतुर्धा, तद्यथा—नामग्रासैषणा स्थापनाग्रासैषणा 'द्रव्ये' द्रव्यविषया ग्रासैषणा 'भावे' भावविषया ग्रासैषणा । तत्र नामग्रासैषणा स्थापनाग्रासैषणा द्रव्यग्रासैषणाऽपि यावज्ज्ञशरीरभव्यशरीररूपा प्रागेषणेव भावनीया, ज्ञशरीरभव्यशरीरव्यतिरिक्तायां तु ग्रासैषणायां मत्स्यः 'उदाहरणं' दृष्टान्तः । भावविषया पुनर्ग्रासैषणा द्विधा, तद्यथा—आगमतो नोआगमतश्च, तत्रागमतो ज्ञाता तत्र चोपयुक्तः, नोआगमतो द्विधा, तद्यथा—प्रशस्ताऽप्रशस्ता च, तत्र प्रशस्ता संयोजनादिदोषरहिता, अप्रशस्ता संयोजना दिरूपा, तामेव निर्दिशति—'भावंमि य' इत्यादि, भावे—भावविषया पुनः ग्रासैषणा 'पञ्चविधा' संयोजनादिभेदात् पञ्चप्रकारा । तत्र द्रव्यग्रासैषणोदाहरणस्य सम्बन्धमाह—

चरियं व कप्पियं वा आहरणं दुविहमेव नायव्वं । अत्थस्स साहणट्ठा इंधणमिव ओयणट्ठाए ॥ ६३० ॥

व्याख्या—इह विवक्षितस्यार्थस्य 'साधनार्थं' प्रतिपादनार्थं द्विविधमुदाहरणं ज्ञातव्यं, तद्यथा—चरितं कल्पितं च, कथमिव विवक्षितस्यार्थस्य प्रसाधनायोदाहरणं प्रवर्तत इत्याह—'इन्धनमिव ओदनार्थम्' इन्धनमिवौदनस्येति भावः, तत्र प्रस्तुतस्यार्थस्य प्रसाधनार्थमिदं कल्पितमुदाहरणं—कोऽप्येको मत्स्यबन्धी मत्स्यग्रहणनिमित्तं सरो गतवान्, गत्वा च तेन तटस्थेनाग्रभागे मांसपेशी

समेतो गलः सरोमध्ये प्रचिक्षिपे, तत्र च सरसि परिणतबुद्धिरेको महादक्षो जीर्णमत्स्यो वर्तते, स गलगतमांसगन्धमाघ्राय तद्भक्षणाय गलस्य समीपमुपागत्य यत्नतः पर्यन्ते पर्यन्ते सकलमपि मांसं खादित्वा पुच्छेन च गलमाहत्य दूरतोऽपचक्राम, मत्स्यबन्धी च गृहीतो गलेन मत्स्य इति विचिन्त्य गलमाकृष्टवान्, पश्यति मत्स्यमांसपेशीरहितं गलं, ततो भूयोऽपि मांसपेशीसहितं गलं प्रचिक्षेप, तथैव च स मत्स्यो मांसं खादित्वा पुच्छेन च गलमाहत्य पलायितवान्, एवं त्रीन् वारान् मत्स्यो मांसं खादितवान्, न च गृहीतो मत्स्यबन्धेन ।

अह मंसंमि पहीणे झायत मच्छिअं भणइ मच्छो । किं झायसि तं एव सुण ताव जहा अहिरिकोऽसि ॥१३१॥

व्याख्या—अथ मांसे प्रक्षीणे ध्यायन्तं मात्स्यिकं मत्स्यो भणति, यथा किं त्वमेवं 'ध्यायसि' चिन्तयसि ?, शृणु तावद्यथा त्वम् 'अहीकः' निर्लज्जो भवसि ।

तिबलागमुहुम्मुक्को, तिक्खुत्तो वलयामुहे । तिसत्तक्खुत्तो जालेणं, सइ छिन्नोदए दहे ॥ १३२ ॥

व्याख्या—अहमेकदा त्रीन् वारान् बलाकया मुखादुन्मुक्तः, तथाहि—कदाचिदहं बलाकया गृहीतः, तया (तः) तया मुखे प्रक्षेप्तुं ऊर्ध्वमुत्क्षिप्तस्ततो मया चिन्तितं—यद्यपरमुखेनास्या मुखे निपतिष्यामि तर्हि पतितोऽस्य मुखे इति न मे प्राणकुशलं, तस्मात्तिर्यग् भविष्यामीत्येवं विचिन्त्य दक्षतया तथैव कृतं, परिभ्रष्टस्तस्या मुखात्ततो भूयोऽपि तयोर्ध्वमुत्क्षिप्तस्तथैव च द्वितीयमपि वारं मुखात्परिभ्रष्टः, तृतीयवेलायां तु जले निपतितस्ततो दूरं पलायितः, तथा 'त्रिकृत्वः' त्रीन् वारान् 'वलयामुखे' वेलामुखे आयुरूपे निपतितोऽपि दक्षतया शीघ्रं वेलापेन सह विनिर्गतः, तथा 'त्रिसप्तकृत्वः' एकविंशतिवारान् मात्स्यिकेन प्रक्षिप्ते जाले पतितोऽपि यावन्नाद्यापि स मत्स्यबन्धी संको

यद्यपि जालं व्यवधेनैव यथा प्रविष्टस्तेनैव ततो जालाद्विनिर्गत , जालेनेति तृतीया पञ्चम्यर्थे प्रकृत्या, तथा सकृद्–एकवारं मात्स्यिकेन ह्रदमलमन्यत्र सञ्चार्य तस्मिन् ह्रदे छिन्नोदके पशुभिर्मत्स्यैः सहाहं गृहीतः, स च सर्वानपि तान् मत्स्यानेकत्र पिण्डीकृत्य तीक्ष्णायः शलाकायां प्रोतयति, ततोऽहं दक्षतया यथा स मात्स्यिको न पश्यति तथा स्वयमेव तामयःशलाकां वदनेन लगित्वा स्थितः, स च मात्स्यिकस्तान् मत्स्यान् कर्दमलिप्तान् प्रक्षालयितुं सरसि जगाम, तेषु च प्रक्षाल्यमानेष्वन्तरमवाप्य झटित्येव जलमध्ये निमग्नवान् ।

एयारिस मम सत्त, सढ घट्टियघट्टण । इच्छसि गलेण घेत्तु, अहो ते अहिरीयया ॥ १३३ ॥

व्याख्या—एतादृश पूर्वोक्तस्वरूपं मम सत्त्वं ‘शठं’ कुटिल घट्टितस्य—धीवरादिकृतस्योपायस्य घट्टनं–चालनं, ततस्त्वमिच्छसि मां गलेन ग्रहीतुमित्यहो ! ते तव ‘अह्रीकता’ निर्लज्जतेति । तदेवमुक्तो ग्रहणैषणाया दृष्टान्तः, सम्प्रति भावग्रासैषणायामुपनयः क्रियते–मत्स्यस्थानीयः साधुर्मांसस्थानीयं भक्तपानीयं मात्स्यिकस्थानीयो रागादिदोषगणः, यथा न छलितो मत्स्य उपायशतेन तथा साधुरपि भक्तादिकमभ्यवहरन्नात्मानमनुशास्तिप्रदानेन रक्षेत् । तामेवानुशास्तिं प्रदर्शयति—

बायालीसेसणसंकडंमि गहणंमि जीव ! न हु छलिओ । इण्हिं जह न छलिज्जसि भुंजतो रागदोसेहिं ॥१३४॥

व्याख्या—एषणाग्रहणेन एषणागता दोषा अभिधीयन्ते, ततोऽयमर्थः–द्विचत्वारिंशत्सङ्ख्या ये एषणादोषा गवेषणाग्रहणैषणा दोषास्तैः ‘सङ्कटे’ विषमे ‘ग्रहणे’ भक्तपानादीनामादाने हे जीव ! त्वं नैव छलितः, तत इदानीं सम्प्रति भुञ्जानो रागद्वेषाभ्यां यथा न छल्यसे तथा कर्तव्यं । सम्प्रति तामेव ग्रासैषणां प्रतिपादयति—

घासेसणा उ भावे होइ पसत्था तहेव अपसत्था । अपसत्था पंचविहा तव्विवरीया पसत्था उ ॥ ३३५ ॥

व्याख्या—'भावे' भावविषया ग्रासैषणा द्विविधा, तद्यथा—प्रशस्ताऽप्रशस्ता च, तत्राप्रशस्ता पञ्चविधा संयोजनातिप्रमाणाङ्गारधूमनिष्कारणरूपा, तद्विपरीता संयोजनादिदोषरहिता प्रशस्ता । सम्प्रति संयोजनामेव व्याचिख्यासुः प्रथमवस्तुनः निक्षेपमाह—

दव्वे भावे संजोअणा उ दव्वे दुहा उ बहिरंतो । भिक्खं चिय हिंडंतो संजोयंतंमि बाहिरिया ॥ ३३६ ॥

व्याख्या—संयोजना द्विधा, तद्यथा—'द्रव्ये' द्रव्यविषया 'भावे' भावविषया, तत्र 'द्रव्ये' द्रव्यविषया संयोजना द्विविधा, तद्यथा—बहिरन्तश्च, तत्र यदा भिक्षार्थमेव हिण्डमानः सन् क्षीरादिकं खण्डादिभिः सह रसपुष्टया रसविशेषोत्पादनाय संयोजयति एषा 'बाह्या' बहिर्भवा संयोजना । एतामेव स्पष्टं भावयति—

खीरदहिसूवकट्टरलंभे गुडसप्पिवडगवालुंके । अंतो उ तिहा पाए लंबण वयणे विभासा उ ॥ ३३७ ॥

व्याख्या—'क्षीरदधिसूपानां' प्रतीतानां कट्टरस्य—तीमनोमिश्रघृतवटिकारूपस्य देशविशेषप्रसिद्धस्य लाभे सति तथा गुडस्य सर्पिषो वटकानां वालुङ्कानां च प्राप्तौ सत्यां रसपुष्टया रसविशेषोत्पादनायानुकूलद्रव्यैः सह संयोजनां यत्करोति बहिरेव भिक्षामटन् एषा बाह्या द्रव्यसंयोजना । अभ्यन्तरा पुनर्यद्वसतावागत्य भोजनवेलायां संयोजयति, तथा चाह—'अन्तस्तु' अभ्यन्तरा पुनः संयोजना 'त्रिधा' त्रिप्रकारा, तद्यथा—पात्रे लम्बने वदने च, नवरं 'लम्बनं' कवलः, ततोऽस्यास्त्रिविधाया अपि 'विभाषा' व्याख्या कर्त्तव्या, सा चैवं—

यद्द्रव्यं यस्य द्रव्यस्य रसविशेषाधायि तदेन तत्र पात्रे रसहेतुतया संयोजयति, यथा सुकुमारिकादिकं खण्डादिना सह, एषा पात्रेऽभ्यन्तरा संयोजना, यदा तु हस्तगतमेव कवलमुत्पादितचूर्णं सुकुमारिकादि खण्डादिना सह संयोजयति तदा कवलेऽभ्यन्तरा संयोजना, यदा पुनर्वदने कवलं प्रक्षिप्य ततः शाकनकं प्रक्षिपति यद्वा मण्डकादिकं पूर्वं प्रक्षिप्य पश्चाद्गुडादिकं प्रक्षिपति एषा वदनेऽभ्यन्तरा संयोजना । एषा च द्रव्यसंयोजना समस्ताऽप्यप्रशस्ता, यतोऽनयाऽऽत्मानं रागद्वेषाभ्यां संयोजयति ॥ तथा चाशुमेव 'दोषं वक्तुकाम आह—

संयोयणाए दोसो जो संजोएइ भत्तपाणं तु । दव्वाई रसहेउं वाघाओ तस्सिमो होइ ॥ ६३८ ॥

व्याख्या—'संयोजनायां' प्रागुक्तस्वरूपायामयं दोषः—'दव्वाई रसहेउ'त्ति, प्राकृतत्वादादिशब्दस्य व्यत्यासेन योजना, ततोऽयमर्थः—द्रव्यस्य सुकुमारिकादेः रसहेतोः—रसविशेषोत्पादनाय, आदिशब्दात्सुखमन्यादिनिमित्तं च, यो भक्तं पानं चातु द्रव्यान्तरेण खण्डादिना सह संयोजयति तस्य साधोरयं—वक्ष्यमाणः 'व्याघातः' दीर्घदुःखोपनिपातरूपो भवति ॥ तमेव भावयन् भावसंयोजनामप्याह—

संजोयणा उ भावे संजोएऊण ताणि दव्वाइं । संजोयइ कम्मेणं कम्मेण भवं तओ दुक्खं ॥ ६३९ ॥

व्याख्या—यानि हि सुकुमारिकाखण्डादीनि द्रव्याणि रसहेतुतया संयोजयत्यात्मानमप्रशस्तेन रागद्वेषात्मकेन भावेन संयोजयति, एषा 'भावे' भावविषया संयोजना, ततस्तानि द्रव्याणि तथा संयोज्यात्मनि 'कर्म' ज्ञानावरणीयादिकं 'संयोजयति' सम्बध्नाति,

सप्तमाति, सम्पमाति,

कर्मणा च संयोमयाति 'भवं' दीर्घतरं संसारं, ससाध भवाषींघवरसस...
करोति तस्येत्यमनन्तकालसंवेयो दुःखनिपात इति । सम्प्रत्यस्या एव द्रव्यसंयोजनाया अपवादमाह—

पचे य पउरलभे भुत्तुव्वरिए य सेसममणुण्णा । दिट्ठो संजोगो खलु अह कम्मो (कमो) तस्सिमो होइ ॥१४०॥

व्याख्या—'प्रत्येकम्' एकैकं साधुसङ्घाटकं प्रति 'प्रचुरलाभे' विपुलघृतादिमाप्तौ सत्यां यदि कथमपि भुक्ते सति 'घः' समु पये शेषं—उद्धरितं भवति, ततस्तस्य शेषस्य निर्गमनार्थं दृष्टः—अनुज्ञातस्तीर्थकरादिभिः खलु संयोगः, उद्धरितं हि घृतादि न खण्डा दिकमन्तरेण मण्डकादिभिरपि सह भोक्तुं शक्यते, मायस्तृप्तत्वात्, न च परिष्ठापनं युक्तं, घृतादिपरिष्ठापने स्निग्धत्वात् पश्चादपि कीटिकादिसत्त्वव्यापादनसम्भवेन शुद्धसंयमस्य सम्भवात्, तत उद्धरितघृतादिनिर्गमनार्थं खण्डादिभिरपि तस्य संयोजनं न दोषाय एष तावदयमपवादः संयोजनायाः । अथान्योऽपि तस्य संयोगस्यायं—वक्ष्यमाणः क्रमो भवन परिपाटीरूपो भवति ॥ तमेवाह—

रसहेउं पडिसिद्धो संयोगो कप्पए गिलाणट्ठा । जस्स व अभत्तछंदो सुहोचिओऽभाविओ जो य ॥ १४१ ॥

व्याख्या—'रसहेतो' रसविशेषोत्पादनाय संयोगः प्रतिषिद्धस्तीर्थकरादिभिः, यावता पुनः स एव संयोगो 'ग्लानार्थं' ग्लानसज्जीकरणार्थं कल्पते, यद्वा यस्य 'अभक्तच्छन्दः' भक्तारोचकः, यश्च सुखोचितो—राजपुत्रादिः यश्चाप्यभावित —असञ्जात सम्यक्परिणामः शैक्षकस्तस्य निमित्तं कल्पते । उक्तं संयोजनाद्वारम्, अथाहारप्रमाणद्वारमाह—

बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥१४२॥

व्याख्या—पुरुषस्य कुक्षिपूरक आहारो मध्यमप्रमाणो द्वात्रिंशत्कवलाः 'किले'त्याहारस्य मध्यमप्रमाणतासूचकः, महेलायाः कुक्षिपूरक आहारो मध्यमप्रमाणोऽष्टाविंशतिः कवलाः, नपुंसकस्य चतुर्विंशतिः, स चात्र न गृहीतो, नपुंसकस्य प्रायः प्रव्रज्यानर्हत्वात्, कवलानां प्रमाणं कुक्कुट्यण्डं, कुक्कुटी च द्विधा—द्रव्यकुक्कुटी भावकुक्कुटी च, द्रव्यकुक्कुट्यपि द्विधा—उदरकुक्कुटी गलकुक्कुटी च, तत्र साधोर्यत् यावन्मात्रेणाहारेण न न्यूनं नाप्याध्मातं भवति स आहार उदरकुक्कुटी, उदरपूरक आहारः कुक्कुटीव वा उदरकुक्कुटीति मध्यपदलोपिसमासाश्रयणात्, तस्य द्वात्रिंशत्तमो भागोऽण्डकं, तत्प्रमाणं कवलस्य, तथा गलः कुक्कुटीव गलकुक्कुटी, गल एव कुक्कुटीत्यर्थः, तस्यान्तरालमण्डकं, किमुक्तं भवति ?—अविकृतास्यस्य पुंसो गलान्तराले यः कवलोऽविकलः प्रविशति तावत्प्रमाणं [ कवलस्य, ] कवलप्रमाणात् अथवा शरीरमेव कुक्कुटी तन्मुखमण्डकं, तत्राक्षिकपोलभ्रुवां विकृतिमनापाद्य यः कवलो मुखे प्रविशति तत्प्रमाणम्। अथवा कुक्कुटी—पक्षिणी तस्या अण्डकं प्रमाणं कवलस्य, भावकुक्कुटी येनाहारेण भुक्तेन न न्यूनं नाप्यत्याध्मातमुदरं भवति धृतिं च समुद्वहति ज्ञानदर्शनचारित्राणां च वृद्धिरुपजायते तावत्प्रमाण आहारो भावकुक्कुटी, अत्र भावस्य प्राधान्यविवक्षया प्राक् द्रव्यकुक्कुट्युपयुक्त इव भावकुक्कुट्युक्तः, तस्य द्वात्रिंशत्तमो भागोऽण्डकं, तत्प्रमाणं कवलस्य।

एत्तो किणाइ हीणं अद्धं अद्धद्धगं च आहारं। साहुस्स बिंति धीरा जायामायं च ओमं च ॥ १४३ ॥

व्याख्या—'एतस्मात्' द्वात्रिंशत्कवलप्रमाणाहारात् 'किणाइ' इति किञ्चिन्मात्रया एकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा कवलैः साधोर्हीनतरं यावदर्धम् अर्धस्याप्यर्धमाहारं यात्रामात्राहारं धीराः—तीर्थकरादयो ब्रुवते, ऊनं च। एष यात्रामात्राहार एष एव चावमाहार इति भावः। उक्तमाहारप्रमाणं, सम्प्रति प्रमाणदोषानाह—

17

पगामं च निगामं च, पनीयं भत्तपाणमाहरे । अइयहुय अइयहुसो, पमाणदोसो मुणेयव्वो ॥ १४४ ॥

व्याख्या—यः प्रकामं निकामं प्रणीत वा भक्तपानमाहारयति तथाऽतिबहुकमतिबहुशश्च तस्य प्रमाणदोषो ज्ञातव्यः । साम्प्रतं प्रकामादिस्वरूपमाह—

यत्तीसाइ परेण पगाम निच्च तमेव उ निकाम । ज पुण गलंतनेहं पणीयमिति तं बुहा बेंति ॥ १४५ ॥

व्याख्या—द्वात्रिंशदादिकवलेभ्य 'परेण' परतो भुञ्जानस्य यद्भोजनं तत्प्रकामभोजनं, 'तमेव तु' प्रमाणातीतमाहारं प्रतिदिवसमभ्यवो निकामभोजनं, यत्पुनर्गलत्स्नेहं भोजनं तत्प्रणीतं 'बुधाः' तीर्थकृदादयो ब्रुवते । तथा—

अइयहुयं अइवहुसो अइप्पमाणेण भोयणं भोत्तु । हाएज्ज व वामिज्ज व मारिज्ज व तं अजीरत ॥ १४६ ॥

व्याख्या—अतिबहुकं—वक्ष्यमाणस्वरूपमतिबहुशः—अनेकशोऽप्यथवा सदा भोजनं—भुक्तं सत् 'हादयेत्' अतीसारं कुर्यात्, तथा वामयेत्, यद्वा तदजीर्णं मारयेत्, तस्माच्च प्रमाणातिक्रमं कर्तव्य इति । साम्प्रतमतिबहुकादिस्वरूपमाह—

बहुयातीयमइयहु अइयहुसो तिन्नि तिन्नि व परेणं । तं चिय अइप्पमाण भुजइ जं वा अतिप्पतो ॥ १४७ ॥

व्याख्या—बहुकातीतम्—अतिशयेन बहु, अतिशयेन निजप्रमाणाभ्यधिकमित्यर्थः, तथा दिवसमध्ये यत्त्रीन् वारान् भुङ्क्ते, त्रिभ्यो वा वारेभ्यः परतस्तद्भोजनमतिबहुशः, तदेव वारत्रयातीतमतिप्रमाणमुच्यते, 'अइप्पमाणे'त्यवयवो व्याख्यातः, अस्यैव प्रकारान्तरेण

व्याख्यानद्वारं—मुंके पद्रान्तुप्पन् एप 'अप्पपाण' इत्यस्य अन्नस्यार्थः, 'अप्पमाणे' इत्यत्र च नकारस्यापस्ताच्छील्यविवक्षायां यद्वा भाउनलप्पणतयादिति। सम्प्रति प्रमाणयुक्तहीनतरादिभोजने गुणमाह—

हियाहारा मियाहारा, अप्पाहारा य जे नरा। न ते विज्जा तिगिच्छंति, अप्पाणं ते तिगिच्छगा ॥ १४८ ॥

व्याख्या—हितं द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यतोऽविरुद्धानि द्रव्याणि, भावतः पथ्यमीर्यं, तदाहारयन्ति ये ते हिताहाराः, 'मितं' प्रमाणोपेतमाहारयन्तीति मिताहाराः, द्वात्रिंशत्कवलप्रमाणान्न्यूनतरमल्पतरं वाऽऽहारयन्तीत्यल्पाहाराः, सर्वत्र वा बहुव्रीहिः, हित आहारो येषां ते हिताहारा इत्यादि, एवंविधा ये नरास्तान् वैद्या न चिकित्सन्ति, हितमितादिभोजनेन तेषां रोगस्यैवासम्भवात्, किन्त्वेवं भूतत्व एव रोगोत्थानप्रतिषेधकरणेनात्मनैवात्मनस्ते चिकित्सकाः। साम्प्रतमहितविरूपमाह—

तेल्लदहिसमाओगा अहिओ खीरदहिकंजियाणं च। पत्थं पुण रोगहरं न य हेऊ होइ रोगस्स ॥ १४९ ॥

व्याख्या—दधितैलयोस्तथा क्षीरदधिकाञ्जिकानां च यः समायोगः सोऽहितः, विरुद्ध इत्यर्थः, तथा चोक्तम्—"शाकाम्ल-तिलपिण्याकमपित्यलवणैः सह। क्षीरदधिमत्स्यैश्च, प्रायः क्षीरं विरुध्यते ॥ १ ॥" इत्यादि, अविरुद्धद्रव्यमीलनं पुनः पथ्यं, तच्च 'रोगहरं' प्रादुर्भूतरोगविनाशकरं, न च भाविनो रोगस्य 'हेतुः' कारणम्, उक्तं च—"अहिताशनसम्पर्कात्, सर्वरोगोद्भवो यतः। व्याधहरितं त्याज्यं, व्याप्यं पथ्यनिषेवणम् ॥ १ ॥" साम्प्रतं मितं व्याचिख्यासुराह—

अद्धमसणस्स सव्वंजणस्स कुज्जा दवस्स दो भागे। वाऊपवियारणट्ठा छब्भायं ऊणयं कुज्जा ॥ १५० ॥

व्याख्या—इह किल सर्वमुदरं षड्भिर्भागैर्विभज्यते, तत्र चार्द्धं भागत्रयरूपमशनस्य सव्यञ्जनस्य—तक्रशाकादिसहितस्याशा
कुर्यात्, तथा द्वौ भागौ द्रवस्य पानीयस्य, षष्ठं तु भागं वायुप्रविचारणार्थमूनं कुर्यात् । इह कालापेक्षया तथा यथाऽऽहारस्य प्रमाण
भवति, कालश्च त्रिधा, तथा चाह—

सीओ उसिणो साहारणो य कालो तिहा मुणेयव्वो । साहारणम्मि काले तत्थाहारे इमा मत्ता ॥ १५१ ॥

व्याख्या—त्रिधा कालो ज्ञातव्यः, तद्यथा—शीत उष्णः साधारणश्च, तत्र तेषु कालेषु मध्ये साधारणे काले 'आहारे' आहार
विषया 'इयम्' अनन्तरोक्ता 'मात्रा' प्रमाणं—

सीए दवस्स एगो भत्ते चत्तारि अहव दो पाणे । उसिणे दवस्स दोन्नि उ तिन्नि व सेसा उ भत्तस्स ॥१५२॥

व्याख्या—'शीते' अतिशयेन शीतकाले 'द्रवस्य' पानीयस्यैको भागः कल्पनीयः, चत्वारः 'भक्ते' भक्तस्य, मध्यमे तु शीत-
काले द्वौ भागौ पानीयस्य कल्पनीयौ त्रयस्तु भागा भक्तस्य, चशब्दो मध्यमशीतकालसूचनार्थः, तथा 'उष्णे' मध्यमोष्णकाले द्वौ
भागौ 'द्रवस्य' पानीयस्य कल्पनीयौ, शेषास्तु त्रयो भागा भक्तस्य, अत्युष्णे च काले त्रयो भागा द्रवस्य शेषौ द्वौ भागौ भक्तस्य,
चशब्दोऽत्युष्णकालसमूचनार्थं, सर्वत्र च षष्ठो भागो वायुप्रविचारणार्थं मुत्कलो मोक्तव्यः । सम्प्रति भागानां स्थिरचरविभाग
प्रदर्शनार्थमाह—

एगो दवस्स भागो अवट्ठितो भोयणस्स दो भागा । वड्ढंति व हायंति व दो दो भागा उ एक्केक्के ॥ १५३ ॥

व्याख्या—एको द्रवस्य भागोऽवस्थितो द्वौ भागौ भोजनस्य, शेषौ यौ द्वौ द्वौ भागौ एकैकस्मिन्, भक्ते पाने चेत्यर्थः, वर्द्धेते वा हीयेते वा, वृद्धिं वा व्रजतो हानिं वा व्रजत इत्यर्थः, तथाहि—अतिशीतकाले द्वौ भागौ भोजनस्य वर्द्धेते अत्युष्णकाले च पानीयस्य अत्युष्णकाले च द्वौ भागौ भोजनस्य हीयेते अतिशीतकाले च पानीयस्य । एतदेव स्पष्टं भावयति—

एत्थ उ तइयचउत्था दोण्णि य अणवट्ठिया भवे भागा । पंचमछट्ठो पढमो बिइओऽवि अवट्ठिया भागा ॥१५४॥

व्याख्या—आहारविषयौ तृतीयचतुर्थौ भागावनवस्थितौ, यौ अतिशीतकाले अपरोऽप्युष्णकाले च न भवतः, तथा यः पान विषयः पञ्चमो भागो षष्ठ वायुप्रविचारणार्थं षष्ठो भागः यौ च प्रथमद्वितीयावाहारविषयौ एते सर्वेऽपि भागा अवस्थिताः, न कदाचिदपि न भवन्तीति भावः । तदेवमुक्तं प्रमाणद्वारम्, अथ साङ्गारसधूमद्वारमाह—

तं होइ सइंगालं जं आहारेइ मुच्छिओ संतो । तं पुण होइ सधूमं जं आहारेइ निंदतो ॥ १५५ ॥

व्याख्या—यद्भवति भोजनं साङ्गारं यत्प्रशस्तविशिष्टगन्धरसास्वादवशतो जाततद्विषयमूर्च्छः सन् अहो ! मिष्टं अहो ! सुसम्भृतं अहो ! स्निग्धं सुपक्वं सुरसमित्येवं प्रशंसन्नाहारयति, तत्पुनर्भवति भोजनं सधूमं यदप्रशस्तविरूपरसगन्धास्वादतो जाततद्विषयप्रद्वेषः ककिष सन् अहो ! विरूपं कथितमपक्वमसंस्कृतमलवणं चेति निन्दन्नाहारयति, अयं चात्र भावार्थः—इह द्विविधा अङ्गाराः, तद्यथा—द्रव्यतो भावतश्च, तत्र द्रव्यतः कृशानुदग्धाः खदिरादिन्धनसमुत्थिता, भावतो रागाग्निना निर्दग्धं चरणेन्धनं । धूमोऽपि द्विधा, तद्यथा—द्रव्यतो भावतश्च, तत्र द्रव्यतो योऽर्द्धदग्धानां काष्ठानां सम्बन्धी, भावतो द्वेषाग्निना दह्यमानस्य चरणेन्धनस्य सम्बन्धी कलुषभावो निन्दात्मकः, ततः सह अङ्गारेण वर्त्तते तत्साङ्गारं, धूमेन सह वर्त्तते यत्तत्सधूमं । सम्प्रत्यङ्गारधूमयोरेकस्वरूपमाह—

अंगारत्तमपत्तं जलमाण इंधण सधूम तु । अगारत्ति पवुच्चइ त चिय दड्ढं गए धूमे ॥ १५६ ॥

व्याख्या—अङ्गारत्वमप्राप्तं ज्वलदिन्धनं सधूममुच्यते, तदेवेन्धनं दग्धं धूमे गते सत्यङ्गार इति, एवमिहापि चरणेन्धनं रागाग्निना निर्दग्धं सदङ्गार इत्युच्यते, द्वेषाग्निना तु दह्यमान चरणेन्धन सधूमं, निन्दात्मककलुषभावरूपधूमसम्मिश्रत्वात् । एतदेव भावयति—

रागग्गिसपलित्तो भुंजतो फासुयपि आहार । निद्दड्ढगालनिभ करेइ चरणिंधणं खिप्पं ॥ १५७ ॥

व्याख्या—प्रासुकमप्याहारं भुञ्जानो रागाग्निसम्प्रदीप्तश्चरणेन्धनं निर्दग्धाङ्गारनिभं क्षिप्रं करोति ।

दोसग्गीवि जलंतो अप्पत्तियधूमधूमियं चरण । अंगारमित्तसरिसं जा न हवइ निद्दही ताव ॥ १५८ ॥

व्याख्या—द्वेषाग्निरपि ज्वलन् 'अप्रीतिरेव' कलुषभाव एव धूमः अप्रीतिधूमः तेन धूमितं 'चरणं' चरणेन्धन यावदङ्गार मात्रसदृशं न भवति तावन्निर्दहति । तत इदमागतं—

रागेण सइंगाल दोसेण सधूमगं मुणेयव्वं । छायालीस दोसा बोद्धव्वा भोयणविहीए ॥ १५९ ॥

व्याख्या—रागेणाऽऽध्मातस्य यद्भोजन तत्साङ्गारं, चरणेन्धनस्याङ्गारभूतत्वात्, द्वेषेणाऽऽध्मातस्य तु यद्भोजनं तत्सधूमं, निन्दा त्मककलुषभावरूपधूमसम्मिश्रत्वात् । तदेवं भोजनविधौ सर्वसङ्ख्यया षट्चत्वारिंशद्दोषा बोद्धव्याः, तद्यथा—पञ्चदश उद्गमदोषाः, अध्यवपूरकस्य मिश्रजातेऽन्तर्भावविवक्षणात्, षोडश उत्पादनादोषा दश एषणादोषाः संयोजनादीनां च पञ्चकमिति । कीदृशः पुनरा हारः साधुना भोक्तव्य इत्याह—

आहारति तवस्सी विगइंगालं च विगयधूमं च । झाणज्झयणनिमित्तं एसुवएसो पवयणस्स ॥ ६६० ॥

व्याख्या—'तपस्विनः' यथोक्ततपोऽनुष्ठाननिरता आहारयन्ति भोजनं विगताङ्गारं रागाकरणात्, विगतधूमं च द्वेषाकरणात्, तदपि न निष्कारणं किन्तु ध्यानाध्ययननिमित्तम्, एष उपदेशः 'प्रवचनस्य' भगवच्छासनस्य । उक्तेषमुक्तं साङ्गारं सधूमद्वारम्, अधुना कारणद्वारमाह—

छहिं कारणेहिं साहू आहारिंतोऽवि आयरइ धम्मं । छहिं चेव कारणेहिं णिज्जूहिंतोऽवि आयरइ ॥ ६६१ ॥

व्याख्या—षड्भिः कारणैर्वक्ष्यमाणस्वरूपैः साधुराहारयन्नप्याहारमाचरति धर्मं, षड्भिरेव च कारणैर्वक्ष्यमाणस्वरूपैर्भोजनाकरणनिबन्धनैः 'निज्जूहिंतोऽवि'त्ति परित्यजन्नप्याचरति धर्मं । तत्र यैः षड्भिः कारणैराहारमाहारयति तानि निर्दिशति—

वेयण वेयावच्चे इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥ ६६२ ॥

व्याख्या—इह पदैकदेशे पदसमुदायोपचारात् 'वेयण'त्ति क्षुद्वेदनोपशमनाय, तथाऽऽचार्यादीनां वैयावृत्यकरणाय, तथेर्यापथसंशोधनार्थं, तथा प्रेक्षादिसंयमनिमित्तं, तथा 'प्राणप्रत्ययार्थं' प्राणसन्धारणार्थं, षष्ठं पुनः कारणं 'धर्मचिन्तार्थं' धर्मचिन्ताऽभिवृद्ध्यर्थं भुङ्क्ते इति क्रियासम्बन्धः । एनामेव गाथां गाथाद्वयेन विवृण्वन्नाह—

नत्थि छुहाए सरिसा वियणा भुंजेज्ज तप्पसमणट्ठा । छाओ वेयावच्चं ण तरइ काउं अओ भुंजे ॥ ६६३ ॥

इरिअं नऽवि सोहेई पेहाईअं च संजमं काउं । थामो वा परिहायइ गुणऽणुप्पेहासु अ असत्तो ॥ ६६४ ॥

॥ ६६४ ॥

व्याख्या—नास्ति क्षुधा—बुभुक्षया सदृशी वेदना, उक्तं च—" पंथसमा ...
मय छुहासमा वेयणा नत्थि ॥ १ ॥ तं नत्थि जं न बाहइ तिल्लुसमित्तंपि एत्थ कायस्स । सविसेसं सव्वदुहाइं दाव ...
॥ २ ॥" ततः ' वेदनाशमनार्थं ' क्षुद्वेदनोपशमनार्थं भुञ्जीत, तथा ' छातो ' बुभुक्षितः सन् वैयावृत्यं न शक्नोति कर्तुं, यथा चोक्तं—" गलेइ
पलं उच्छाहो अवेइ सिढिलेइ सयलवावारे । नासइ सत्तं अरई विवड्ढए असणरहियस्स ॥ १ ॥" अतो वैयावृत्त्यकरणाय भुञ्जीत । तथा बुभु
क्षितः सन्नीर्यापथं न विशोधयति, अशक्तत्वात्, अतस्तच्छोधननिमित्तं चाऽश्नीयात्, तथा क्षुधार्त्तः सन् न प्रेक्षादिकं संयमं विधातुमलमतः
संयमाभिवृद्ध्यर्थं भुञ्जीत, तथा स्थाम बलं प्राण इत्येकोऽर्थः, तद्बुभुक्षितस्य ' परिहीयते ' परिहानिं याति ततोऽश्नीयात्, तथा गुणनं—
ग्रन्थपरावर्त्तनमनुप्रेक्षा—चिन्ता तयोः, उपलक्षणमेतत्, वाचनादिष्वपि बुभुक्षितः सन् अशक्तः—असमर्थो भवति ततोऽश्नीयात् । इत्य
भूतैश्च षड्भिः कारणैः समस्तैरन्यतमेन वा कारणेनाहारयन्नातिक्रामति धर्ममिति । सम्प्रत्यभोजनकारणप्रतिपादनार्थं सम्बन्धमाह—

अहव ण कुज्जाहारं, छहिं ठाणेहिं संजए । पच्छा पच्छिमकालम्मि, काउं अप्पक्खमं खमं ॥ ६६५ ॥

व्याख्या—अथवा षड्भिः स्थानैः—वक्ष्यमाणस्वरूपैः संयत आहारं न कुर्यात्, तत्र ' विचित्रा सूत्रगति 'रिति षष्ठं शरीरव्यवच्छे-
दलक्षणकारणं व्याख्यानयति—' पच्छा ' इत्यादि, पश्चात्—शिष्यनिष्पादनादिसकलकर्त्तव्यतानन्तरं ' पश्चिमे काले ' पाश्चात्ये वयसि

---

( १ ) पन्थसमा नास्ति जरा दारिद्र्यसमश्च पराभवो नास्ति । मरणसमं नास्ति भयं क्षुधासमा वेदना नास्ति ॥ १ ॥ तन्नास्ति यन्न बाधते तिलतुषमात्रमप्यत्र कायम् । सविशेषं सर्वदुःखानि ददाति आहाररहितस्य ॥ २ ॥ ( २ ) गलति बलमुत्साहोऽपैति शिथिलयति सकलव्यापारान् । नश्यति सत्त्वमरतिर्विवर्धतेऽशनरहितस्य ॥ १ ॥

ममणचरणस्स मारो भिक्खायरिया भिणहिं पन्नत्ता। एत्थ परितप्पमाण त जाणसु मंदसंवेगं ॥ २ ॥ नाणचरणस्स मूलं भिक्खायरिया भिणोहिं पन्नत्ता। एत्थ उ उज्जममाण त जाणसु तिव्वसंवेगं ॥ ३ ॥ पिंडं असोहयंतो अचरित्ती एत्थ संसओ नत्थि। चारित्तंमि असंते निरत्थिया होइ दिक्खा उ ॥ ४ ॥ चारित्तंमि असंतंमि, निव्वाणं न उ गच्छइ। निव्वाणंमि असंतंमि, सव्वा दिक्खा निरत्थगा ॥ ५ ॥ तस्मादुद्गमादिदोषपरिशुद्धः पिण्ड एषयितव्य इति।

एसो आहारविही जह भणिओ सव्वभावदंसीहिं। धम्मावस्सगजोगा जेण न हायंति तं कुज्जा ॥ ६७० ॥

व्याख्या—एष 'आहारविधिः' पिण्डविधि 'यथा' येन प्रकारेण भणितस्तीर्थकरादिभिस्तथा कालानुरूपस्वमतिविभवेन मया व्याख्यात इति वाक्यशेषः। अपवादमाह—'धम्मे'त्यादि 'धर्मावश्यकयोगाः' श्रुतधर्मचारित्रधर्मप्रतिक्रमणादिव्यापारा येन 'न हीयन्ते' न हानिं व्रजन्ति तत्कुर्यात्, तथा तथाऽपवादं सेवेतेति भावः। साधुना हि यथायथमुत्सर्गापवादस्थितेन भवितव्यम्। या चापवादमासेवमानस्याशठस्य विराधना साऽपि निर्जराफला, तथा चाह—

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स। सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥ ६७१ ॥

व्याख्या—यतमानस्य 'सूत्रोक्तविधिसमग्रस्य' सूत्रोक्तविधिपरिपालनपूर्णस्य अध्यात्मविशोधियुक्तस्य, रागद्वेषाभ्यां रहितस्येति भाव, या भवेत् 'विराधना' अपवादप्रत्यया सा भवति निर्जरा फला, इयमत्र भावना-कृतयोगिनो गीतार्थस्य कारणमन्तरेण यतनयाऽप्यासेवमानस्य या विराधना सा सिद्धिफला भवतीति। तदेवं निक्षिप्तं पिण्डपदमेषणापदं च, तन्निक्षेपकरणाच्चाभिहितो नामनिक्षेपः एषानामनन्तरोऽपूर्णा पिण्डनिर्युक्तिरिति।

येनैषा पिण्डनिर्युक्तिर्युक्तिरम्या विनिर्मिता । द्वादशाङ्गविदे तस्मै, नमः श्रीभद्रबाहवे ॥ १ ॥ व्याख्याता यैरेषा विषमपदार्थाऽपि सुस्पष्टवचोभिः । अनुपकृतपरोपकृतो विवृतिकृतस्तानमस्कुर्वे ॥ २ ॥ इमां च पिण्डनिर्युक्तिमतिगम्भीरां विवृण्वता कुशलम् । यदवापि मलयगिरिणा सिद्धिं तेनाश्नुतां लोकः ॥ ३ ॥ अर्हन्तः शरणं सिद्धाः, शरणं मम साधवः । शरणं जिननिर्दिष्टो, धर्म्मः शरणमुत्तमः ॥ ४ ॥ एवं ग्रन्थाग्रसङ्ख्या ७००० पिण्डनिर्युक्तिः समाप्ता ।

इति श्रीमन्मलयगिर्याचार्यवर्यविहितविवृतिवृता श्रीमद्भद्रबाहुस्वामिसङ्कलिता पिण्डनिर्युक्तिः समाप्ता ।

समणगणस्स माओ भिक्खायरिया जिणेहिं पन्नत्ता। एत्थ परितप्पमाणं त जाणसु मंदसंवेग ॥ २ ॥ नाणचरणस्स मूलं भिक्खायरिया जिणेहिं पन्नत्ता। एत्थ उ उज्जममाणं त जाणसु तिव्वसंवेग ॥ ३ ॥ पिंड असोहयंतो अचरित्ती एत्थ संसओ नत्थि। चारित्तम्मि असंतम्मि निरत्थिया होइ दिक्खा उ ॥ ४ ॥ चारित्तम्मि असंतम्मि, निव्वाणं न उ गच्छइ। निव्वाणम्मि असंतम्मि, सव्वा दिक्खा निरत्थगा ॥ ५ ॥ तस्मादुद्गमादिदोषपरिशुद्धं पिण्डं प्रयतितव्य इति।

एसो आहारविही जह भणिओ सव्वभाववंसीहिं। धम्मावस्सगजोगा जेण न हायंति तं कुज्जा ॥ ६७० ॥

व्याख्या—एषः 'आहारविधिः' पिण्डविधिः 'यथा' येन प्रकारेण भणितस्तीर्थकरादिभिस्तथा कालानुरूपस्वमतिविभवेन मया व्याख्यात इति वाक्यशेषः। पश्चार्द्धेनापवादमाह—'धम्मे'त्यादि 'धर्मावश्यकयोगाः' श्रुतधर्मचारित्रधर्मप्रतिक्रमणादिव्यापारा येन 'न हीयन्ते' न हानिं प्रयान्ति तत्कुर्यात्, तथा तथाऽपवादं सेवेतेति भावः। साधुना हि यथायथमुत्सर्गापवादास्थितेन भवितव्य। यापवादमासेवमानस्यायतस्य विराधना साऽपि निर्जराफला, यथा चाह—

जा जयमाणस्स भवे विराहणा सुत्तविहिसमग्गस्स। सा होइ निज्जरफला अज्झत्थविसोहिजुत्तस्स ॥ ६७१ ॥

व्याख्या—यतमानस्य 'सूत्रोक्तविधिसमग्रस्य' सूत्रोक्तविधिपरिपालनपूर्णस्य अध्यात्मविशोधियुक्तस्य, रागद्वेषाभ्यां रहितस्येति भाव, या भवेत् 'विराधना' अपवादप्रत्यया सा भवति निर्जरा फला, इयमत्र भावना-कृतयोगिनो गीतार्थस्य कारणवशेन यतनयाऽपवादमासेवमानस्य या विराधना सा सिद्धिफलदा भवतीति। तदेवं निक्षिप्ते पिण्डपदे भणनाय च, तन्निक्षेपकरणद्वाराभिहितो नामनिक्षेपः तदभिधानाधारभूताः पिण्डनिर्युक्तिरिति।

श्रीमाऊकुलमलङ्कृतिरासीदणहिल्लपत्तने वासी । व्यवहारिवरः साढाभिधान इद्धप्रधानगुणः ॥ १ ॥
जाया मायारहिता मटकूरिति विश्रुताऽस्य दयिताऽभूत् । पुत्राः सुधामसमाः प्रियाऽनयोः कुलकमलस्य धकुः ॥ २ ॥
वरसिंहो जोगाको गोल्लाकश्चेति विदितनामानः । स्वमानयशोमण्डलधवलीकृतसकलदिग्वलयाः ॥ ३ ॥
भक्तिपरास्तेष्वस्यां वरसिंहः सिंहवदिव भुव्यां । श्रीसोमसुन्दरगुरोः पार्श्वेऽवसरे विशुद्धमनाः ॥ ४ ॥
दयितायां वरसिंहव्यवहारिवरस्य देवु कर्पूर्यां । सुतमसूत नाऽऽम्नाती नाम्ना पर्वत इति तनूजं ॥ ५ ॥
वरणूदयितापुत्री मूलूर्नागिनिकिसुश्च दयिता च । स्वसुते हेमतिदेमसिनाम्न्याविति परिकरेण वृतः ॥ ६ ॥
श्रीसङ्घनन्दुषिचन्द्रश्रीमज्जयचन्द्रसूरिराजानाम् । सुकृतोपदेशमनिशं निशम्य सम्यक् सुधादेश्यम् ॥ ७ ॥
श्रीपर्वतवास्तव्यो लक्षमितग्रन्थलेखनप्रवणः । नेत्राम्बरेषुतिथिमितवर्षे १५०२ हर्षेण लेखितवान् ॥ ८ ॥
पिण्डनिर्युक्तिवृत्तिं श्रुतश्रीमनवपचनसन्दर्भाम् । सुमनस्सन्ततिसेव्या गङ्गावदिय च जयतु चिरम् ॥ ९ ॥

इति श्रीपिण्डनिर्युक्तिवृत्तिः समाप्तेति भद्रं भवतु ॥

इति श्रीमद्भद्रबाहुस्वामिप्रणीता सभाष्या श्रीमन्मलयगिर्याचार्यविवृता

## श्रीपिण्डनिर्युक्तिः समाप्ता ॥

इति श्रेष्ठि देवचन्द्र लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ४४